आनन्दाश्रमसंस्कृतग्रन्थावलिः ।
ग्रन्थाङ्कः १२४ ।

श्रीमज्जगद्गुरुशंकराचार्यान्वयसंजाताभिनव–पञ्चगङ्गातीरनि-
वास–कमलानिकेतन–करवीरपीठाधिष्ठितश्रीविद्याशंकरभा-
रतीस्वामि( पं० मारुलकरोपाह्वनरहरिशास्त्रि )प्रणीतो

# धार्मिकविमर्शसमुच्चयः ।

मोऽसौ
वे० शा० सं० रा० मारुलकरोपाह्वरङ्गनाथभट्टात्मजशंकर-
शास्त्रिभिः संशोधितः ।

एतत्पुस्तकं
रावबहादुर इत्युपपदधारिभिः
गंगाधर बापूराव काळे
जे. पी.
इत्येतैः
पुण्याख्यपत्तने
श्रीमन्‌ 'महादेव चिमणाजी आपटे' इत्यभिधेय-
महाभागप्रतिष्ठापिते
आनन्दाश्रममुद्रणालये
आयसाक्षरैर्मुद्रयित्वा
प्रकाशितम् ।
शालिवाहनशकाब्दाः १८६६ ।
ख्रिस्ताब्दाः १९४४ ।



मूल्यं पञ्चाणकाधिकं रूपकद्वयम् ( २-५ ) ।

## विमर्शोपोद्घातः ।

पायादपायाज्जगदीश्वरो नः ।

अथास्मिन् भारते वर्षे यो हि जनुष्मान् स्त्री वा पुरुषो वा शिशुर्युवा जरठो वा रङ्कः श्रीमान्वा कस्कोऽपि भवतु स सर्वोऽपि स्वभावत एव सुखं मे सदा भूयाद्दुःखं कदाऽपि मा भूदिति समभिवाञ्छति । तदिदं सर्वानुभवसिद्धम् । नात्र कस्यापि कश्चिदपि कियानपि विसंवादः । सुखं च द्विविधं लौकिकमलौकिकं चेति । तत्र स्रक्चन्दनवनिताद्युपभोगजन्यं सुखं लौकिकमुच्यते । तच्च क्षणभङ्गुरं दुःखपर्यवसायि चेति स्पष्टमेव । अलौकिकं तु दुःखकणिकयाऽप्यसंस्पृष्टं निरतिशयनित्यानन्दाविर्भावलक्षणं मोक्षावस्थास्थं सुखमभिधीयते । यदा तु दुःखबहुलेऽपि क्षणिकेऽपि च वैषयिकसुखे प्राणिनामहोरात्रं स्थेयान् संरम्भो दरीदृश्यते तदा किमु वक्तव्यं दुःखासंभिन्ने निरतिशयनित्ये च सुखे तेषां समुत्कटेच्छा वर्तत इति । तस्मान्मोक्षावस्थास्थं निरतिशयनित्यानन्दलक्षणं सुखमेवापेक्षते सर्व इत्यवगम्यते ।

पुण्यस्य फलं सुखम् । पापस्य च फलं दुःखम् । सति चैवं लोकव्यवहारसरणौ दृष्टौ महितायामेतद्वैपरीत्यमिव लक्ष्यते । पुण्यस्य फलं सुखं सर्वोऽपि जनः सर्वात्मनाऽभिलषति । किंतु तत्साधनोपाये पुण्ये न कोऽप्यभिमुखः, प्रत्युत पराङ्मुख एवाऽऽलक्ष्यते । तथा पापस्य फलं दुःखं परिजिहीर्षति, तथाऽपि तत्साधने पापेऽभिलाषुकः सन्नित्यमास्थया प्रवर्तत इति महत्सखेदाश्चर्यास्पदम् । तदुक्तमभियुक्तैः—

पुण्यस्य फलमिच्छन्ति पुण्यं नेच्छन्ति मानवाः ।
फलं पापस्य नेच्छन्ति पापं कुर्वन्ति नित्यशः ॥ इति ।

पापं च विहितसंध्यावन्दनादेरननुष्ठानजन्यमपेयादिनिन्दितसेवनोत्थमिन्द्रियानिग्रहोद्भवं चेति बोध्यम् ।

निरुक्तं निरतिशयनित्यानन्दाविर्भावलक्षणं सुखं शरीरत्रितयाद्आत्मोद्धारमन्तरा लब्धुमशक्यम् । 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति । अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' (छा० ८ । १२ । १) इति श्रुतेः । यावच्छरीरं वैषयिकसुखदुःखयोरपहतिरुच्छित्तिर्नैव भवतीति न ह वै, इत्यस्यार्थः। अशरीरमित्यस्य तु तत्त्वतो विदेहं सन्तमात्मानं वैषयिकसुखदुःखे नैव स्पृशतः ।

बाधेत्यधारणादित्यर्थः। शरीरत्रितयं च स्थूलसूक्ष्मकारणसंज्ञकं पञ्चकोशात्मकम्। तत्र पञ्चीकृतपञ्चमहाभूतसंभवः प्रत्यक्षतो दृश्यमानः करचरणादिमान् स्थूलो देहः। सोऽयमन्नमयकोशः। ज्ञानेन्द्रियपञ्चकं कर्मेन्द्रियपञ्चकं प्राणपञ्चकं मनो बुद्धिश्चेत्येतैर्मिलितः सप्तदशावयवः सूक्ष्मो देहो लिङ्गदेह इत्यप्युच्यते। सोऽसौ प्राणमयमनोमयविज्ञानमयेतिकोशत्रयघटितः। कारणदेहस्तु मलिनसत्त्वप्रधानाऽविद्यैवोच्यते। अयमानन्दमयकोश इति भण्यते। तादृशशरीरत्रितयादात्मनः समुद्धरणमेव नित्यानन्दाविर्भावलक्षणो मोक्ष इत्यभिधीयते। तदुक्तं पञ्चदश्यां विद्यारण्याचार्यैः—

यथा मुञ्जादिषीकैवमात्मा युक्त्या समुद्धृतः।
शरीरत्रितयाद्धीरैः परं ब्रह्मैव जायते॥ इति।

आत्मनः समुद्धरणं च तत्तच्छरीरेषु या मदीयताबुद्धिस्तत्त्यागरूपम्। तत्र स्थूलशरीरेषु या तत्तज्जीवस्य मदीयता सा तादृशदेहप्रापकप्रारब्धकर्मसमाप्तौ त्यज्यते। तदेव मरणमित्युच्यते। तथा लिङ्गदेहप्रापकप्रारब्धकर्मसमाप्तौ यस्तादृशदेहगतमदीयतात्यागः स लय इति प्रसिद्धः। कारणदेहे च मदीयतात्यागस्त्वतीव दुर्घटः। स चाऽऽत्मज्ञानैकसाध्यः। आत्मज्ञानेन कारणशरीरगतदोषापगमे सति तत्र मदीयतात्यागः सुलभो जायते। दोषापगमार्थं च दोषज्ञानमावश्यकम्। अन्यथा तदुच्छेदो दुष्करः। परं तादृशदोषज्ञानवन्तो जनाः सुतरां विरलाः। तदुक्तम्—

नीतिज्ञा नियतिज्ञा वेदज्ञा अपि भवन्ति शास्त्रज्ञाः।
ब्रह्मज्ञाश्च भवन्ति स्वाज्ञानज्ञानिनो जना विरलाः॥ इति।

अत एव च मदीयतात्यागो दुर्घट इत्युक्तम्। कारणशरीरगतदोषश्चानाद्यविद्याविषयकं स्वाज्ञानमेव। तादृशात्मज्ञानं च लिङ्गशरीरगतदोषापगमे सति जायते। 'कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते' इति स्मृतेः। साधितश्चायमर्थः 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' (ब्र० सू० ३। ४। २६) इति सूत्रे भाष्यकारैः। लिङ्गशरीरगतो दोषश्च मुख्यः कामसंज्ञकः। स एव ह्यात्मज्ञानप्रतिबन्धकः। तदुक्तं गीतायाम्—

काम एष क्रोध एष रजोगुणसमुद्भवः।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम्॥ (गी० ३। ३७) इति।

सत्येवं पाञ्चभौतिकस्थूलशरीरगतवातपित्तकफावस्थानवैषम्यमूलकज्वरादिदोषनाशकं यथा वैद्यशास्त्रं तथा लिङ्गशरीरगतदोषापहं वैद्यकं कर्मकाण्डशास्त्रम् । कारणशरीरगतदोषापनायकं च ज्ञानकाण्डशास्त्रम् । तदुक्तम्—

वैद्यकं लिङ्गदेहस्य वेद एवोच्यते बुधैः ।
तथा कारणदेहस्य वेदान्तो वैद्यकं स्मृतम् ॥ इति ।

तादृशवेदगतश्रुत्यर्थनिर्णयाय श्रीजैमिनिव्यासमुनिभ्यां द्वे मीमांसे अवातारिषाताम् । तत्र कर्मकाण्डगतश्रुत्यर्थनिर्मलत्वाय प्रवृत्तं पूर्वमीमांसाशास्त्रमभिधीयते । ज्ञानकाण्डगतश्रुत्यर्थनिर्मलत्वाय च प्रवृत्तं वेदान्तशास्त्रमुत्तरमीमांसाशास्त्रमिति च गीयते ।

प्रस्तुतौ द्वौ बादरायणजैमिनिमुनी श्रुतिवाक्यानां समन्वयपूर्विकां योजनां कृत्वा परस्परविरोधपरिहारपूर्वकं तत्तात्पर्यार्थाविष्करणेऽतिमात्रं निपुणतरौ स्तः । अत एवाक्षपादादिप्रणीते शास्त्रे यथा विरुद्धोंऽशः कियानपि लक्ष्यते न तथा पूर्वोत्तरमीमांसाशास्त्रयोः कश्चनापि विरुद्धोंऽशो विद्यते । तदुक्तमभियुक्तैः—

अक्षपादप्रणीते च काणादे सांख्ययोगयोः ।
त्याज्यः श्रुतिविरुद्धोंऽशः श्रुत्येकशरणैर्नृभिः ॥
जैमिनीये च वैयासे विरुद्धोंऽशो न कश्चन ।
श्रुत्या वेदार्थविज्ञाने श्रुतिपारंगतौ हि तौ ॥ इति ।

निरुक्ते वेदान्तशास्त्रे पूर्वमीमांसाशास्त्रे च श्रीव्यासजैमिनिमुनिभ्यां जगदुद्धारार्थं मुख्यतः किं तत्त्वं प्रतिपादितं तस्य सुखेप्सूनां दुःखपरिजिहीर्षूणां च मानवानां कियताऽप्यंशेन बोधो भूयादित्यनुसंधाय श्रीमज्जगद्गुरुकरवीरपीठस्थश्रीमदाचार्याः ( पण्डितमारुलकरोपाह्वनरहरिशास्त्रिणः ) पूर्वोत्तरमीमांसाशास्त्रे तदङ्गभूतन्यायादिशास्त्रे च कृतभूरिपरिश्रमाः सन्तश्चत्वारिंशत्संवत्सरान्यावदध्ययनाध्यापनद्वारा दृढं व्यासङ्गं विधाय परिपूर्णाविचारान्ते शास्त्रीयदुर्बोधभाषाजालजटिलत्वं विहाय सरलया सुगमया सरसया मार्मिकपाण्डित्यभरितया च सुरभारत्याऽमुं धार्मिकविमर्शसमुच्चयं प्राणैषुः ।

यद्यपि पूर्वोत्तरमीमांसाशास्त्रोपरि शबरस्वामिभिः श्रीशंकराचार्यैरन्यैस्तत्तद्दक्षैः पण्डितधुरीणैः कुमारिलभट्टानन्दगिरिप्रभृतिभिश्च भाष्यतद्व्याख्यानादयो बहवो निबन्धा व्यरचिषत । अथापि तेषामतिविशालत्वाच्छास्त्रीयगहनभाषान्यायजालगुम्फितत्वाद्गभीरतरविचारसंदब्धत्वाच्च प्राचीनरीत्या गुरुपरम्परया साम्रतदध्ययनमन्तरा नैव ते सामान्यजनानां बोधायालं भवेयुः ।

वेदानुयायिनां मुख्यं कर्तव्यमिदमेव यदस्मिन्विकराले प्राचीनसंस्कृति—धर्माचरण-शास्त्राध्ययनादीनां सर्वथाह्रासकारके जीवनकलहैकप्रधाने कलिकाले शंकराचार्याणां शबरस्वामिनां च मतस्य परिरक्षणम्। रक्षणं च न तद्ग्रन्थानां धूल्यपनयनपुरःसरं गन्धपुष्पादिभिः पूजनम्। किंतु ग्रन्थान्तर्गतमलापसारणेन निर्मलीकरणं तत्। यद्यपि ते भाष्यादिग्रन्थाः स्वत एव निर्मलाः। निर्मलस्वान्तैस्तैस्तैराचार्यैः प्रणीतत्वान्न तदन्तरणुमात्रमपि मल आलक्ष्यते। तथापीतरैरितरमतानुयायिभिर्युक्त्याभासप्रमाणाभासाद्यवलम्बनेन स्थले स्थले भाष्यादिग्रन्थेष्वाक्षेपान् गृहीत्वा तत्र मलोऽस्तीति लोकानां यदवभासितं तानाक्षेपान्व्यावहारिकयुक्तिप्रयुक्त्यादिभिः संखण्डच्य स्वतः सिद्धं भाष्यादिग्रन्थानां निर्मलत्वं लोकान्प्रति प्रत्याय्य भाष्यकारविषये जनानां मनसि विद्यमानायाः श्रद्धायाः परिवर्धनेन दृढीकरणमिदमेव तन्मतपरिरक्षणमहं मन्ये। अमुमेवार्थं मनस्यनुसंधायेव श्रीनिरुक्तनामधेयपण्डितैः प्रायशः परकृतानाक्षेपाननूद्य लौकिकदृष्टान्तयुक्तिप्रयुक्त्याद्यनेकविधप्रमाणैः क्रमेण संखण्डच्य च भाष्यार्थस्य युक्तियुक्तत्वं सरलार्थत्वं च प्रस्थापितमस्मिन्।

त एते विमर्शाः सर्वे मयाऽऽमूलाग्रं निरीक्षिताः। नात्र किंचिदप्यमूलं लिखितं दृश्यते। तथाऽत्र प्रतिपादितः प्रत्येकमर्थो व्यवहारप्रचलितमातृभाषावद्धितकारिणीमृज्वीं सुगमावबोधां च पदवाक्यसंदर्भयोजनां विधाय व्यावहारिकदृष्टान्तदार्ष्टान्तिकाद्यनेकयुक्तीः प्रदर्श्य च तथा स्पष्टीकृतो यथाऽनायासेनैव वाचकानां मनस्युपारूढो भवेत्। नेदं कस्यचिद्ग्रन्थस्य केवलं भाषान्तरमिति मन्तव्यम्। अपि तु सर्वमिदं साधारं युक्तियुक्तं च भूत्वा स्वानुभवेनोपबृंहितमस्ति। समुच्चयेऽस्मिन्नात्मतत्त्व—द्वैताद्वैत—वेदापौरुषेयत्व-धर्मविमर्शादयः पञ्चषाः सप्ताष्टा वा एव विमर्शाः प्राधान्येन समुज्जृम्भन्ते। आत्मोद्धारादयः संध्योपासनान्ताः पुनस्तदङ्गतया तदुपोद्बलकत्वेन विराजन्त इति बोध्यम्। एवं प्रकारेण विमर्शानारचय्य लोकानां स्वीयज्ञानलाभप्रदानेन जगदुपरि महानुपकारः कृतः। तेन मन्येऽहं श्रीशसेवेव देशसेवाऽपि व्यधायि श्रीमदाचार्यैरिति। एतेषां पण्डितवर्याणां श्रुतिशास्त्रप्रवीणः शिष्यवर्गः क्वचित्संस्कृतपाठशालास्वाङ्ग्लविद्यालयेषु बहुजनसमाजेषु च प्रवचनद्वारा जनानामात्मनो ज्ञानस्य लाभं ददान आस्ते। एभिरेव श्रीपण्डितैः शाके १८३८ संवत्सरे 'नारायणीयधर्म—गीतातात्पर्यनिर्णयः' नाम सार्धशतसंख्यपृष्ठात्मको ग्रन्थोऽलेखि। स च पण्डितमान्यो मुद्रितश्चास्ति। किंचैतत्सदृशाः पनरन्ये पञ्चचत्वारिंशद्विमर्शा नैकविधविषयोपरि गीर्वाणवाण्यां

ऽयाख्यानप्रदानोपयुक्ता वक्तृत्वोत्तेजकाश्च लिखित्वा परिपूर्णाः संजाता वर्तन्ते। अग्रे च तल्लेखनं प्रचलितमस्त्येव। तेषु प्रत्येकं विमर्शः पञ्चषपृष्ठात्मकः। मिलित्वा सार्धशतद्वयीसंख्यपृष्ठानि भवेयुः। ते चापि यथावकाशं प्रकाश्येरन्। अर्थादयं तस्य प्रथमो भागो भविष्यति।

तदेवं चिरराज्रायातिवेलं तदासक्तिं विधाय तदेकतानेन मनसा सुविचार्य च करवीरपीठस्थश्रीमदाचार्यैर्लिखितोऽयं विमर्शसमुच्चयो जनानां सुखेनाऽऽत्मतत्त्वादिबोधोदयायालं स्यादित्यमुं संग्राह्य वारं वारं समभिवाच्य चाऽऽत्मोत्कर्षः साधनीयः सुखाभिलाषुकैर्जनैः।

ननु सत्यमिदमात्मोत्कर्षः साधनीय इति। किंतु स शांकरभाष्याद्यभ्यसनेनैव साधयितुं शक्य इति कृत्वा किमर्थमयं पुनरस्थान एवापूर्वः प्रयास इति चेद्भ्रान्तोऽसि। तथा हि—

अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्।
इष्टस्यार्थस्य संसिद्धौ को विद्वान्यत्नमाचरेत्॥

इति न्यायेन सफलोऽयं श्रीमदाचार्याणां समुद्योग इति मन्ये। किंच—

कृतकृत्या हि भाष्याद्यैरमी यत्नो न तत्कृते।
किंतु ये शिक्षिताः किंचिद्बुद्धिमन्तोऽपि संस्कृते॥
परं श्रीव्यासजैमिन्योर्मतं किं तद्बुभुत्सवः।
सन्ति, गीर्वाणभाषायां निरुक्ताविषयोपरि॥
विनाऽऽयामेन व्याख्यानं दातुं चाभिलषन्ति ये।
संक्षिप्यायं विमर्शौघस्तदुद्देशेन निर्मितः॥ इति।

अथेदं न विस्मरणार्हम्। यच्चतुर्गुणमूल्यप्रदानेनापि दुर्मिललेखनाधारपत्र एतादृशसमर्घेऽपि काले यया विमर्शसमुच्चयमुद्रणायावकाशः प्रदत्तः, नूनं महाभागैषाऽऽनन्दाश्रमसंस्था। शतशो धन्यवादार्हाश्च खल्वेतत्संस्थाध्यक्षा व्यवस्थापकाश्च। किं बहुना श्रीमदाचार्यप्रारिप्सितेशदेशसेवायाः सुमहदविस्मरणार्हं च साहाय्यकमाचरितं श्रीमत्याऽऽनन्दाश्रमसंस्थयेति च विमर्शकृतामाचार्याणामाशयं विनिवेद्यैतद्विमर्शौघस्य समभ्यसनेन प्रभवन्त्वात्मोद्धाराय स्पृहयन्तु च निरतिशयसुखाय सकला जना इत्याशास्ते—

गोडबोलेइत्युपाह्वश्रीरामशास्त्रितनुजन्मा—गणेशशास्त्री।
( पुण्यपत्तनस्थसंस्कृतपाठशालामुख्याध्यापकः )।

---

अथास्मिन्मुद्रितानां विमर्शानामनुक्रमतः प्रारम्भ-
पृष्ठाङ्कसहितो नामनिर्देशः ।



समाप्तिमगमदयं मुद्रितविमर्शानां प्रारम्भपृष्ठाङ्कसहितो
नामनिर्देशः ।

---

ॐ तत्सद्ब्रह्मणे नमः ।

श्रीमज्जगद्गुरुशंकराचार्यान्वयसंजाताभिनवकमलानिकेतनकरवीरपीठाधिष्ठित-

श्रीविद्याशंकरभारतीस्वामि(प. मारुलकरोपाह्वनरहरिशास्त्रि)प्रणीतो-

# धार्मिकविमर्शसमुच्चयः ।

( तत्राऽऽदौ गणेशोपासनविमर्शः )

सदा बालरूपाऽपि विघ्नाद्रिहन्त्री
महादन्तिवक्त्राऽपि पञ्चास्यमान्या ।
हरिब्रह्ममृग्या गणेशाभिधा मे
विधत्तां श्रियं काऽपि कल्याणमूर्तिः ॥१॥ ( शंकराचार्याः )

अथास्मिन् भारतवर्षे कमलासनस्य मानसकन्यकाभ्यां तेनैव परिणीतेन प्रदत्ताभ्यामृद्धिबुद्धिभ्यां समेता निःशेषविघ्ननिरासपूर्वकेष्टफलप्रदात्री सच्चिदानन्दमयब्रह्मणः सगुणमूर्तिस्वरूपा श्रीगणेशाभिधाना सर्वश्रेष्ठा देवताऽनादिकालादारभ्य सुरासुरनरैः समस्तैर्व्यस्तैश्च समुपास्यमाना समुज्जृम्भते । तथा हि—अयं स्वप्रपन्नेभ्यः पुरुषार्थचतुष्टयप्रदानशीलैश्चतुर्भिः करैरुपेतः, भक्तकृतानेकविधापराधानिगरणसमर्थविशालोदरविराजितः सुगन्ध्यारक्तचन्दनानुलिप्तसर्वाङ्गः, तथाविधसुमनोमालाविभूषितकण्ठबाहुदण्डः सौवर्णकिंकिणीयुक्तनवरत्नखचितमेखलालंकृतकटिः स्वर्णयज्ञोपवीती कस्तूरीतिलकालंकृतभालस्थलः सिञ्जन्मणिमञ्जीराञ्चितचरणकमलः, तरुणारुणभास्वरदेहः शूर्पकर्णः शुण्डादण्डविराजमानो मूषकवाहनोऽपि भक्तकामकल्पद्रुमः, गजमुखो देवदेवः, त्रिपुरासुरं विजेतुकामेन महादेवेनाऽऽदौ ध्यातः, असुरराजस्य बलेर्दमयित्रा विष्णुना समुपासितः, जगत्सर्जनेच्छुना ब्रह्मदेवेन सादरमर्चितः, वसुंधरां शिरसा धर्तुकामेन पन्नगराजेन सप्रश्रयमसकृन्नमस्कृतः, महिषासुरप्रमथने भवान्या मनसा संस्मृतः, सिद्धादिभिर्मुक्त्यर्थं शरणीकृतः, विश्वविजित्यै पञ्चबाणेनापि यथाविधि संपूजितः । इत्थं जगदुत्पत्तिस्थितिलयकर्तृणैर्महामहिमशालिभिरपि देवैः स्वस्वेष्टसिद्धये यथायथं समर्चितस्यास्य श्रीगणेशदेवस्योपासनं 'कलौ चण्डीविनायकौ' इति वचनतोऽस्मिन् कलिकाले तूर्णमिष्टफलसाधकं मानवानामिति निःसंदेहं सिध्यति ।

परमेतदुपासनं श्रद्धापुरःसरं यथाशास्त्रमपेक्षितम् । "उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पना" इति वचनानुसारं परब्रह्मण एवेयं साकारा मूर्तिर्गजाननो देवः । सोऽस्माकमुपासकानामैहिकामुष्मिकयोरभ्युन्नत्योः प्रदाता, इति विश्वस्य सात्त्विकेन मनसा तस्य समर्चनं यथाविभवं कर्तव्यम् । महर्षिव्यासविरचिते गणेशपुराणेऽस्य गणेशोपासनस्य नैकविधाः प्रकारा वर्णिताः । तथा तेन तदुपासनेन

केन केन किं किं फलं लब्धमित्यपि संकथितम् । विष्णुप्रभृतिभिर्देवैर्ऋषिभिश्च कृतानि भक्त्या पठनादेवेष्टप्रदानि रमणीयानि गणेशदेवस्य स्तोत्राण्यपि तत्र विद्यन्ते । मङ्गलमूर्तेर्देवस्य मौलिकं स्वरूपं कीदृक् । भक्तमनोरथसिद्ध्यर्थं तेन परमात्मना देवेन कानि कानि सगुणस्वरूपाणि प्रकटीकृतानि । शिवपुत्रत्वं कश्यपादित्योर्नन्दनत्वं कुतोऽङ्गीकृतम् । दैत्यानां विनाशः कथं कृतः । जगन्मङ्गलकारिकाः क्रीडाः कुत्र कृताः । गजाननत्वं भालचन्द्रत्वमेकदन्तत्वं बृहदुदरत्वं मूषकवाहनत्वं दूर्वाप्रियत्वं मोदकलड्डुकाद्यत्तृत्वं कस्मात् स्वीकृतम् । तस्य तात्पर्यं च किमित्यादिकं सर्वं व्यासमहर्षिभिर्दिव्यदृष्ट्या साक्षात्कृत्य लोकोद्धाराय मनोहरपद्धत्या गणेशपुराणे सविस्तरं निरूपितम् । विस्तरभयान्नेहोच्यते । जिज्ञासा चेत्ततोऽधिगन्तव्यम् । अथापि दिङ्मात्रमत्रोच्यते ।

तथा हि—पुराकाले कर्दमो नाम राजन्योऽस्मिन् भारतवर्षे सम्राडासीत् । एकदा तस्य सभायां तं द्रष्टुं भृगुऋषिः समागतः । आगतं तं प्रश्रयेण प्रणम्य स्वासने समुपवेश्य यथाविधि सत्कृत्य केन पुण्यविशेषेणेदं निःसपत्नं सार्वभौमत्वं मया लब्धमिति तेन राज्ञा पृष्टः स भृगुऋषिर्दिव्यदृष्ट्या क्षणं विमृश्य तमित्थमवोचत् । राजन्, त्वं पूर्वस्मिन् जन्मनि क्षत्रकुले जातजनिरपि दारिद्र्याक्रान्तः कुटुम्बपोषणेऽप्यसमर्थः सन्नेकदा भाग्यवशात् संजातदर्शनं सौभरिमृषिं दारिद्र्यनिरसनस्योपायं विनयेन पृष्टवानसि । स महात्मा ‘ गणेशोपासनमनुतिष्ठस्व ’ इति त्वामुक्तवान् । तदा कोऽसौ गणेशः किंशीलः किंस्वरूपः किंकर्मा कथमुत्पन्नस्तदेतत्सर्वं सप्रपञ्चं मे कृपया कथयेति तेनोक्तः सौभरिरित्थं प्रतिपादयामास—

यद् ब्रह्म नित्यं विरजं विशोकं ज्ञानस्वरूपं परमार्थभूतम् ।
अनादिमध्यान्तमनन्तपारं गणाधिपं तं प्रवदन्ति सन्तः ॥ १ ॥
यस्मादोंकारसंभूतिर्यतो वेदा यतो जगत् ।
येन सर्वमिदं व्याप्तं तं विद्धि गणनायकम् ॥ २ ॥ इति ।

ततो यथाविधि तदुपासनजपुण्येन त्वमस्मिन् जन्मनि सम्राड् जातोऽसि । इति भृगुमहर्षिस्तं कर्दमं महाराजमुक्त्वा गजाननोपासनं चोपदिश्य यथेष्टं स्थानमगमत् । अत्रेदं विचार्यते—

“ युगे युगे भिन्ननामा गणेशो भिन्नवाहनः ।
भिन्नकर्मा भिन्नगुणो भिन्नदैत्यापहारकः ॥ १ ॥

सिंहारूढो दशमुखः कृते नाम्ना विनायकः ।
तेजोरूपी हतौ येन देवान्तकनरान्तकौ ॥ २ ॥

त्रेतायुगे बर्हिरूढः षड्भुजोऽप्यर्जुनच्छविः ।
मयूरेश्वरनाम्ना च सिन्धुदैत्यविनाशकः ॥ ३ ॥

द्वापरे रक्तवर्णोऽसावाखुरूढश्चतुर्भुजः ।
गजानन इति ख्यातः सिन्धुरासुरघातकः ॥ ४ ॥

कलौ तु धूम्रवर्णोऽसावश्वारूढो द्विहस्तवान् ।
धूम्रकेतुरिति ख्यातो म्लेच्छानीकविनाशकः ॥ ५ ॥

इति गणेशपुराणे क्रीडाखण्डस्य प्रथमाध्याये कृतादियुगभेदेन दशभुजषड्भुजचतुर्भुजद्विभुजोपेतस्य सिंहारूढभास्वरवर्णस्य बर्ह्यारूढशुक्लवर्णस्य मूषकारूढरक्तवर्णस्याश्वारूढधूम्रवर्णस्य भिन्नभिन्नदैत्यविघातकर्तुर्विनायकमयूरेश्वरगजाननधूम्रकेत्विति तत्तन्नाम्नो गणेशस्योपास्यतयोपदिष्टत्वात्–अश्वारूढं द्विभुजं धूम्रकेतुनामानं देवं विहाय मूषकारूढश्चतुर्हस्त एकदन्तो बृहदुदरो रक्तवर्णः शूर्पकर्णो लसच्छुण्डादण्डो वक्रतुण्डो गजाननः कुतोऽस्मिन्कलावुपास्यत इति चेत् । अत्रोच्यते । कृतत्रेतयोरधिकृतौ विनायकमयूरेश्वरावत्तारावतीतौ । तौ तयोरेव युगयोः क्रमेण पूज्यौ । अश्वारूढो म्लेच्छविनाशको धूम्रकेतुरवतारः कलेश्वरमसमये भविता । तदवधि मूषकारूढस्य रक्तवर्णस्य चतुर्भुजयुतस्य शुण्डादण्डविराजितस्य गजमुखस्यैव देवस्याधिकारः । अतः सांप्रतं गजाननमूर्तिः परमेश्वर एव भूतिकामैः सर्वथाऽभ्यर्चनीय इति रहस्यम् ।

यथाशास्त्रमनुष्ठितेनोपासनेन प्राप्यमाणोऽभ्युदयो निःश्रेयसानुकूलो भवति । न जात्वपि तत्प्रातिकूल्यं धत्ते । उच्छास्त्रपौरुषेणाऽऽसादितमैश्वर्यं त्वधर्ममनीतिं च वर्धयति । तेनान्ततः स्वेन इतरैश्च दुःखमेव प्राप्यते । ऐश्वर्यं वा आस्तां सत्ता वा भवतु स्वयं सुखं दातुमसमर्थे ते । सात्त्विकबुद्ध्या तयोः सद्विनियोगश्चेदेव ताभ्यां सुखं भविष्यति । सुखप्रयोजिकेयं सात्त्विकी बुद्धिर्निखिलसद्गुणनिधेः परमेश्वरस्य यथाविध्युपासनेनैव प्राप्या । अस्याः सात्त्विकबुद्धेर्वरप्रदानं न चेदैश्वर्यादिना मत्तो जनः पृथग्जनगर्हितमपि कुत्सितमकार्यं कर्तुं साहंकारं प्रवर्तते । ततोऽस्य मतिर्नितरां दुष्टा भवति । युक्तो विचारस्तस्य चित्ते नैव स्फुरति । अन्ते बुद्धिनाशात् प्रणाशमेवानुभवति स मदमत्तो जनः । सांप्रतमस्यानुभवः सर्वत्र न्यूनाधिकभावेन प्रतिपदमागच्छत्येव । प्रतिव्यक्तेः सामुदायिकस्य वा मिथो व्यवहारस्य

धर्माधिष्ठानाभावादेकस्योत्कर्षे सिद्धेऽपरोऽत्यन्तं संतप्यते । प्रमत्तं धनिनं विलोक्याकिंचना द्विषन्ति । धनी सात्त्विको दीनबन्धुश्चेन्न द्विषन्ति दरिद्राः । जागतिकव्यवहारस्य वेदधर्माधिष्ठानं चेदेवाऽऽधिक्येनानिष्टस्यासंभव ऊहितुं शक्यः । सर्वतः सुखिनां जनानां यदीयं भगवदुपासनाबुद्धिर्जायेत तर्ह्येव जनतायाः कुशलस्य समधिकः संभवोऽस्ति । अकिंचनानां रोगिणां विपद्ग्रस्तानामेव च प्रायश उपासनाबुद्धिर्जायते । ततस्ते भगवदुपासनं कुर्वन्त्यपि । परं तेषां तत्तद्विपत्तौ भगवत्कृपया निरस्तायां तया सह तेषां सा उपासनाऽपि निरस्ता भवति । सर्वथा सुस्थितिरेव धर्मश्रद्धायाः परीक्षानिकषोपलो वर्तते । सुखिनो जनस्य स्वसुखे निरभिलाषश्चेत्तत्र नियतमौदार्यभावना कृतपदेति ज्ञेयम् । अत्युदारः पुमाँल्लोककल्याणार्थं खिद्यते । नाऽऽत्मसुखार्थम् । तदुक्तं कविकुलचूडामणिना कालिदासेन—

‘ स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः
प्रतिदिनमथवा ते वृत्तिरेवंविधैव ।
अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं
शमयति परितापं छायया संश्रितानाम् । इति ।

श्रीयदेशादेरभ्युदयेच्छा चेत् सोऽभ्युदयः समधिकोदारभावनामूलकशास्त्रोपदिष्टधर्माचरणेनैव भवितुं शक्यः । अनुकूलायाः परिस्थितेर्विद्यमानत्वात् प्रशस्तधनवद्भिः पुंभिरेव साङ्गोपाङ्गमुपासनं कर्तुं पार्यते न तथाऽन्यैरिति बोध्यम् । यदाऽस्मिन् भारते वर्षे स्वधर्मनिरताः प्रजापालनदक्षा राजानो राज्यकर्तार आसंस्तदा सनातनार्यसंस्कृतिसुसंस्कृतानां जनानामैहिकामुष्मिकश्चोत्कर्षः सम्यक्तया अभवत् । इदानीं तु पारक्याः संस्कृतेर्दुष्टच्छायायां चिरायोपविष्टस्य भारतस्य स्वधर्मपरिपालनं तु नास्त्येव । प्रत्युताधर्मस्याभ्युत्थानं सवेगं प्रवृत्तमवलोक्यते ।

अमङ्गलादमङ्गलोत्पत्तिरपरिहार्येति नियमात्परकीयसंस्कृतेर्दास्यान्नास्तिक्यस्य धर्मविपर्यासस्य स्वैराचारस्य च बाहुल्यं जातमस्ति । ‘ तीर्थानि गुप्तरूपाणि देवतायतनानि च ’ इति गणेशपुराणोक्तेः सांप्रतं प्रत्ययः समागच्छति । तीर्थक्षेत्रदेवतायतनादिषु सत्ताधीशकृतमाक्रमणं स्याच्चेत्तीर्थानि दैवतानि चान्तर्हितानि भवेयुरिति भविष्यपुराणीयवाण्याः सत्यत्वमनुभूयते । अस्यानर्थस्य परिहारो गजाननप्रमुखदेवतानां तीव्रतरोपासनयैव भवेदिति कलिवर्णने व्यासमहर्षिणोपदिष्टत्वात्तदाचरणेनेयमापत्तिर्निरस्ता स्यादेवेति विश्वासः । तात्पर्य—कलिकालेऽस्मिन् स्वस्मिन्राष्ट्रे देशे च परमेश्वरस्यानुग्रहो भाव्यः । जनतया स्वधर्मेण नीत्या च वर्तितव्यमिति दृढा मनीषा चेन्मङ्गलमूर्तेर्गजाननदेवस्य यथाशास्त्रं समर्चनमेव

कार्यं जनसमूहेन । भक्तवत्सलोऽयं मङ्गलमूर्तिर्देवः सर्वेषां भव्यं विधास्यति । यतः 'न मे भक्तः प्रणश्यति' इति दयानिधेस्तस्य प्रतिज्ञा वरीवर्तीत्यावेद्यालं कुर्मः । इति शम् ।

## ( आत्मतत्त्वविमर्शः )

अथ समुज्जृम्भते किलास्मिन्भारते वर्षे श्रीमदरविन्दलोचनगोविन्दपादारविन्दाविर्भूतमन्दाकिनीव विशालविषयाटवीवलयनद्धदुःखदावानलजटालज्वालाभीषणसंतापत्रयसंतापितजीवजातमुद्धरन्ती चराचरप्रपञ्चविवर्ताधिष्ठानभूतपरब्रह्मणः सकाशान्निःश्वसितलीलयाऽऽविर्भूतशब्दब्रह्माभिधवेदराशिमूर्धन्या नितान्तनिर्मलस्वान्तस्वान्तेवासिनः स्वस्वरूपयाथात्म्यप्रकाशनेन निरतिशयानन्दं गमयन्ती भगवत्युपनिषद्वाणी ।

यां किल निःशेषानर्थव्रातनिबर्हणपूर्वकपरमकल्याणप्रदात्रीं वाणीमवलम्ब्य सकलतत्त्वपारंगतो भगवान्बादरायणस्तदर्थाविष्करणबद्धपरिकरं चतुरध्यायं ब्रह्ममीमांसाशास्त्रं सूत्रैरारचयांचकार । भगवत्पूज्यपादश्रीमच्छंकरगुरवश्च तत्तद्दुर्मताभिमानग्रहगृहीततया विपरीतार्थग्राहिभिर्भर्जितानीव तानि सूत्रबीजान्युपादाय गभीरन्यायसंदृब्धेन प्रसन्नेन भाष्यवारिणा समासिच्य दशोपनिषद्भाष्यं भगवद्गीताभाष्यं चेति प्रस्थानत्रयमारचय्याद्वैतवेदान्तशास्त्रमङ्कुरतामापादयामासुः ।

यदा हि खरतरनखरकोटिविदारितमत्तमतंगजगण्डभित्तिः पञ्चास्य इव वादिदिग्गजान् कान्दिशीकान् कुर्वन्नन्वर्थनामा श्रीशंकरस्तत्रभवत्योपनिषद्व्या मन्दिरान्तः प्रविष्टः समालिङ्गितस्तदा यो ह्यस्या भावः समजनि तमानन्दमयं भागं शारीरकभाष्यव्याख्याता ब्रह्मविद्याभरणकारः स्वीयनिबन्धारम्भे मङ्गलं विधास्यन्नित्थमवर्णयत्--

> शंकराश्लेषविलसदानन्दामृतनिर्भराम् ।
> विश्वोत्तंसितपादाब्जां ब्रह्मविद्यां नमामि ताम् ॥ इति ।

संक्षेपशारीरकप्रणेतारः सर्वज्ञात्ममुनयोऽपि भगवत्या उपनिषद्व्याः स्वार्थसमन्वितताभित्थमाहुः—

> वक्त्रागमासाद्य यमेव नित्या
> सरस्वती स्वार्थसमन्विताऽऽसीत् ।
> निरस्तदुस्तर्ककलङ्कपङ्का
> नमामि तं शंकरमर्चिताङ्घ्रिम् ॥ इति ।

सेयमुपक्रमोपसंहारादिषड्विधवाक्यतात्पर्यनिर्णायकलिङ्गैः सुस्पष्टमात्मतत्त्वमुद्दि-

रन्ती भगवती ब्राह्मी भारती सूक्ष्मतरार्थावलोकनयोग्यतावतामपीन्द्रियाणां 'पराञ्चि खानि व्यतृणत्स्वयंभूः' इत्यादिश्रुतेः पराकृत्वस्वाभाव्येन मनसश्च कामक्रोधादिभिर्दुर्दान्तैः शत्रुभिः समाक्रान्ततया विविधविषयलोलुपस्यात एवाम्भोभ्रमादम्भोभ्रमान्तरं परिपतितकीट इव दुःखार्णवमग्नस्य जीवसार्थस्य दुरवगाहेति तत्सुखावबोधाय तत्रभवत्या उपनिषद्वाण्याः स्वरूपं यथामति समासतः परिदर्शयामः ।

तत्राऽऽदाविदं विचारसरणिमारोहति । शक्त्या योगेन वा कमर्थं ब्रूत उपनिषच्छब्दः । अर्थादुपनिषच्छब्दस्य मुख्यममुख्यं वाऽभिधेयं किं तस्याः प्रमेयं किं प्रमेयावगतेः प्रयोजनं किमित्यादि ।

तत्रोपनिषच्छब्दार्थनिर्वचनमुपदेशसाहस्र्यामाचार्यैरित्थमुपदिष्टम्—

सदेरुपनिपूर्वस्य क्विपि चोपनिषद् भवेत् ।
मन्दीकरणभावाच्च गर्भादेः शातनात्तथा ॥ १ ॥ इति ।

'षद्लृ विशरणगत्यवसादनेषु' इति स्मृतेः शिथिलीकरणप्रापिनाशेति त्रयार्थकस्योपनिपूर्वकस्य षद्लृधातोः क्विबन्तस्य रूपमिदमुपनिषद्, इति । तथा च नितरां सादयति शिथिलयति स्थूलसूक्ष्मप्रपञ्चमिति वा नितरामुप समीपं सादयति प्रापयति परमात्मन इमं जीवमित्यथवा नितरां सादयति विनाशयति सविलासाज्ञानमिति व्युत्पत्त्या जन्मजरारोगमरणाद्यनेकानर्थव्रातप्रयोजकमहामोहविध्वंसपूर्वकस्वस्वरूपाविर्भावसंपत्त्या परमानन्दप्रापिका या 'अथ परा यया तदक्षरमधिगम्यते' इति मुण्डकोपनिषदभिहिता परा विद्या सोपनिषच्छब्देनाभिधीयते । एवंभूतविद्यायाः प्रतिपादकं ग्रन्थं लक्षणया वृत्त्या ब्रूत उपनिषच्छब्दः ।

अर्थनिर्वचने हि शब्दस्य द्वे वृत्ती वर्तेते । एका शक्तिरपरा लक्षणा च । तत्र शक्तिवृत्त्या यमर्थं शब्दो वक्ति स शब्दस्य मुख्योऽर्थ इति प्रसिद्धं शास्त्रे लोके च । यं चार्थं लक्षणया बोधयति स लाक्षणिक इत्यमुख्य इति च प्रसिद्धिः । यथा गङ्गायां घोषो वर्तत इति वाक्ये गङ्गाशब्दः शक्तिवृत्त्या प्रवाहमभिधत्ते । लक्षणया तु प्रवाहसंबन्धि तीरं तद्वदिदं द्रष्टव्यम् ।

अस्या उपनिषदोऽपरं नाम वेदान्त इति । वेदान्तो नाम वेदस्य चरमो भागः । पूर्वभागो हि कर्मबोधकः कर्मकाण्डतया प्रसिद्धः । अयमुत्तरस्त्वात्मज्ञानाभिधायी ज्ञानकाण्ड इत्यवगतो लोके । अत एवायं वेदशिर इत्यभिधीयते तात्त्विकैः । यतो नहि ज्ञानेन सदृशं पवित्रमिह विद्यत इति भगवतोक्तम् । सर्वेषु गात्रेषु शिरः प्रधानमिति प्रसिद्धमेव । ताश्चोपनिषदो बह्व्यो वर्तन्ते । सांप्रतं मुद्रिता

अष्टोत्तरशतोपनिषदः प्रसिद्धा एव । तासु चासंकीर्णतया विशुद्धात्मस्वरूपबोधका ईशकेनकठप्रश्नमुण्डमाण्डूक्यतैत्तिरीयैतरेयच्छान्दोग्यबृहदारण्यकेति दशोपनिषदो वरीवृतति। ता एव श्रीमच्छंकरभगवत्पादाः स्वप्रणीतभाष्यैर्भूषयांबभूवुः । किं तासां प्रमेयमित्याकाङ्क्षायां सर्वासामेवोपनिषदामेकमत्येन स्वरसतः प्रतिपाद्यं वस्तु जीवब्रह्मणोरैक्यमेव वा जीवाभिन्नः परमात्मेति । सैवेत्थमनूदितोपनिषद्भ्यो उक्तिरभियुक्तैः—

यस्माद्विश्वमुदेति यत्र रमते यस्मिन्पुनर्लीयते
भासा यस्य जगद्विभाति सहजानन्दोज्ज्वलं यन्महः ।
शान्तं शाश्वतमक्रियं यमपुनर्भावाय भूतेश्वरं
द्वैतध्वान्तमपास्य यान्ति कृतिनः प्रस्तौमि तं पूरुषम् ॥ १ ॥ इति ।

ननु साध्यनिर्देशात्मिका प्रतिज्ञेयं केवला । नहि तयोपन्यस्तया कश्चिदर्थः सिध्यति वा बुद्धिं समारोहति । अतः प्रतिज्ञातोऽर्थो यथा संसिध्येद्बुद्ध्यारूढश्च स्यात्तथोपपादनीयः सप्रयत्नं धीमता पुरुषेण । तत्र द्वेधा वस्तुप्रतिपादनपद्धतिः-प्रेक्षावद्भिरभिप्रेता । एका विधिमुखेनापरा निषेधद्वारेणेति । यद्धि वस्तु चक्षुःश्रोत्रादिभिर्बहिरिन्द्रियग्रहणयोग्यरूपरसगन्धस्पर्शशब्दाद्यन्यतमगुणवद्वर्तते तदयमिति इयमिति इदमिति इत्थमिति च निर्देष्टुं शक्यते सा विधिमुखेन प्रतिपादनस्य रीतिः । यथाऽयं स्पर्शवान् वायुः । इयं गन्धवती पृथिवी । इदं मधुरं जलम् । अयं शुक्लश्चन्द्रः । अयं सशब्दो दुन्दुभिः । इत्यादिशृङ्गग्राहं निर्देशः । यच्च न तथा केवलं स्वानुभवैकगम्यमत एव स्वसंवेद्यमिति प्रसिद्धं न तत्पूर्वोक्तवस्तुवदुपदेष्टुं पार्यते । तादृशस्य वस्तुन इतरव्यावृत्त्यैव परिचयो दीयते । यथा द्राक्षायाः कीदृङ् माधुर्यमिति पृष्टे किमुत्तरं दद्यादुत्तरयिता । नहीत्थं माधुर्यमिति वक्तुं शक्यते । अपि तु न सितासदृक्षं न पिण्डखर्जूरतुल्यं न गुडेन सममित्यन्यमधुरवस्तुमाधुर्यप्रतिषेधेनैव तद्द्राक्षामाधुर्यं परिचीयते । यतः स्वीयरासनानुभववेद्यं तद्वर्तते । इयं निषेधमुखेन वस्तुप्रतिपादनपद्धतिः । यथा वा कुत्राचिज्जनाकीर्णे प्रदेशे स्वभर्तारमपश्यन्त्यत एव चकिता काचन कुलवधूः, तस्या अभिप्रायज्ञेन केनचित् साधुपुरुषेण कमपि एकं नरं तस्याः पुरत आनीय किमयं ते भर्तेति पृष्टा नेत्युत्तरयति । एवं पुनरन्यमानीय पृष्टे निषेधद्योतकं शिरश्चालनं कुरुते । इत्थं क्रमेण यदा पतिरेव तस्याः पुरतो निर्दिष्टो भवति तदाऽयमेव मत्पतिरिति नायमिति वा किमपि न ब्रूते किंतु लज्जयाऽधोमुखीभूय तूष्णींभावमवलम्बते । तेन तु तस्यास्तूष्णींभावाव-

कम्बनेनायमेवास्याः पतिरिति निश्चीयते विचारशीलैरिति । सिद्धायामपि द्विविधायां वस्तूपपादनसरण्यां प्रायशो द्वितीयां रीतिमाश्रित्य पाञ्चभौतिको देह एवात्मात्मेति चक्षुरादीनि प्रत्येकमिन्द्रियाणीति मिलितानि तानीति मन इति प्राण इति क्षणिकं विज्ञानमिति देहेन्द्रियातिरिक्तो देहपरिमाण इति कर्ता भोक्ता जडो विभुरिति जडो बोधात्मक इति भोक्तैव केवलबोधात्मक इति युक्तिप्रमाणाभासप्रमाणैकदेशावलम्बिचार्वाकादिवादिमुखेनानात्मन एवाऽऽत्मतयोपन्यस्याथ नेति नेतीत्यादिना तान्निषिध्य निषेधावधितया तत्साक्षितया चाऽऽत्मतत्त्वं निरूपयन्त्युपनिषदः ।

तत्राऽऽदावविचारितरमणीयं लोकायतमतसिद्धमात्मानं प्रदर्शयामः । यस्य किल सत्तयाऽऽहारनिद्राभयमैथुनादयो व्यवहाराः सिध्यन्ति यो हीष्टानिष्टे जानाति तत्प्राप्तये परिहाराय च प्रयतते यस्मिंश्च सातिशया प्रीतिरुपलभ्यते यो हि सर्वदा सर्वैः सर्वतः संरक्ष्यते यस्यास्तित्वमेव सुचिरं प्रार्थ्यते न नास्तित्वं यत्सुखाय नानाविधान्यकार्याण्यनुष्ठीयन्ते, यस्य हि कृते कापट्यमवलम्ब्यते, मात्सर्यं बहु मन्यते, सर्वानर्थकारी क्रोधः स्वी क्रियते, लोभो ध्रियते, मोहो न परित्यज्यते, मदोऽङ्गी क्रियते, कुमार्गेणापि कामः परिपूर्यते, स एव निःशेषाभिलाषास्पद आत्मेत्यवश्यमुररीकर्तव्यम् । इत्थंभूतश्च देह एवोपलभ्यते प्रत्यक्षेण न तस्मादतिरिक्तः कोऽपि । किंचाहं गौरः स्थूलोऽहं गच्छामि भुनज्मीत्येवमाद्यात्मप्रयोगेषु गौरत्वादिधर्मैरुपेतो गमनादिक्रियायाः कर्ता च देह एवाहंप्रत्यये प्रथत इति सर्वप्रसिद्धम् । सत्येवं स्थूलोऽहं जानामीति प्रत्ययोऽपि स्थौल्यधर्मोपेतं देहमेव ज्ञानाधिकरणमहमित्यनेन विषयी करोति । न तदतिरिक्तं कमपि । यदि नामायं प्रत्ययो देहादन्यं ज्ञानाश्रयमात्मानं बोधयेत्तदा विभिन्नधर्मिणोः स्थौल्यज्ञानयोर्न स्यादेवं स्थूलोऽहं जानामीति सामानाधिकरण्यप्रत्ययः । स च विदुषामपि भवत्येव । न चास्य प्रत्ययस्य नाहं मनुष्य इति बाधोऽप्युपलभ्यते । गच्छाम्यहं लङ्घयामि ब्राह्मणोऽहं मनुष्य इत्यनुभवः पण्डितानामप्यनुवर्तते । न च प्रत्यक्षादन्यत्प्रमाणं पश्यामो येन शरीरादतिरिक्त आत्मा कल्प्येत । कल्पितेऽपि दृष्टस्य त्यागोऽदृष्टस्य च स्वीकारदोषो दुरुद्धर एव । तस्मादहंप्रत्ययगम्यश्चातुर्भौतिको देह एव आत्मा स एव च ज्ञानाश्रय इति सिद्धम् । मम देह इत्याद्युक्तिस्तु राहोः शिर इतिवदौपचारिकी विज्ञेया । यद्यपि देहोपादानेषु पृथिव्यप्तेजोवायुषु चैतन्यं नोपलभ्यते तथाऽपि शरीराकारतया परिणतेषु तेषु तदुत्पद्यत एव । यथा मदिराकारतया परिणतेषु

किण्वादिषु मदशक्तिरुत्पद्यते वा खदिरादिचूर्णसंवलितताम्बूलरागः परिदृश्यते तद्वत् । अपि च यावद्देहं ज्ञानमुपलभ्यते । ततो देहाधीनोपलम्भनियमाज्ज्ञानं देहधर्मस्तदाश्रयो देहश्चाऽऽत्मा । स च प्रत्यक्षादिप्रमाणसिद्धोऽतः सर्वथा स एव लालनीयः । अहो अतिरमणीयमिदं दर्शनं यत्र प्रत्यक्षमेव प्रमाणम् । पृथिव्यप्तेजोवायवस्तत्त्वानि । अर्थकामौ पुरुषार्थौ । भूतान्येव चेतयन्ते नास्ति परलोकः मृत्युरेवापवर्गो यथेष्टाचरणमेव धर्मः । तदुक्तम्—

अत्र चत्वारि भूतानि भूमिर्वार्युजलानलाः ।
चतुर्भ्यः खलु भूतेभ्यश्चैतन्यमुपजायते ॥ १ ॥
किण्वादिभ्यः समेतेभ्यो द्रव्येभ्यो मदशक्तिवत् ।
अहं स्थूलः कृशोऽस्मीति सामानाधिकरण्यतः ॥ २ ॥
देहस्थौल्यादियोगाच्च स एवाऽऽत्मा न चापरः ।
मम देहोऽयमित्युक्तिः संभवेदौपचारिकी ॥ ३ ॥
यावज्जीवं सुखं जीवेन्नास्ति मृत्योरगोचरः ।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः ॥ ४ ॥
अग्निरुष्णो जलं शीतं शीतस्पर्शस्तथाऽनिलः ।
केनेदं चित्रितं तस्मात्स्वभावात्तद्व्यवस्थितिः ॥ ५ ॥
तथा—तुल्यत्वे वपुषां मुखाद्यवयवैर्वर्णक्रमः कीदृशः ।
योषेयं वसु चापरस्य तदिमं भेदं न विद्मो वयम् ॥
हिंसायामथवा यथेष्टगमने स्त्रीणां परस्य ग्रहे ।
कार्याकार्यविचारणां हि यदमी निष्कारुणाः कुर्वते ॥ ६ ॥ इति ।

इदं देहात्मवादिचार्वाकमतमिन्द्रविरोचनाख्यायिकायामपि छान्दोग्योपनिषद्युपन्यस्तं वर्तते ।

देहात्मवादिचार्वाकमपेक्ष्य सूक्ष्मदृष्ट्याऽन्ये चार्वाकाः काणोऽहमन्धोऽहं बधिरोऽहमश्रौषमिति काणत्वबधिरत्वादिधर्मोपेतेषु चक्षुरादीन्द्रियेष्वहंव्यवहारदर्शनात् 'चक्षुर्होच्चक्राम तद्ध वाचमूचुस्त्वं न उद्गायेति वाङ्मनश्चक्षुः श्रोत्रं प्रकाश्याभिवदन्तीति तत्र तत्र श्रुतिष्विन्द्रियाणां चेतनत्वावगमाच्च प्रत्येकं वा मिलितानि वा इन्द्रियाण्येव आत्मेति वदन्ति ।

अपरं तु सत्यपि देहे मृतशरीरेऽहंव्यवहाराभावाच्चैतन्यादर्शनाच्च निद्रादिसमये लीनेष्विन्द्रियेषु तद्व्यवहारस्याप्यभावाच्च न देह इन्द्रियाणि प्रत्येकं मिलितानि वा आत्मा, अपि तु ताभ्यामन्य एव । कः स इत्याकाङ्क्षायां यथा सत्यां मृदि

घटस्योत्पत्तिरसत्यां च नेत्यन्वयव्यतिरेकाभ्यां मृत्तिका घटादेः कारणमिति निर्धीयते तथा यस्य सत्तया जीवतीति व्यवहारो जायते नान्यथा स एव जीवनादिव्यवहारहेतुरात्मेत्यवश्यमास्थेयम् । एवमात्मा तु प्राण एव । मूर्छादौ प्राणक्रियासंशये जीवनस्यापि संदेहो जायते । अतः प्राण एव आत्मा । स एवाहमादिव्यवहारभाग्ज्ञानवांश्चेत्याहुरिदं प्राणात्मवादिमतम् । अहं श्रेयसे विवदमानानामिन्द्रियाणामेकैकोत्क्रमणेन परीक्षायां मिथः पराजये मा मोहमापद्यथाहमेव पञ्चधाऽऽत्मानं प्रविभज्यैतद्बाणमवष्टभ्य विधारयामीति कार्यकारणसंघातविधारकतया—मातेव पुत्रान्रक्षस्व श्रीश्च प्रज्ञाश्च विधेहि न इति तत्संरक्षकतया प्राणश्रैष्ठ्यप्रदर्शनेन मुण्डकोपनिषदि सूचितम् ।

अन्ये तु विद्यमानेष्वपि देहेन्द्रियप्राणेषु मनसः प्रणिधाने सत्येव ज्ञानसुखादेरुदयः प्रसिद्धोऽप्रणिधाने चाप्रसिद्धः । विदुषामनुभवोऽप्येवं दृश्यते । अन्यत्रमना अभूवं नादर्शमन्यत्रमना अभूवं नाश्रौषमित्यादि । किंच यः कर्ता भोक्ता स आत्मेति तथाभिप्रेतम् । कर्ता च स एव यः क्रियायां स्वतन्त्रः तादृशं तु मन एव न देहादयः । ते तु मनोधीनाः । मनस इच्छायां प्रवर्तन्ते क्रियासु ते नान्यथा । एवं सुखदुःखान्यतरसाक्षात्कारात्मको भोगोऽपि देहेन्द्रियद्वारा मनस एव प्रसिद्धः । अतो यस्य प्रणिधाने ज्ञानसुखादेरुदयो यः कर्ता भोक्ता चेदृविधं मन एव आत्मा । न देहेन्द्रियप्राणा इति ब्रुवन्ति । इदं मनआत्मवादिमतं—मनो ह वाव यजमानः स एष यजमानमहरहर्ब्रह्म गमयति । अत्रैष देवः स्वप्ने महिमानमनुभवतीत्यादिना प्रश्नोपनिषद्यनूदितं वर्तते ।

अपरे बौद्धादयस्तु सुषुप्तिकाले मनसो विलयेऽपि जीवनं परिदृश्यते । निर्मनस्कस्याप्याकस्मिकी क्रियाऽनुभूयते । अनिच्छायामपि क्वचिद्देहादयः प्रवर्तन्ते । किंच विज्ञानस्कन्धात्मना चित्तेन मनः प्रकाश्यते । अतश्चैत्यं तत् । नहि चैत्यमात्मा भवति । तथा सति चैत्यस्य घटपटादेरपि आत्मत्वं केन वार्येत । अस्त्विति चेद्वार्तमेतत् । अतो नाऽऽत्मा मनः किंतु ततोऽप्यन्य एव । तथा हि । विज्ञानं तावद्द्विधा—आलयविज्ञानं प्रवृत्तिविज्ञानं चेति । तत्राहमिति यः प्रत्ययस्तदालयविज्ञानम् । तदन्यत्सर्वं घटपटादिचैत्यविषयं ज्ञानं प्रवृत्तिविज्ञानम् । सत्येवं यदहमहमित्याकारकमालयविज्ञानप्रवहणं विज्ञानस्कन्धरूपं स एवाऽऽत्मा । स क्षणिकः सत्त्वात् । यत्सत्तत्क्षणिकमिति व्याप्तेः । यथा सजलधरपटलं क्षणिकं दृष्टं वा सती विद्यु-

तक्षणिकाऽनुभूयते । तद्वत्सन्नात्माऽपि क्षणिक एव । अत्रोभयविधस्यापि विज्ञानस्य वैतथ्येन क्षणिकतया चासत्त्वाच्छून्यमेवाऽऽत्मा । क्षणिकं क्षणिकं शून्यं शून्यं सर्वं शून्यमिति भावनया चाऽऽत्मनिर्वाणात्मा मोक्षः सिध्यतीति बौद्धमतनिष्कर्षः । इदं बौद्धमतम्—असदेवेदमग्र आसीत्, ततो वै सदजायतेत्यादिपूर्वपक्षोपन्यस्तश्रुतिमूलं विज्ञेयम् ।

अन्ये त्वात्मनः क्षणिकत्वाङ्गीकारे स एवायं पुमान् यः पूर्वं काश्यां दृष्ट इत्येवमादि यत्प्रत्यभिज्ञानं सर्वप्रसिद्धं तस्येदानीमुच्छेदप्रसङ्गो नह्यन्येनाभूतोऽर्थोऽन्येन प्रत्यभिज्ञायते । येनाऽऽत्मना पूर्वं दृष्टः स पुमान्स आत्मा क्षणिकत्वाद्विनष्ट एव । सांप्रतं दृष्टस्त्वन्य एव क्षणिक आत्मा । एवं तयोर्भेदे सति नोक्तं प्रत्यभिज्ञानमुपपद्यते । एवं प्रत्यभिज्ञानविरोधात्पूर्वविज्ञानाहितसंस्कारवदुत्तरविज्ञानसंततेर्दुर्निरूपत्वाच्च न क्षणिकालयविज्ञानप्रवाह आत्मा । अपि तु मनसोऽप्यान्तरं कर्तृत्वादिधर्मोपेतं विज्ञानमयकोश इत्यभिलप्यं स्थिरं विज्ञानमात्मा । तदेवाहंप्रत्ययगम्यमिति प्रतिपादयन्ति । इदं स्थिरविज्ञानात्मवादिमतम् । विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च । विज्ञानं देवाः सर्वे ब्रह्म ज्येष्ठमुपासत इत्यादिनोपनिषत्सु श्रूयते ।

आर्हतास्तु देहेन्द्रियातिरिक्तो देहसमानपरिमाण आत्मेत्यभिदधति । परिमाणभेदेऽपि द्रव्यनाशस्याननुभवान्महान्तं देहं त्यक्त्वा न्यूनदेहग्रहण आत्मनो ह्रासेऽपि न नाशः । संततोर्ध्वगतिस्वभावोऽप्यात्मा कर्मपाशबद्धतया संसारकालमूर्ध्वं न गच्छति कर्मणामत्यन्तोच्छेदे त्वात्मोर्ध्वगतिं लभते । स एव तस्य मोक्षोऽलौकिकाकाशगमनं वेति च । अवसितो नास्तिकैः परिकल्पितात्मोपन्यासः ।

अतः परमास्तिकानामात्मकल्पना समासतः परिदर्श्यते यथामति ।

तत्र वैशेषिकतार्किकप्राभाकराश्चैवमाहुः । देहेन्द्रियप्राणादीनामात्मत्वाङ्गीकारे तेषामनित्यतया कृतहान्यकृताभ्यागमादिदोषप्रसङ्गः । अतो विस्पष्टमेव तेषामनित्यत्वम् । मनसो नित्यत्वेऽपि तस्य परमाणुस्वरूपत्वेन देहव्यापिसुखाद्यनुपलब्धेः प्रसङ्गान्नाऽऽत्मत्वम् । तदर्थं देहसमपरिमाणत्वेऽङ्गीक्रियमाणेऽनित्यतया पूर्वोक्तदोषापत्तिः । ज्ञानमात्रस्य तु गुणत्वेन गुण्याश्रितत्वनियमादहं जानामीत्यनुभवाच्च नाऽऽत्मत्वम् । अतो नाऽऽत्मा पूर्वोक्तः कोऽपि । किंतु तेभ्यो भिन्न एव । स च ज्ञानाश्रयः स्वतो जडः सुखदुःखादिमत्त्वेन तद्धेतुविहितनिषिद्धक्रियाकर्तृत्वस्यापरिहार्यत्वात्कर्ता च । तथाऽकृताभ्यागमादिदोषापत्तेर्नित्यः । स च प्रतिशरीरं भिन्नः । स एवाहंप्रत्यय-

गोचरो ज्ञानेच्छाप्रयत्नादयस्तु तस्य गुणा इति । एवमचिद्रूपं कर्तारं भोक्तारमा॰ त्मानं ते कल्पयन्ति । तस्य पदार्थतत्त्वज्ञानेनैकविंशतिदुःखध्वंसो मोक्षस्तदभावाच्च संसार इति च ।

सांख्यास्तावद् द्विविधा निरीश्वराः सेश्वराश्चेति । निरीश्वराः कापिलाः सेश्वराः पातञ्जलाः । तावुभावप्येवमूचतुः । यदि सुखदुःखादय आत्मनो धर्माः स्युस्तदा तस्य सविकारत्वेनानित्यत्वं स्यात् । अनित्यत्वे चानिर्मोक्षप्रसङ्गः । आत्मनो मोक्षणार्थं किल शास्त्रं प्रवृत्तम् । स आत्मैव यद्यनित्यः प्रागेव विनष्टस्तदा क उपदेष्टव्यः शास्त्रेण बन्धमुक्त्यै । एवमुपदेष्टव्याभावादुपदेशकं शास्त्रमेव व्यर्थं स्यात् । अतः सुखदुःखादयो नैव आत्मनो गुणाः किंतु ये गुणाः सत्त्वरजस्तमांसि तत्परिणामा इमे अन्तःकरणधर्माः । आत्मा त्वसङ्गोदासीनचिन्मात्रस्वरूपः । तस्य प्रकृतिगुणाविवेकेन कर्तृत्वादिबन्धः । शास्त्रीयविवेकज्ञानात्तु मोक्ष इति शास्त्रं सफलम् । तथा च निःसुखाऽनानन्दरूपाहंकारादिप्रकाशानुमेया या चित् सा आत्मेति । भाट्टास्तु कर्तृत्वादीनां प्रकृतिधर्मत्वस्वीकारे कर्तृत्वभोक्तृत्वयोः सामानाधिकरण्येनानुभवाद् यः कर्ता स एव भोक्ता इत्यवश्यं वाच्यम । अन्यथाऽन्यकृतेनान्यस्य भोग उच्यमानेऽनुभवोच्छेदप्रसङ्गोऽव्यवस्था च स्यात । तथाऽकृताभ्यागमादिदोषोऽपि दुर्वारोऽतो नासङ्गोदासीनचिन्मात्ररूप आत्मा । किंतु तद्विलक्षणः । तथा ह्यहं मामन्यं च न जानामीत्याद्यनुभवादात्मांऽशद्वयोपेतः । तत्रैकश्चिदंशो द्वितीयोऽचिदंशः । चिदंशेन तस्य द्रष्टृत्वं सोऽहमितिप्रत्यभिज्ञाविषयत्वं च । अचिदंशे ज्ञानसुखादिरूपपरिणामित्वं मामहं जानामीति ज्ञेयत्वं चेति चिदचिद्रूपमात्मानं वदन्ति । तदुक्तमभियुक्तैः—

देहं केऽपि वदन्ति खानि तु परे प्राणान्मनश्चापरे
बुद्धिं च क्षणिकां स्थिरामथ परे केचिच्चितं निःसुखाम् ।
आत्मानं जडचित्स्वभावमपरे चिद्वज्जडं चेतरे
सत्यज्ञानसुखात्मकं तदपरे तत्रास्य को निश्चयः ॥ १ ॥ इति ।

सर्वेऽप्येते भेददृष्टयः स्वस्वमत्यनुसारमनात्मानमात्मतया तर्कयन्ति । परं तु नेह नानाऽस्ति किंचन । नेति नेतीति निषेधं कुर्वत्या श्रुत्या—अन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते । किं तेन न कृतं पापं चौरेणाऽऽत्मापहारिणेति निर्भर्त्स्यन्त एव ।

अयमर्थः श्रुतेरभिप्रायो यदाह चार्वाकश्चातुर्भौतिको देह एव आत्मेति । तत्र

समानेऽपि मनुष्यदेहे कश्चन जनिमारभ्य यावद्देहपातं दारिद्र्यवियोगादिनानाविधदुः- खैराक्रान्तोऽपरस्त्वारोग्यसंपत्त्यादिप्रयुक्तसुखयुत इति वैषम्यं कुतः समनुभूयते । नह्य- न्तरेण कारणवैषम्यं विचित्रं कार्यं भवितुमर्हति । यतो नीलपितादिविविधरूपेभ्य एव तन्तुभ्यश्चित्रवर्णः पट उत्पद्यते नैकवर्णेभ्यस्तन्तुभ्य इति प्रसिद्धम् । न चोपा- त्तसमानसामग्रीकेणैकेनैव कुलालेन निर्मितेषु घटेषु विनाऽपि कारणवैचित्र्यं कचिद्- दुग्धादियोगः क्वचिद् गर्हितवस्तुसंबन्ध इति वैषम्यं दृश्यते । तद्वज्जगत्यपि स्वभा- वत एवेदं वैषम्यं स्यादिति वाच्यम् । यतस्तैलवर्त्यादिहेतुसाम्ये दीपाद्दीपान्तरे बीजादङ्- कुरादिद्वारा बीजान्तरे च जायमाने यत्समन्यूनानतिरिक्तं च दहनप्रकाशनं संस्थानसामर्थ्यं च दृष्टं स तस्य स्वभाव इति प्रसिद्धं लोके न वैषम्यं स इति । तस्यापि वस्तुस्वभावत्व उच्यमाने सर्ववस्तूनां यदृच्छयैवात्यन्तवैलक्षण्येनाव्यवस्थायां व्यवहारविलोपः प्रसज्येत । तत्रापि भोजकादृष्टमेव वैषम्यहेतुरिति न स्वाभाविकत्वम् । तस्मादनुभूयमाने वैषम्ये पाप- पुण्यातिरिक्तस्य कस्यापि दृष्टस्य कारणस्यासंभवाददृष्टमेव तद्धेतुरित्यगत्या स्वीका- र्यम् । तथा च तदाधारतया देहातिरिक्तः पूर्वजन्मसंबन्ध्यात्माऽऽवश्यक इत्यायाति ।

अपि च प्रवृत्तिमात्र इष्टसाधनताज्ञानं कारणमिति लोकशास्त्रयोः प्रसिद्धिः । सत्येवं जातमात्रस्य शिशोः स्तनपाने याऽऽद्या प्रवृत्तिस्तस्याः कारणंनेदानीं त- दिष्टसाधनताज्ञानं तस्यास्ति किंतु प्राग्भवीयमेव तद्वाच्यम् । ततोऽपि तादृशज्ञान- वाञ्जन्मान्तरसंबन्धी देहव्यतिरिक्त आत्मा स्वीकार्य इत्यायाति । अपि चाचे- तनानां वस्तूनां रथप्रासादादिसंघातरूपेण या प्रवृत्तिर्दृष्टा लोके सा तदुपभोक्तृपूर्व- सिद्धचेतनाधीनैवोपलभ्यते नान्यथा । तद्वत्पृथिव्यादिभूतानां शरीराकारेण परिणतेरपि तदुपभोक्तृपूर्वसिद्धचेतनाधीनत्वं वाच्यम् । ततोऽपि देहभिन्नः पूर्वसिद्ध एवाऽऽत्मे- त्यायाति । अपि च स्वप्नकाले जाग्रद्देहाभिमानाभावेऽपि जागरे स्वप्नदेहापगमेऽपि सोऽहमिति प्रत्यभिज्ञानस्य दर्शनाज्जातिस्मराणां तत्त्वज्ञानां च प्रत्यक्षेणाऽऽत्मनि देहभि- न्नत्वानुभवात् । ग्रहावेशेनाभिभूतस्य व्यवहरतोऽपि प्रत्यभिज्ञानादर्शनादाविष्टग्रहस्य परशरीरे- णापि व्यवहारभोगादिदर्शनाच्च देहव्यतिरिक्त एव आत्मेति निर्विचिकित्सं सिध्यति ।

यच्च शरीराकारतया परिणतानां भूतानां गुणश्चैतन्यं तत्रोच्यते । रूपरसादीनां भतविशेषगुणानां सर्वान्प्रति ग्रहणयोग्यतानुभवात्तद्वच्चैतन्यस्यापि तद्गुणत्वाङ्गीकारे

परैर्ग्रहणं स्यात् । तन्नास्तीत्यतो न भूतगुणश्चैतन्यम् । अपि च मदिरावयवेषु किण्वादिषु मदशक्तेर्भेदवद्देहावयवेष्वपि चैतन्यवैविध्यप्रसक्तेर्नानाचेतनानां नियमेनैकमत्यासंभवाद् युगपदनेकसिंधुराकृष्टस्य कदलीकाण्डस्येव देहस्योन्माथः स्यात् । अतो न देहधर्मश्चैतन्यम् । अपि च मरणोत्तरमपि भूतपरिणामस्य देहस्य सत्त्वात्तदा तत्र ज्ञानानुपलब्धेर्न ज्ञानं देहस्य धर्मः । यत्तु देहाधीनोपलम्भनियमाज्ज्ञानं देहधर्म इति । तन्न । आलोकाधीनोपलम्भनियमेऽपि रूपादेरन्यधर्मत्वस्य स्पष्टत्वात् । स्थूलोऽहं जानामीति प्रत्ययस्त्वयो दहति रक्तः स्फटिक इत्यन्योन्याध्यासमूलको भ्रम एवेति न तेन देहस्याऽऽत्मता सिध्यति । घटप्रदीपयोरिव प्रकाश्यप्रकाशकयोर्धर्मधर्मिभावानुपपत्तिलक्षणो बाधोऽप्यत्र वर्तते ।

किंच प्रत्यक्षमेकं प्रमाणमिति वदतस्तव न प्रत्यक्षातिरिक्तं प्रमाणमिति वचने कथंकारं प्रामाण्यमास्थेयम् । तदपि प्रमाणं चेत्सर्वथा निर्दोषो वेदराशिः किं प्रामाण्यमुज्झति तवासंबद्धप्रलापेन । किंचाहं गौरः स्थूल इत्यादिप्रत्ययैः शरीरात्मबुद्धिः सर्वेषां जनानां जन्मप्रभृति स्वभावत एव संप्रवृत्ता । सत्येवं सर्वजनीनमिदं देहात्मत्वं बोधयत्तव शास्त्रमपूर्वार्थाप्रतिपादनेन प्रयोजनशून्यं निष्फलमेव स्यात् ।

ननु श्रुतिस्मृतिपुराणेतिहासादिभिर्धनिकवञ्चनाय लिप्सुपरिकल्पितगाथाभिश्च विप्रलब्धान्खपुष्पायमानपरलोकसुखादिप्रत्याशया नानाविधव्रतोपवासतपःसंयमादिषु सर्वेतरवित्तराशिव्ययसाध्ययज्ञदानपरःसहस्रविप्रभोजनादिषु च क्लेशेषु निमग्नान्महाजनानुपलभ्य तेषां तत्क्लेशपरिहाराय किल वेदादिप्रामाण्यनिरासपुरःसरमिदं चार्वाकशास्त्रं प्रवृत्तम् । अनेन हि सुनिश्चितनास्तिक्याः सर्वे जनाः परलोकादिभ्यो निर्भयाः सन्तः स्वच्छन्दं रमन्तामिति । तथा सति कथं निष्फलमिदं दर्शनमिति चेद्धन्त तर्हि वेदद्वेषात्प्रवृत्तं तदेव दर्शनं न केवलं नैष्फल्यादप्रमाणमित्यपि तु प्रद्वेषमूलप्रच्छन्नशत्रुवचनवत्सर्वदा प्रमाणबहिर्भूतमुपेक्ष्यमेवेत्यायाति । अपि चायं परलोकाद्यभावस्त्वया केन प्रमाणेन निश्चितः । नहि प्रत्यक्षेणेति वक्तुं शक्यते । विद्यमानपदार्थग्राहिणस्तस्य भाविनि वस्तुन्यप्रवृत्तेरनुमानादीनां तु प्रामाण्यं नास्तीति तव सिद्धान्तः । अतो यत्किंचिदेतन्नास्ति परलोकादिरिति कथनम् । तस्मात् पित्रोर्वीर्यशोणिताभ्यां कललबुद्बुदादिक्रमेणोत्पन्नस्य काष्ठलोष्टवदचेतनस्य भुक्तेनान्नादिनोपचयं गतस्योत्पत्त्यस्तितावृद्धिविपरिणामापक्षयविनाशेति षड्विकारस्य स्नाय्वस्थित्वङ्मांसान्त्रमज्जा-

रुधिरकेशमलमूत्रश्लेष्मलालाद्यशुचिभूयिष्ठस्य देशकालवस्तुभिः परिच्छिन्नस्य नानाधिव्याधिभोगस्थानस्य प्राणापाये श्मशानस्थितघटवदपवित्रस्य श्वभिर्भक्षिते विष्ठावशेषस्य कृमिभिराक्रान्ते कीटावशिष्टस्य दाहे च भस्मनाऽवशिष्टस्य शरीरस्याऽऽत्मत्वं वदतस्तव मनुष्यपशोः केवलं भोगलाम्पट्यप्रयुक्तवेदप्रद्वेषमूलकमिदं दुर्मतमनादरणीयमेव समीक्ष्यकारिभिः श्रेयोर्थिभिरित्युपरम्यते । **इति देहात्मवादखण्डनसंग्रहः ।**

अथ यदुक्तमपरेण तदेकदेशिनेन्द्रियाण्यात्मेति । तत्र किं प्रत्येकमिन्द्रियमात्मा उत तेषां समुदायः । आद्येऽधिष्ठातॄणां नानात्वात्समप्रधानानामनेकेषां नियतैकमत्यासंभवेन स्वस्वविषयोपभोगाय युगपद्विरुद्धदेशाकर्षणे देहस्योन्माथप्रसङ्गः । न चोपभोगलक्षणैकप्रयोजनवशाद्गुणप्राधानभावेन सांख्यमतसिद्धसत्त्वरजस्तमसां गुणानामिवैकसार्थान्तर्गतपुरुषाणामिवैकमत्यं स्यादिति वाच्यम् । गुणप्रधानभावे विनिगमकाभावात् । उपभोक्तुरन्यस्यानभ्युपगमेन सांख्यमतवैलक्षण्याच्च । एकसार्थान्तर्गतपुरुषाणामपि न यावज्जीवमैकमत्यंनियमोऽस्ति । प्रयोजनभेदे तेषां वैमत्यादिदर्शनात् । द्वितीये चक्षुरादिष्विन्द्रियेषु मध्ये एकैकस्योपघाते तद्घटितसमुदायभङ्गेनाऽऽत्मनो नाशादन्धमूकादयो नैव जीवेयुः । किंच निद्रास्वप्नयोरिन्द्रियाणां मनसि लीनत्वादात्मनोऽभावेन तदवस्थाद्वयं निःसाक्षिकमेव प्रसज्येत । अपि च निद्रायामिव मरणेऽपीन्द्रियाणां मनसि विलयाद् द्वयोर्विशेषाभावेन मरणादिव निद्रायाः सर्वेषामपि भयं स्यात् ।

ननु मरणे प्राणोत्क्रमादिसमदुःखानां प्रतिसंधानाद्भयं जायते नाऽऽत्मनाशसंभावनयेति चेन्न । तादृशदुःखानभिज्ञानामपि पश्वादीनां मरणाद्भयं दृश्यते । न दृश्यते च तदभिज्ञानामप्यविनाश्यात्मदर्शिनां तत्त्वज्ञानां तत् । देहविनाशप्रतिसंधानाद्भयमित्यपि न । परदेहनाशप्रतिसंधाने तस्यादर्शनात् । तस्माद्देहादावात्मत्वाभिमानप्रयुक्तमेव तद्विनाशप्रतिसंधानजं भयं वाच्यम् । एवमिन्द्रियात्मवादेऽपि तेष्वात्मत्वाभिमाननिबन्धनमेव तद्विनाशप्रतिसंधानोत्थं भयं वक्तव्यं नान्यथा । तथा च मरणादिव निद्राया अपि भयं दुर्वारमित्यायाति । अतो न तत्समुदायोऽप्यात्मा । काणोऽहमद्राक्षमित्यादिरिन्द्रियधर्मसामानाधिकरण्येनाहंताप्रत्ययस्तु परस्पराध्यासनिबन्धन एव । अतो नेन्द्रियाणि प्रत्येकं समुदायो वाऽऽत्मेति सिध्यतीतीन्द्रियात्मवादप्रत्याख्यानम् ।

अथ यदुक्तं प्राणात्मवादिना प्राणापानव्यानोदानसमानेति पंचवृत्तिकः शरीरान्तः-

संचारी वायुरेव प्राण इति । तत्रोच्यते । नोक्तः प्राण आत्मा भवितुमर्हति । जडत्वात् । यदि घटादिवस्तुवज्जडोऽयं प्राण आत्मा भवेत्तर्हि तद्वदेव जडेन शरीरान्तर्वर्तिना स्नाय्वादिनाऽपि वस्तुना किमपराद्धम् । येन तेषामात्मत्वं नोच्यते भवता । यदि तेषां पृथिवीविकारतया देहादिवत्पार्थिवत्त्वान्नाऽऽत्मत्वं तदा प्राणस्यापि—आपोमयः प्राण इति श्रुत्याऽब्विकारताश्रवणादनित्यतया नाऽऽत्मत्वम् । अपि च रज्जुस्थानीयेनान्नेन ह्ययं बद्धस्तस्मादन्नाधीनतया परतन्त्रत्वान्न प्राण आत्मा भवितुमर्हति । अपि च सुषुप्तौ जीवात्मनः परमात्मन्यप्ययः श्रूयते स्वमपीतो भवतीति । प्राणस्तु तदानीं नाप्येति । किंतु सध्वानिनिःश्वासवेगोपलब्धेर्विशेषतो वृत्तिं लभते । अतो न प्राण आत्मा । किंचाहर्निशमविश्रान्तं संचलत्यप्यस्मिन्प्राणे नाहं चलस्वभाव इति सर्वेषामनुभवादपि न प्राणस्याऽऽत्मत्वम् ।

अतो यत्कार्यकारणसंघातविधारकतया तत्संरक्षकतया च प्राणश्रैष्ठ्यप्रतिपादकं मा मोहमापद्यथेति प्रश्नोपनिषद्वाक्यमुपन्यस्तं तत्प्राणोपास्तिप्रकरणानुरोधादधिष्ठात्रधिष्ठेययोरभेदाभिप्रायेण प्राणाधिष्ठातृदेवताविषयं विज्ञेयम् । यौ तु प्राणासत्त्वसत्त्वाभ्यां मृतो जीवतीति व्यवहारौ दर्शितौ तौ न प्राणेन नापानेन मर्त्यो जीवति कश्चन । इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ । इति कठश्रुतेः प्राणधारणानुकूलव्यापाराश्रयप्राणातिरिक्तजीवनैकहेत्वात्मसत्त्वासत्त्वप्रयुक्तप्राणसत्त्वासत्त्वनिमित्तकावित्यन्यथासिद्धौ वक्तव्यौ । प्राणे परप्रेमास्पदत्वानुभवस्तु देहेन्द्रियादाविव तादात्म्याध्यासमूलक इति न तेन प्राणस्याऽऽत्मत्वं सिध्यतीति बोध्यम् । इति प्राणात्मवादनिरासः ।

अथ यदुक्तं मनआत्मवादिना देहेन्द्रियप्राणेभ्य आन्तरं सर्वेन्द्रियाध्यक्षं मन एवाऽऽत्मा अस्त्विति तदिदानीं निरस्यते । कृतहान्यकृताभ्यागमादिदोषापनुत्तये ह्यनादित्वमात्मनो नियतमङ्गीकार्यम् । मनसस्तु तन्मनोऽकुरुत । अन्नात् प्राणो मनः सत्यमिति श्रुतिषूत्पत्तिश्रवणेन सादित्वान्नाऽऽत्मत्वमित्यायाति ।

अपि च ज्ञानकारणानां चक्षुरादीन्द्रियाणां यथा नाऽऽत्मत्वं तथा मनसोऽप्यन्यत्रमना अभूवं नाश्रौषमित्याद्यनुभवान्मनसा ह्येव पश्यति मनसा ह्येव शृणोतीति श्रुतौ कर्तुः पार्थक्येन करणवाचिन्या तृतीयया निर्देशाच्च रूपादिज्ञाने सामान्यतस्तस्य करणत्वात् सुखाद्यनुभवे विशेषतः साधनत्वाच्च माऽऽत्मत्वमिति प्राप्नोति ।

अपि च—अन्नमाशितं त्रेधा विधीयतेति प्रस्तुत्य तस्य योऽणिष्ठो भागस्तन्मनः । अन्नमयं हि सोम्य मन इत्यादिना छान्दोग्योपनिषदि तस्यान्नकार्यत्वश्रवणात्, अन्न-

गतगुणदोषाभ्यां मनोमालिन्यमनःप्रसादादीनामनुभवसिद्धत्वाच्च देहादिवन्मनोऽपि नाऽऽत्मेति । अपि च––मनो हि द्विविधं प्रोक्तं शुद्धं चाशुद्धमेव चेत्यनेन मनसः शुद्धाशुद्धाभ्यवहारप्रयुक्तशुद्धत्वाशुद्धत्वधर्मोपेतत्वश्रवणान्नित्यशुद्धस्वरूपादात्मनोऽत्यन्तवैलक्षण्येन तस्यानात्मत्वं सिध्यति । किंच––मन एव मनुष्याणां कारणं बन्धमोक्षयोः । बन्धाय विषयासक्तं मुक्त्यै निर्विषयं स्मृतमिति श्रुत्या मनसा बन्धमोक्षहेतुतायाः श्रवणात्तस्य तद्दोषैर्बध्यमानात्मभिन्नत्वेनानात्मत्वं निश्चीयते । अपि च जाग्रत्स्वाप्नभोगप्रदकर्मण उपरमे जाग्रत्स्वप्नावस्थयोः प्रशान्तौ ततः सुषुप्त्यवस्थायां स्वस्वविषयैः साकं चक्षुरादीन्द्रियगणे मनसि लयं गते मनसोऽपि––सुषुप्तिकाले सकले विलीने तमोभिभूतः सुखरूपमेति । मनश्च मन्तव्यं चेत्यादिश्रुत्या विलयश्रवणात्तस्याऽऽत्मत्व उच्यमाने सुषुप्तावात्मनाशप्रसङ्गादात्मनित्यत्वप्रतिपादकश्रुतिविरोधोऽभ्युदयनिःश्रेयसाद्युपदेशवैयर्थ्यं च स्यात् ।

नन्वस्तु नाम सुषुप्तावात्मनाशो जागरे पुनरुद्भवश्च का हानिरिति चेन्न । सुषुप्त्यवस्थायामात्मनाशस्वीकारे सुषुप्तेस्तत्प्रयुक्तसुखस्य चानुभवितुरभावादुत्थितस्य पुंसः सुखमहमस्वाप्समिति स्वापसुखयोरनुसंधानं न स्यात् । तत्तु सर्वप्रसिद्धमतो न तदानीमात्मनाशो वक्तुं युज्यते । मनसो विलयः, तन्निरोधानं वा तत्समये सिद्धमेव । तस्मान्न मन आत्मा । किंच मम मनश्चपलं दुर्निग्रहमिति मनस्यात्मभेदः सर्वेषां प्रसिद्ध एवेति मनआत्मवादिमतनिराससंग्रहः ।

अथ यद्यपि मनस आत्मत्वनिरासेन मनोवृत्तिविशेषस्य क्षणिकविज्ञानस्याप्यात्मत्वं प्रत्याख्यातं भवति तथाऽपि प्रत्याख्येयात्मप्रवाहपातितया क्रमप्राप्तत्वात्तत्र किंचिदुच्यते । यदीयं त्वदभिमता आलयविज्ञानपदवाच्या क्षणिकविज्ञानव्यक्तिरात्मा भवेत्तर्हि लौकिकं फलसाधनं सर्वं निष्फलमेव स्यात् । नह्यन्यः करोति अन्यो भुङ्क्ते इति सूपपद्यते । अपि तु योऽहं कर्माकरवं सोऽहमिदानीं तत्फलं भुञ्ज इत्यनुभवेन पूर्वापरकालानुवर्तिनः स्थिरस्याऽऽत्मनः सुस्पष्टं सिद्धतया न क्षणिकविज्ञानस्याऽऽत्मत्वं संभवति । नन्वेकस्य क्षणिकविज्ञानस्य नाऽऽत्मत्वमुच्यते मया किंत्वहमहमिति विज्ञानधारैवाऽऽत्मा । तत्र समानसंतानवर्तिनां मध्ये प्राचीनः प्रत्ययः कर्म करोत्युत्तरश्च तत्फलं भुङ्क्ते इति चेत् किमियं विज्ञानधारा क्षणिकविज्ञानव्यक्तिभ्योऽनतिरिक्ता वाऽतिरिक्ता । तस्यास्ताभ्योऽनतिरिक्तत्वे क्षणिकविज्ञानानां पूर्वोत्तरकालास्पर्शित्वेन परस्परवार्तानभिज्ञतयैकमत्यस्य दुःसंपादत्वात् भोगेच्छया तत्साधननिर्मातृत्वस्यानुपपत्तिः । किंच यस्य हि भोगार्थः प्रयत्नोऽनुष्ठीयते नास्त्येतादृशः

कोऽपि स्थिरो भोक्ता त्वन्मते । तथा च भोगो भोगार्थमेव स्यादेवं मोक्षोऽपि मोक्षार्थमेव । तथा च शास्त्रवैफल्यमापतेत् ।

न च मधुररसभावितानामाम्रबीजानां भूमावुप्तानामङ्कुरकाण्डस्कन्धशाखापल्लवादिक्रमेण यथा फले माधुर्यं दृष्टं तथा कार्यकारणभावसंवलितविज्ञानधारान्तर्गतकारणभूतस्य पूर्वपूर्वविज्ञानस्य कर्तृत्वं कार्यभूतस्योत्तरस्य तु परम्परया फलभोक्तृत्वं स्यादिति वाच्यम् । व्यभिचारोपलब्धेर्नैवं संभवति । नह्युपाध्यायबुद्ध्यनुभूतं शिष्यबुद्धिः स्मरति तदुपचितं कर्मफलमनुभवति वा । व्यतिरिक्तेयं विज्ञानधारा क्षणिकविज्ञानव्यक्तिभ्य इति चेत्तर्ह्यात्मा क्षणिक इति तव सिद्धान्तो भज्येत । स्थाय्यात्मन एव त्वया नामान्तरेणाङ्गीकृतत्वात् । अपि च दृष्टान्ते जलधरादौ यत् क्षणिकत्वं प्रमितं तत् किं यत् सत्तत्क्षणिकमित्यनेनैवानुमानप्रमाणेनोत प्रमाणान्तरेण । नाऽऽद्यस्त्वदुक्तस्य क्षणिकत्वस्य कुत्राप्यदृष्टचरत्वेन दृष्टान्तस्यासिद्धावस्यानुमानस्यानुत्थानात् । न द्वितीयस्तेनैव प्रमाणान्तरेण सर्वत्र क्षणिकत्वसिद्धौ सत्त्वहेतुकानुमानं विफलमेव स्यात् । किंच सत्त्वमप्यर्थक्रियाकारित्वरूपमिति वक्तुमयुक्तम् । तथा सति मिथ्यासर्पदंशादेरपि भयगात्रकम्पादिरूपार्थक्रियाकारित्वेन सत्त्वं सिध्येत् ।

इत्येवमाद्यनेकदूषणगणग्रासान्निःसारमिदं क्षणिकविज्ञानात्मवादिमतमादित एव शून्यात्मकत्वाद्गगनकुसुमायमानमित्युपरम्यते ।

यच्च विज्ञानपदवाच्याया बुद्धेरात्मत्वमभिहितं स्थिरात्मवादिना तदपि न । तस्याश्चित्प्रतिबिम्बग्राहिज्ञानक्रियाशक्तिप्रधानान्तःकरणधर्मत्वेनोत्पत्त्यादिमत्त्वात्प्राणादिवदनात्मत्वं विस्पष्टमेव । न च बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरमिति वैशेषिकसूत्रात् बुद्धिर्मनीषा धिषणेत्यादिकोशाच्च ज्ञानमेव बुद्धिस्तदेव चैतन्यं चेत्यवगम्यते । तथा चामूर्तस्याऽऽत्मत्वमविरुद्धमिति वाच्यम् । त्वदभिमतविज्ञानस्य परिच्छिन्नतया नापरिच्छिन्नात्मरूपता तस्य संभवति ।

अपि च—आत्मानं रथिनं विद्धि शरीरं रथमेव तु । बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव चेति कठोपनिषद्यात्मनो रथित्वं बुद्धेस्तु सारथित्वं प्रदर्शितम् । तेनापि विस्पष्टमेवानात्मत्वं तस्यावगम्यते ।

किंच तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्माऽऽनन्दमय इति तैत्तिरीयोपनिषदि विज्ञानमयादन्यस्याऽऽनन्दमयस्याऽऽत्मन उपदिष्टत्वान्न विज्ञानं बुद्धिरात्मेति सिध्यति । विज्ञानं यज्ञं तनुत इत्यादिः श्रुतिस्तु यज्ञफलोपभोग्यविज्ञानमयकोषविषयत्वेन व्याख्येया । उपसंहारे सर्वान्तरस्याऽऽनन्दमयस्याऽऽत्मन उपदिष्टत्वात् । इति स्थिरविज्ञानात्मवादनिरासः ।

एवं चार्वाकादिभिर्नास्तिकैः परिकल्पितानात्मनः प्रत्याख्याय वैशेषिकाद्यास्तिकैः परिकल्पितात्मस्वरूपाणि समासतः प्रत्याख्यायन्ते । तत्र यदाहुर्वैशेषिकतार्किकप्राभाकराः—देहेन्द्रियमनःप्राणादिभ्यो भिन्नो ज्ञानाश्रयः स्वतो जड आकाशादिवद्विभुः सुखदुःखादिवैचित्र्यात् प्रतिशरीरं भिन्नः कर्ता भोक्ता चाऽऽत्मा तस्य पारिमाण्डल्यपरिमाणवन्मनःसंयोगे बुद्ध्यादयो गुणा उत्पद्यन्ते । गुणाश्रयत्वाच्चासौ द्रव्यमित्यादि । तत्रोच्यते । अनेकेषां जीवानां सर्वमूर्तद्रव्यसंयोगानुकूलपरममहत्परिमाणाश्रयत्वरूपं विभुत्वमङ्गीकृतं चेदेकैकस्मिन् देहे सर्वजीवानुप्रवेशाच्चैत्रात्मन एवेदं सुखं न मैत्रात्मन एवमादिरूपाया व्यवस्थाया अभावात् सर्वेषां भोगसांकर्यप्रसङ्गस्तथा चक्षुरादीन्द्रियाणि शरीरं प्रयत्नो धर्माधर्मौ चेत्येतेषां भोगसाधनानां सर्वसाधारण्येनास्यैवेदं साधनं नान्यस्येत्येवं नियमोऽपि नितरां दुर्घटः ।

ननु तत्तदात्ममनसोर्योगस्तत्तदात्मविशेषगुणे हेतुस्तथा च स्याद्भोगव्यवस्थेति चेन्न । सर्वेषामेव मूर्तद्रव्यसंयोगार्हाणामात्मनां तत्र संनिधानान्मूर्तं मनोऽपि क्रियावशादेकस्मिन् देहे युगपत्सर्वैरात्मभिः संयोगं गच्छति । ततोऽस्यैवेदं मनो नान्यस्येति विनिगमकं तत्र नानुभूयते ।

न च जन्मान्तरीयतत्तददृष्टविशेषोपगृहीतं तत्तन्मन इति विनिगमकमस्तीति वाच्यम् । जन्मान्तरेऽप्यदृष्टोत्पत्तेर्मनःसापेक्षतया स्वस्य स्वापेक्षयदृष्टसापेक्षत्वेनाऽऽत्माश्रयदोषापत्तेस्तत्र मनोन्तरस्वीकारे चानवस्थापत्तिरिति द्रष्टव्यम् । न चाहमिदं कर्म कृत्वाऽस्य फलं प्राप्स्यामीत्यभिसंधिरेवादृष्टनियामकः स्यादिति वाच्यम् । यतः सोऽप्यात्ममनोयोगव्यवस्थामन्तरेण व्यवस्थां न लभतेति ।

नन्वेकस्मिन् देहेऽनेकात्मनामनुप्रवेशेऽपि तत्तदात्मसमवेतसुखादौ तत्तदात्मजन्यतावच्छेदकं वैजात्यमङ्गीकृत्य तादृशवैजात्यावच्छिन्नसुखाद्युपभोगे तत्तद्देहव्यक्तेर्हेतुत्वं कल्प्यते । तथा चाऽऽत्मान्तरजन्यतावच्छेदकवैजात्यावच्छिन्नसुखोपभोगे तद्देहव्यक्तेरहेतुत्वात् । देहान्तरस्यैव तत्र हेतुत्वान्न सांकर्यप्रसङ्गः सुखाद्युपभोगस्येति चेत्तर्ह्यात्मैकत्वे सर्वैः सुखिभिरेव भाव्यं वा दुःखिभिरेव वा । सत्येवं कश्चन सुखी कश्चन दुःखीति कुतः समनुभूयते । ततः समनुभूयमानसुखादिवैचित्र्यान्यथानुपपत्त्याऽऽत्मनानात्वमकामेनाप्यवश्यं वाच्यमित्यात्मनानात्वसाधकेन तवाभिमतस्य सुखादिवैचित्र्यस्य देहलक्षणैरेवोपाधिभिर्व्यवस्थायां सिद्धायां निश्चितं तद्वैचित्र्यं नाऽऽत्मनानात्वं साधयितुं प्रभवति । तथा च निष्प्रमाणमेवाऽऽत्मनानात्वं त्वयोक्तमिति नरशृङ्गादिवद्वाङ्मात्रमेव तन्न तत्त्वतः सत्तां लभते । किंच भक्षितेऽपि लशुने न शान्तो व्याधिरिति न्यायेन स्वीकृतेऽप्यात्मनोनानात्वे यथा नोपपद्यते तद्वैचित्र्यं तथोक्तमेव । यच्चोक्तमा-

त्ममनःसंयोगाद्बुद्ध्यादयो गुणा उत्पद्यन्त इति । तदपि न । यतः सावयवयोरेव संयोगो दृष्टस्तथा च निरवयवत्वेन त्वदभिमत आत्मन्यणुपरिमाणस्य मनसः संयोग एव न जायते । कुतस्तर्हि ज्ञानादीनामुत्पत्तिः । आत्मनो द्रव्यत्वे यद्द्रव्यं तत्सावयवमित्यवर्जनीयेन सावयवत्वेन तस्यानित्यत्वमनिष्टं प्रसज्येत । यत्तु चैतन्यमात्मनो गुणः स्वयमचेतन एवाऽऽत्मेत्युक्तं तदपि मनोरथमात्रम् । नहि चेतनाचेतनत्वेन विरुद्धस्वभावयोस्तयोर्धर्मधर्मिभावः संभवति । अन्यथा भास्वरत्वं तमस औष्ण्यं वा जलस्य धर्मः स्यात् । नैवमनुभूयते । अतो नाऽऽत्मधर्मश्चैतन्यम् । किंच ज्ञानस्याऽऽत्मधर्मत्वे जडधर्माणां जडत्वदर्शनाद्रूपादिवज्ज्ञानमपि जडमेव स्यात् । यतो जडधर्मस्तत । तथा च जगदान्ध्यप्रसङ्गेनान्धस्येवान्धलग्नस्य विनिपातः पदे पद इति महदनिष्टापातः । अतो न जडात्मगुणश्चैतन्यम् ।

यच्चाऽऽत्मा जड इत्युक्तं तत्रोच्यते । आत्मनो जडत्वे सुप्तोत्थितस्य पुंसः सुखमहमस्वाप्सं न किंचिदवेदिषमिति सौषुप्ताज्ञानसुखस्वापयोरनुसंधानं सर्वानुभवसिद्धं तदिदानीं न स्यात् । यतः स्मरणं तत । स्मरणं च संस्कारद्वाराऽनुभवपूर्वकम् । अनुभवस्तु सुषुप्तावेव वान्यस्तथा च केनानुभूतं तदज्ञानं सुखं च तदा । नह्यात्मगतेन ज्ञानेनेति वक्तुं शक्यते । आत्मनो जन्यज्ञानसमवायित्वाभ्युपगमेऽपि त्वया सुषुप्तिसमये जन्यज्ञानसामान्याभावाभ्युपगमात् । स्वयमात्मनेति चेज्जडः सः । न हि जडोऽनुभवितुमर्हति तत्सुखादि । अन्यथा घटादेरपि जडस्यानुभवितृत्वं दुष्परिहारं भवेत् । तस्मादात्मा जड इत्युक्तिरपि निःसारैवेति वैशेषिकाद्युक्तात्मस्वरूपनिरासः ।

अथ यदुक्तं सांख्यपातञ्जलाभ्याम्—निःसुखानन्दोऽहंकारादिप्रकाशानुमेयोऽसङ्गोदासीनचिन्मात्रस्वरूप आत्मा । स च भोक्तैव केवलं न कर्ता । कर्तृत्वं प्रकृतेरेव । सुखदुःखादयश्चान्तःकरणधर्मा नाऽऽत्मनः । एवंभूतस्य तस्य प्रकृतिगुणाविवेकनिमित्तो बन्धः । शास्त्रीयविवेकविज्ञानात्तु मोक्ष इत्यादि ।

तत्रोच्यते । आत्मनो निरानन्दस्वरूपेऽभिहिते तस्य लोष्टादिवत् स्वतः प्रेमास्पदत्वाभावेन सुखं दुःखाभावं वा किमपि न स्पृहयेत्सः । यो हि स्वरसतः प्रेमी स एवान्यप्रयुक्तं सुखादिकं कामयते नान्यः । तथा च प्रकृतिगुणाविवेकप्रयुक्तो बन्धस्तद्विवेकविज्ञानप्रयुक्तश्च त्रिविधदुःखात्यन्तनिवृत्तिरूपो मोक्षः कस्य स्यान्न कस्यापि । एवमचेतनस्य प्रधानस्य तदर्थं प्रवृत्तिरपि व्यर्थैवेति नाऽऽत्मा निःसुखानन्दस्वरूप इति वक्तुं युक्तम् ।

अथाऽऽत्मनो नित्यत्वानुमेयत्वस्वीकारे यथा परदेहादावयं हिताहितप्राप्तिपरिहारानुकूलक्रियारूपया चेष्टयाऽनुमेयस्तथा स्वदेहेऽप्यहंकारादिप्रकाशेनानुमेयः । एवमनुमेयत्वाविशेषात्परात्मसमवेतं दुःखमनुभवितुं यथाऽसमर्थोऽयं तथा स्वसमवेतं दुःखमप्यनुभवितुं न शक्यतेऽनेन । तथा सति प्रतियोगिनो दुःखस्य ज्ञानाभावेन तदत्यन्ताभावात्मकं मोक्षं न स्पृहयेदेवायम् । सत्येवमात्मनो विमोक्षणाय प्रवृत्तं शास्त्रं व्यर्थमेव स्यात् । अतो नाऽऽत्मा नित्यानुमेय इत्यायाति ।

एवं तस्यासङ्गोदासीनचिन्मात्रस्वरूपतायास्त्वयाऽङ्गीकृतत्वात् तत्त्वतो गुणसंबन्धशून्ये निर्विकारे गुणसंबन्धप्रयुक्तातिशयानाधारे चाऽऽत्मनि तापलक्षणो भोगोऽपि न संभवति । न च रजसा सत्त्वे तप्यमाने सति सत्त्वानुसारी पुरुषोऽपि तप्यत इवेति भोक्तृत्वमुपचर्यते तस्मिन्निति वाच्यम् । न ह्युपचारमात्रेण भोक्तृत्वं सिध्यति । अन्यथाऽग्निर्माणवक इति माणवकेऽग्नित्वोपचारात् सोऽपि दहेत्प्रकाशयेद्वा । किंच यथा भृत्यादीनां स्वार्थपुरःसरमेव राजाद्युपभोगाय प्रवृत्तिरुपलभ्यते तद्वत्पुरुषभोगार्थं प्रवर्तमानस्य प्रधानस्यापि कमपि स्वार्थमुद्दिश्य प्रवृत्तिर्वाच्या । न च भोक्तृशक्तिहीनस्याचेतनस्य तस्य कश्चित्स्वार्थः संभवति येनैवमपि तत्प्रवर्तेत । तत्र यद्येवमुच्येत चेतनस्य प्रवृत्तिरेव स्वार्थनिबन्धना नाचेतनस्येति तर्हि प्रयोजनोद्देशेन प्रवृत्तिरपि चेतनस्यैव संभवति । न कदाचिदप्यचेतनस्येति पुरुषस्य भोगार्थं प्रधानस्य प्रवृत्तिरित्यसंगतमेवोक्तं भवतेत्यापद्येत । किंच यदि स्वयमकर्तैव पुरुषः कर्मफलानां भोक्तेत्यभ्युपगम्येत प्रकृतिश्च कुर्वाणाऽभोक्त्रीति स्वीक्रियेत तदा कृतस्य कर्मणो नैष्फल्यमकृतस्य च फलाभ्यागम इत्यापद्येत । तथा सति धर्माधर्मप्रतिपादकं शास्त्रं व्यर्थं स्यात् । एवं देवदत्तस्यापराधे यज्ञदत्तस्य दण्डप्रसङ्गोऽन्यस्मिन्भुञ्जानेऽन्यस्य तृप्तिप्रसङ्गश्च दुष्परिहरो वेदितव्यः । ननु न कर्तृत्वप्रयुक्तं भोक्तृत्वमुच्यतेऽस्माभिः किंतु दृक्शक्तिमत्त्वात् पुरुषो भोक्तेति चेदसङ्गोदासीनस्य तस्य तन्न संभवतीत्युक्तमेव प्राक् ।

ननु पुरुषस्यासङ्गोदासीनचिदेकस्वभावात्प्रकृतेश्चाचेतनत्वात्पङ्ग्वन्धयोरिव प्रत्येकस्यासमर्थत्वेऽपि परस्पराविवेकलक्षणसंबन्धेन प्रकृतिपुरुषयोः प्रवृत्तिभोगौ सिध्यत इति चेत्कोऽयं परस्परयोरविवेकः । किं विवेकविज्ञानस्याभाव उतैक्यज्ञानम् । नाऽऽद्यस्त्वन्मते पृथगभावपदार्थास्वीकारेणाधिकरणात्मकस्य तस्य विवेकविज्ञानोत्तरमपि सत्त्वाद्भोगप्रयोजकाविवेकस्यानिवृत्तेर्मोक्षाभावप्रसङ्गः । न द्वितीयः । वस्तुतो भिन्नयोस्तयोरैक्यज्ञानं सद्विषयकमिति वक्तुमशक्यमेव । अतोऽनिर्वचनीयैक्यविषयमिति वाच्यम् । तथा सत्यद्वैतमतप्रवेशापत्तिरपरिहार्या स्यात् ।

किंचायमविवेकः किं प्रकृतेर्धर्मः पुरुषस्य वा । तत्र प्रकृतेरिति वक्तुमयुक्तमेव । यतोऽचेतनायास्तस्याश्चेतनधर्माश्रयत्वं गगनकुसुमायमानम् । नैव पुरुषस्य धर्म इत्यपि संभवति । यतो निर्विकारासङ्गचिन्मात्रस्वरूपस्य तस्याविवेकाख्यधर्मकथनं वाचालतां नातिक्रामति । एवं स्वरूपत आश्रयतश्चानिर्वाच्योऽयमविवेकः पुरुषस्य भोगहेतुर्न संभवतीति विज्ञेयम् । तथा विवेकस्याप्यविवेकेन समं तुल्ययोगक्षेमत्वान्न तेन मोक्षः सिध्यतीति सांख्यमतसिद्धान्तमस्वरूपनिरासः ।

अथ यदुक्तमात्मनो जडाजडस्वरूपत्वं भाट्टैः । तत्रोच्यते । एकस्यैव वस्तुनो मिथो विरुद्धतेजस्तिमिरोभयात्मकत्वमिवाऽऽत्मनोऽपि जडाजडस्वरूपत्वं श्रुतिस्मृत्यनुभवविरुद्धं वक्तुमयुक्तम् । नन्वहंप्रत्ययाविषयो यः स आत्मेति सकलसंमतम् । तथा चायं घटः पट इत्यादिज्ञानविषयस्य घटादेर्यथोक्तज्ञानरूपातीन्द्रियव्यापारजन्यज्ञातताश्रयत्वरूपं (ज्ञानविषयत्वं) ज्ञातो घट इत्याद्यनुभावात्सिद्धं तथैवाऽऽत्मनोऽप्यहंप्रत्ययात्मकातीन्द्रियव्यापारजन्यज्ञातताश्रयत्वरूपमहंप्रत्ययविषयत्वमहमित्यनुभवाद्वाच्यम् । ततश्चाऽऽत्मनश्चिदेकरूपत्वेऽङ्गीक्रियमाणे तदनुपपन्नम् । नहि चिदेकस्वरूपः स ज्ञातताश्रयत्वं ज्ञानकर्मत्वं भजति । ज्ञातताारूपसंवित्कर्तृत्वात्तस्य कर्तृत्वकर्मत्वयोरेकत्र विरोधात् । तस्मादहंप्रत्ययाविषयत्वनिर्वाहाय जडांशोऽप्यात्मनि स्वीकार्य एव । स्वीकृते च तस्मिंस्तन्निष्ठाहंप्रत्ययजन्यज्ञातताश्रयत्वरूपमहंप्रत्ययविषयत्वमुभयात्मनस्तस्य संभवतीति चिदचिद्रूपत्वमात्मनः संभवतीति चेन्न ।

कल्पितेऽप्येवमचिदंशेऽहंप्रत्ययजन्यज्ञातताश्रयत्वरूपमहंप्रत्ययविषयत्वमात्मन आशामोदकायमानमेव । यतो जाड्यांशस्य तद्विषयत्वयोग्यत्वेऽपि चिदंशस्य तद्विषयत्वायोग्यत्वात्तदुभयात्मकस्याऽऽत्मनोऽहंप्रत्ययविषयत्वं दूरापेतम् । नहि पुरुषमगोचरयत् केवलं दण्डं गोचरयज्ज्ञानं दण्डसंवलितपुरुषविषयमिति प्रसिद्धम् । येन चिदंशाविषयकेऽप्यहंप्रत्यये जाड्यांशमात्रविषयत्वेन चिदाचिद्रूप आत्मा विषयः स्यात् ।

यदि त्वात्मनोऽहंप्रत्ययविषयत्वनिर्वाहाय चिदंशेऽपि विषयत्वं स्वी क्रियते तर्हि तेनैवोपपत्तावात्मनो जडांशकल्पनं व्यर्थमेव । तथैकत्र कर्तृकर्मत्वदोषतादवस्थ्यमपसिद्धान्तश्च स्यात् ।

किंचाऽऽत्मनि कल्प्यमानोऽयं जडांशः किं नित्यसिद्ध आगन्तुको वा । तत्र नित्यसिद्ध इति वक्तुमशक्यमेव । यतः श्रुत्यादिप्रमाणैरात्मनश्चिदेकस्वरूपत्वं नित्यसिद्धमुपदिश्यते नाचिदात्मत्वम् । अतो निष्प्रमाणकमिदमात्मनोऽर्धजरतीयमंशतोऽचिद्रूपत्वकल्पनम् ।

किंच प्रयोजनमप्यस्याचिदंशस्वीकारस्य नोपलभ्यते । यच्चाहंप्रत्ययविषयत्वनिर्वाहायैवं कल्प्यत इत्युक्तं तदप्यध्यस्ताहंकारतादात्म्येनोपपद्यते । द्वितीये कुतश्चित्कारणादात्मनि जडांशस्योत्पत्तिर्वाच्या । सा च चेतनस्याऽऽत्मनोऽपरिणामित्वादसङ्गतया निमित्तसंबन्धायोगाच्च न संभवति ।

नन्विच्छां विना द्वेषमन्तरा चेष्टानिष्टप्राप्तिपरिहारसाधनेषु लौकिकेषु शास्त्रीयेषु च कर्मसु प्रवृत्त्यसिद्धेरविकारिणश्चिदंशस्य त्विच्छाद्यनाश्रयत्वात्तदाश्रयतया जडांशोऽप्यात्मन्यङ्गीकार्य इति चेत्कीदृशं प्रवृत्तिकर्तृत्वमात्मनोऽभिप्रेतं तद्धेत्विच्छादिमत्त्वं च । न तावद्वास्तवं श्रुतिस्मृतिसहस्रैरात्मनोऽसङ्गाकर्तृत्वस्वभावत्वस्य प्रतिपादनात् । व्यावहारिकं चेत्कर्तृत्वमुच्येत तर्हि तदध्यासेनाप्युपपद्यत इति न तेन जडांशस्तत्र सिध्यति । अतः सर्वथाऽनुपपन्नेयमात्मनि जडांशकल्पनेति ।

प्रमादिनो बहिश्चित्ताः पिशुनाः कलहोत्सुकाः ।
संन्यासिनोऽपि दृश्यन्ते दैवसंदूषिताशयाः ॥

इति संन्यासिनोऽप्येवमुपलभ्यन्ते चेत् किमु वक्तव्यं कर्मिणो बहिर्मुखाः सन्तीत्यर्थकाद्वार्तिकाद्बहिर्मुखानां कर्मिणामयं विचित्र आत्मस्वरूपप्रतिपादनप्रकार उपेक्ष्य एवेत्यायाति ।

इत्थं निरस्तेषु समासतश्चार्वाकादिनास्तिकवादिपरिकल्पितेषु वैशेषिकाद्यास्तिकाभिहितेषु चाऽऽत्मस्वरूपेष्वथोक्तनिराससाक्षितयोपलक्षितं देशकालादिसमस्तोपाध्यनवच्छिन्नमनाद्यनन्तानन्दचिन्मात्रं सकलदोषास्पृष्टमौपनिषदमात्मतत्त्वं प्रदर्शनीयं मङ्गलप्रयोजनमिति प्रकृतविमर्शविशेषभूतं द्वैताद्वैतविमर्शमवतारयितुं संक्षिप्योपनिषत्तात्पर्यं प्रदर्श्यते ।

तत्र ब्रह्मतत्त्वं विस्पष्टमुपदेष्टुमादौ तत्त्वं संग्रहेण सूत्रयति श्रुतिः—आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषत्, इति । आत्मशब्दस्यार्थो महर्षिभिरेवं स्मर्यते—

यच्चाऽऽप्नोति यदादत्ते यच्चात्ति विषयानिह ।
यच्चास्य संततो भावस्तस्मादात्मेति गीयते ॥

( लिङ्गपु० अ० ७० श्लो० ९६ ) इति ।

अस्यायमर्थः—द्विविधो ह्यात्मा व्यवहारविशिष्टः केवलश्चेति । व्यवहारोऽपि त्रिविधः—जागरणं स्वप्नः सुषुप्तिश्चेति । तत्र सुषुप्तावयं जीवः स्वोपाधिविलये सति परमानन्दरूपं ब्रह्म प्राप्नोति । तथा च कैवल्योपनिषदि श्रूयते—सुषुप्तिकाले सकले विलीने तमोभिभूतः सुखरूपमेति ( कैव० १३ ) इति । तस्मादाप्नोतीत्यात्मेति स्मर्यमाणं प्रथमं निर्वचनं द्रष्टव्यम् ।

स्वप्नावस्थायामयं जीवो जागरणस्थपदार्थवासनाः सर्वा आदत्ते । तथा च वाजसनेयिनः पठन्ति— स यत्र प्रस्वपित्यस्य सर्वावतो मात्रामपादाय स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा स्वपिति ( बृ० ४ । ३ । ९ ) इति । अस्यायमर्थः—यदाऽयं जीवो वाक्चक्षुरादिदशविधबाह्यकरणोपरतिरूपं स्वापमाप्नोति तदानीं सर्वावतो गिरिनदीसमुद्रमनुष्यपश्वादिसर्वपदार्थोपेतस्य लोकस्येन्द्रियैरवलोक्यमानस्य जगतो मात्रां लेशरूपां वासनामपादाय तत्तत्पदार्थेभ्योऽपच्छिद्य स्वयं स्वीकृत्य ततो जागरणाभिमानं स्वयमेव विनाश्य स्वप्ने जगद्रूपं च स्वयमेव निर्माय जगदाकारेण परिणतपदार्थावभासकेन युक्तः सन् प्रस्वपितीति । तस्माद्वासनानां स्वीकारादादत्त इत्यात्मेति द्वितीयं निर्वचनं द्रष्टव्यम् ।

जागरणावस्थायां चक्षुरादिबाह्येन्द्रियैर्बाह्यरूपादिविषयानत्ति भुङ्क्ते । तथा चाऽऽथर्वणिकैराम्नायते—स्त्र्यन्नपानादिविचित्रभोगैः स एव जाग्रत्परितृप्तिमेति ( कै०१२ ) इति । ततो बाह्यविषयभोगानत्तीत्यात्मेति तृतीयं निर्वचनं द्रष्टव्यम् । उपाधिविशिष्टस्यावस्थात्रयमुपजीव्य निर्वचनत्रयमुक्तम् । अथ केवलस्य निर्वचनमुच्यते—

यद्यस्मात्कारणादस्याऽऽत्मनो भावः स्वभावविशेषः संततः परिच्छेदरहितः । तथा च ' सत्यं ज्ञानमनन्तं ब्रह्म ' ( तै० आ० प्र० ८ अ० २ ) इत्यत्र श्रुत्यन्तरे देशपरिच्छेदकालपरिच्छेदराहित्यलक्षणमानन्त्यमभिहितम् । एवं सत्यात्मतत्त्वनिर्देशस्य प्रस्तुतत्वादखण्डैकरसत्वेन संततत्वमात्मशब्दस्य प्रवृत्तिनिमित्तम् । यदि धातुप्रत्ययजन्यमवयवार्थमुपेक्ष्य रूढिमाश्रित्य स्वरूपवाचित्वमुच्यते तदाऽध्यस्तस्य निखिलस्य जगतोऽधिष्ठानत्वेन सर्वस्वरूपत्वमस्ति । न ह्यारोपितानां सर्पधारादण्डमालाबलीवर्दमूत्रितत्वादीनामाधिष्ठानभूतां रज्जुमन्तरेण किंचिदन्यद्वास्तवं स्वरूपमस्ति । किं बहुना यद्ययमात्मशब्दो यौगिको यदि वा रूढः सर्वथाऽपि संततोऽखण्डैकरसः सर्वजगदधिष्ठानत्वेन तदीयवास्तवस्वरूपभूतः पदार्थ आत्मशब्देन विवक्षितः । वैशब्दोऽवधारणार्थः । इदमिदानीं सर्वजनीनप्रत्यक्षादिप्रमाणैः सर्वैरपि प्रतीयमानं जगदग्रे सृष्टेः पूर्वमात्मैवाऽऽसीन्न तु कार्यभूतं नामरूपात्मकं जगदासीत् । नाप्यात्मगोचरौ शब्दप्रत्ययावास्ताम् । लोके मृत्कार्यभूतघटशरावाद्युत्पत्तेः पूर्वं मृदेवास्ति न तु घटादिकम् । तथाऽपि मृद्गोचरौ शब्दप्रत्ययौ विद्येते एव । तद्वदत्रापि प्रसक्तौ सत्यां शब्दप्रत्ययावपि वैशब्देन व्यावर्त्येते । देहेन्द्रियादीनामभावेन जिह्वानिष्पाद्यस्य शब्दस्य मनोनिष्पाद्यस्य प्रत्ययस्य चाभावः सुतरामुपपद्यते । मन्विदमात्माऽऽसीदिति सामानाधिकरण्येन जगद्वैशिष्ट्यमात्मनः प्रतीयते । नीलमुत्पलमिति सामानाधिकरण्यश्रवणे सत्युत्पलद्रव्यस्य नीलत्वगुणवैशिष्ट्यस्य प्रतिभासात् ।

मैवम् । वैशिष्ट्ये सत्यग्रशब्दस्य वैयर्थ्यप्रसङ्गात् । इदानीं जगद्विशिष्ट आत्मा प्रतिभासत इत्यनुपपत्त्या स्थितिकालं परित्यज्य केवलमात्मानं वक्तुमग्रशब्देन सृष्टेः प्राचीनकाल उपादीयते । तदेवमनेन वाक्येनाखण्डैकरसमात्मतत्त्वं सूत्रितं भवति । एकादिशब्दैरखण्डैकरसत्वमेव स्पष्टी क्रियते । लोके वृक्षादिपदार्थेषु स्वगतः सजातीयो विजातीयश्चेति त्रिविधो भेदोऽस्ति । यथा शाखास्कन्धपत्रादीनां परस्परप्रतियोगिको वृक्षस्य स्वगतो भेदः । वृक्षान्तरप्रतियोगिकः सजातीयः । पाषाणप्रतियोगिको विजातीयः । तद्वदात्मनोऽपि प्रसक्तावेकशब्देन स्वगतभेदो व्यावर्त्यते । वृक्षवन्नानात्मको न भवति किंत्वेकात्मक इत्यर्थः । एवशब्देनाऽऽत्मान्तरव्यावृत्तिः । योऽयमेकः स एव न त्वन्यः कश्चित्तादृश इत्यर्थः । नान्यादित्यादिना विजातीयभेदो निषिध्यते । अन्यत्प्रकृतादात्मनो विलक्षणं किंचन किंचिदपि वस्तु न मिषत् । धातूनामनेकार्थत्वान्नाऽऽसीदित्युक्तं भवति । न च जगदुत्पादनाय मायाख्यायाः शक्तेरङ्गीकार्यत्वाद्दैन्यसद्भावः शङ्कनीयः । आत्मशक्तित्वेनावस्तुत्वेन च मायायाः पृथग्गणनानर्हत्वात् । नहि भृत्येभ्यो जीवितं प्रयच्छन्तः स्वामिनस्तवैतद्धनं त्वदीयशक्तेश्चैतावदिति विभज्य गणयन्ति । नाप्यवस्तुभूतं चन्द्रप्रतिबिम्बादिकमभिलक्ष्य द्वौ चन्द्रमसौ वस्तुभूतावित्येवं बुद्धिमन्तो व्यवहरन्ति । तस्मादङ्गीकृतायामपि मायायामात्मनोऽखण्डैकरसात्मतायां न कोऽपि विघ्नोऽस्ति । ईदृशः स यदि तत्रापि जगदनुवर्तेत तदानीं व्यर्थोऽयमग्रशब्दप्रयासः स्यात् । सामानाधिकरण्यं तु बाधायामप्युपपद्यते । यस्त्वदीयश्चोरः स स्थाणुरित्येवं बाधदर्शनात् । तद्वदत्रापि यज्जगत्त्वेनेदानीं प्रतिभासते तज्जगन्न भवति किंत्वात्मैवेति योजनीयम् । नन्विदानीमपि तत्त्वदृष्ट्या नेदं जगत्किंत्वात्मैव । बाढम् । तथाऽपि बुभुत्सोर्मूढस्य जगत्प्रत्ययदार्ढ्यादनुभवविरोधभ्रमो मा भूदिति सृष्टेः प्राचीनकाल उपन्यस्यते । कालस्यापि सृष्ट्यन्तर्भावात्कालवाचकोऽग्रशब्दोऽनुपपन्न इति चेन्न । परप्रसिद्ध्यनुसरणार्थत्वात् । परप्रसिद्ध्या परो बोधनीय इति न्यायः । परस्य तु बुभुत्सोः पूर्वसृष्टिवर्तमानसृष्ट्योर्मध्ये प्रलयकालप्रसिद्धिरस्त्यतस्तदीयभाषया बोधयितुमग्र इत्युच्यते । अनेनैव न्यायेनाऽऽत्माऽऽसीदिति शब्दद्वयं परप्रसिद्ध्या योजनीयम् । अन्यथा पुनरुक्तिपरिहाराय शब्दद्वयस्यार्थभेदेऽङ्गीकृते सति सत्ताविशिष्ट आत्मेत्येवं प्रतिभासादखण्डार्थत्वं हीयेत । श्रुतेस्त्वात्मशब्दसच्छब्दौ पर्यायत्वेनाभिमतौ । अत एव 'आत्मा वा इदमेक एवाग्र आसीत्' इत्यस्य स्थाने 'सदेव सोम्येदमग्र आसीत्' इति च्छन्दोगाः पठन्ति । सर्वथा सर्वभेदशून्य आत्माऽत्र विवक्षितो

न तु हिरण्यगर्भादिर्लौकिक आत्मा । इत्येवमर्थः सायणाचार्यैरैतरेयारण्यकभाष्ये वर्णितः स प्रसङ्गतो लोकोपकारार्थं निर्दिष्ट इत्यास्तां तावत् ।

यच्चाऽऽप्नोतीत्याद्यात्मशब्दव्युत्पत्तेः ‘ अयमात्मा ब्रह्म ’ इति श्रुतेः स्वतश्चित्सदानन्दाद्वितीयब्रह्मस्वरूपोऽप्ययमात्मा स्वाश्रयया स्वविषयया स्वानुभवगम्यया साभासयाऽविद्यया सच्चिदानन्दाद्वितीयब्रह्मस्वरूपात् प्रच्युत इव भूत्वाऽस्मिन्नविच्छिन्नजन्मजरामरणशोकाद्यनेकानर्थसंकुले प्रतिक्षणमन्यथास्वभावे मायामरुमरीच्युदकगन्धर्वनगरवद्दृष्टनष्टस्वरूपे कदलीस्तम्भवन्निःसारे नैकविधपाषण्डबुद्धिविकल्पास्पदेऽविद्याकामकर्माव्यक्तबीजप्रभवे तत्तृष्णातोयासेकोद्भूतदर्पे बुद्धीन्द्रियविषयप्रवालाङ्कुरे सुखदुःखसंवेदनानेकरसे भूर्भुवःस्वर्महर्जनस्तपः सत्येति क्रमश ऊर्ध्वलोकेऽतलवितलसुतलतलातलरसातलमहातलपातालाख्याधः सप्तलोके तत्तत्प्राण्यनुष्ठितशुभाशुभविविधकर्मोत्पन्नसुखदुःखोद्भूतहर्षशोकनृत्यगीतवादित्रक्ष्वेलितास्फोटितहसिताक्रोशितहाहामुञ्च मुञ्चेत्याद्यनेकशब्दकृततुमुलीभूतमहारवे वेदान्तविहितब्रह्मात्मानुभवासङ्गरूढ्गैकसाध्यसमूलोच्छेदे भृशं विशङ्कटे कुपितफणिफणामण्डलच्छायासदृक्षवैषयिकसुखलवाभासे संसारारण्ये कामक्रोधलोभमोहमदमत्सरैरितस्तत आकृष्यमाणः सन्ननवरतं सुरासुरनरभूतप्रेतपिशाचतिर्यगादिप्रभेदभिन्नास्वनन्तयोनिषु परिवर्तमानो मोमुह्यमानः कदाचित्कथंचित्पुण्यपुञ्जपरिपाकवशाद्वेदोदितेन भगवत्प्रीत्यर्थनिष्कामसत्कर्मानुष्ठानेन निर्गतरागद्वेषादिचित्तमलोऽनित्यत्वादिदोषदर्शनेनोत्पन्नेहामुत्रफलभोगविरागो वेदान्तेभ्यः प्रतीयमानं ब्रह्मात्मभावं बुभुत्सुर्वेदोदितशमदमोपरतितितिक्षाश्रद्धासमाधानेत्यादिसाधनसंपन्नो ब्रह्मविदमाचार्यमुपेत्याऽऽचार्योपदेशानुसारेण श्रवणमनननिदिध्यासनं च विधाय ‘ अहं ब्रह्मास्मि ’ इति ब्रह्मात्मभावमधिगच्छति । तदानीमेव नितान्तनिवृत्ताविद्यातत्कार्यः सन्

नित्यः शुद्धो बुद्धमुक्तस्वभावः सत्यः सूक्ष्मः सन् विभुश्चाद्वितीयः ।
आनन्दाब्धिर्यः परः सोऽहमस्मि प्रत्यग्धातुर्नात्र संशीतिरस्ति ।

इत्युक्तरीत्या सच्चिदानन्दाद्वितीयब्रह्मरूपोऽवतिष्ठत इत्यौपनिषदो राद्धान्तो वरीवर्ति ।

## ( द्वैताद्वैतविमर्शः ) ।

ननु वैचित्र्योपेतस्य चराचरद्वैतस्याद्वैतविरुद्धस्य सर्वलोकप्रसिद्धत्वात्कथं ब्रह्मात्मनः स्वगतसजातीयविजातीयेतिभेदत्रयशून्यत्वमद्वितीयत्वमुच्यत इति चेत्किमिदं भवदभिमतं द्वैतं प्रामाणिकमुत न । आद्ये किं तत्र प्रमाणम् । यदि ‘ प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि ’ इति प्रमाणानेकत्वबोधिन्या निरपेक्षरूपया श्रुत्या ज्ञापितं द्वैतमिति तर्हि प्रत्यक्षानुमानादिकमेव द्वैते प्रमाणम् । तथा हि—अथ द्वैतस्य

साधकं द्वैतम् । आहोस्विदद्वैतम् । आद्य आत्माश्रयो दोषः, साध्यसाधकयोरैक्यात् । द्वितीये त्वसंभवः । साध्यविरुद्धत्वात् । नहि ग्रीष्ममध्याह्नार्कमण्डलमन्धकारस्य साधकं दृष्टम् । यस्य सत्त्वे यस्याभावो नियतः स तस्य विरोधी । यथा भास्करोदये तमसोऽभावो नियतः । अतो मार्तण्डस्तस्य विरोधी । तद्वदद्वैतोदये द्वैतस्याभावो नियतमनुभवसिद्धः । अतोऽद्वैतं द्वैतस्य विरोधीति कुतस्तस्य तत् साधकं भवेत् ।

प्रत्यक्षादिप्रमाणं द्वैतस्य साधकमिति चेत् । तस्य प्रत्यक्षादेः प्रामाण्यं केन सिद्धम् । यदि प्रत्यक्षादेः प्रामाण्यसाधकमन्यदस्ति तर्हि प्रत्यक्षादिप्रामाण्यसाधकस्य तस्य प्रामाण्यसाधकमप्यन्यदपेक्षितं तस्याप्यन्यत्तस्यान्यदित्यनवस्था प्रसज्येत । अथ प्रमाणं स्वप्रामाण्ये निरपेक्षमेवेति चेत् । निरपेक्षे तस्मिन्प्रामाण्यग्रहस्य भ्रमत्वापत्तिर्दुर्वारा । तथा सति भ्रान्तेन तेन यत् साध्यते तदपि भ्रमान्न बहिर्भूतं भवितुमर्हति । यदि प्रमाणासिद्धमपि तत्सत्यमित्याग्रहस्तदा वन्ध्यासुतादेरपि सत्यत्वं प्राप्नुयात् । अथ सर्वानुभवः स्वयं प्रमाणम् । न तत्र प्रमाणापेक्षा वर्तते । करस्थितकङ्कणं प्रति किमर्थमादर्श इति सर्वप्रसिद्धप्रवादस्यापीदमेव तात्पर्यं ज्ञेयम् । स्वयंसिद्धेन तेनानुभवेन प्रमाणं संसिध्यति । सिद्धेन च तेन प्रमाणेन निष्प्रतिबन्धं द्वैतं सिध्यत्येवेति चेन्न । यतोऽनुभवानुसारेण कस्यचित् प्रामाण्यमङ्गीकृतं चेत् प्रमेयमपि प्रमाणं भवेत् । तदपि हि तवाभिमतानुभवसिद्धमस्ति । यद्येनाऽऽत्मना उत्पद्यते तत्तेनैवाऽऽत्मना निश्चेतव्यं भवतीत्येतदपि न समञ्जसम् । कदाचिद्धि रज्जुरपि सर्पात्मना परिणता भवतीत्येतावता न केनापि भ्रान्तेन पुंसा सर्परूपेण सा निश्चीयते । किंच प्रमाधीनं प्रमाणम् । प्रमाणापेक्षा च प्रमा । इत्यन्योन्याश्रयदोषोऽपि दुर्वारः । भ्रमप्रमासाधारणोऽनुभवस्तु साध्यसिद्धावव्यभिचारेण साफल्यं नैव लभते । अतो यावन्निर्दुष्टं किमपि प्रमाणान्तरं न प्रदर्श्यते तावत्प्रमाणमेव न प्रसिध्यति । स्वयमलब्धात्मकं सत्कुतस्तदद्वैतस्य साधकं स्यात् । इत्येवं द्वैतवादिनो मते द्वैतमेव प्रमाणतः सिद्धं न भवति चेदद्वैते किं प्रमाणमिति तस्य प्रश्नो वन्ध्यापुत्रप्रश्नवत्तुच्छतर इत्यत्र नास्ति संदेहः । तात्पर्य—मानमेयातीतस्याद्वैततत्त्वस्य मानविमर्शकृन्मत्तवदुपेक्ष्य एवेत्यन्ततः प्राप्नोतीति ज्ञेयम् । मानाभावेऽद्वैतमपि न सिध्यतीत्युच्यते तर्हि सति पुत्रात्यन्ताभावे वन्ध्याया अपि सिद्धिर्न स्यात् । पुत्रात्यन्ताभाव एव वन्ध्यायाः प्रकृतं स्वरूपमिति चेन्मानमेयाद्यखिलद्वैतस्यात्यन्ताभाव एवाद्वैततत्त्वस्य मुख्यं स्वरूपमिति गृहाण । तथा सति शून्यवा-

प्रसङ्ग इति चेद्‌द्वैतस्य शून्यत्वमस्माकमिष्टमेव । प्रमाणाभावेन हि द्वैतं शून्यतामेव गच्छति । अद्वैतं तु प्रमाणस्यासत्त्वे जात्वपि किंचिदपि शून्यतां न स्पृशति । प्रत्युत प्रमाणसत्त्व एवाद्वैतस्य शून्यतायाः संभावनापत्तिः । यो ह्यन्यस्यास्तित्वसिद्धौ प्रमाणान्तरापेक्षां न कुरुते स स्वस्यास्तित्वे कथं प्रमाणमाकाङ्क्षेत् । प्रतपति हि तिग्मरश्मावन्यत्राप्यन्धकारः सम्यक्पदं न लभते । तदा तस्मिन्नेव भगवति मार्तण्डमण्डलेऽत्यन्तभास्वरे( ति ) तमः कुतः स्थास्यति । अतः सर्वात्मना तूष्णींभाव एवाद्वैतं ज्ञेयम् ।

ननु विना प्रमाणमज्ञानं न निवर्तते । यत्र हि प्रमाणस्य संपर्कस्तत्रैव ह्यज्ञानस्य निवृत्तिर्दृष्टा । सति हि दीपाद्यालोकसंसर्गे रज्ज्वज्ञानं तदुत्थसर्पप्रतिभासश्चास्तं गच्छति । असति च तस्मिन्नेति चेत् । किमसिद्धं सिद्धं वा प्रामाण्यमुद्दिश्येत्थमापाद्यते । आद्ये वन्ध्यासूनुकर्तृकमृगजलस्नानस्य प्रसङ्गः । द्वितीये तु दुरुद्धराऽनवस्थैव । यदा मरुमरीचिकातोयेन चण्डरश्मिमण्डलं शीतलं भवेत्तदैव जगदेकमूलं ब्रह्मतत्त्वं प्रमाणेन प्रकाशितं स्यात्कदाचित् । प्रमाणप्रमेयाद्यभावे सुषुप्तिरेवेति चेत् । सूक्तम् । प्रमाणादीनामभावे हि जाग्रदाद्यवस्था नैव सिध्येयुः । परं तत्साक्षी स्वयंप्रकाशको वा स्वयंसिद्धो बोधात्मा भगवान्सुषुप्तिशब्देनाभिहितोऽप्यनात्मभ्यो विविक्तेन तेनाखिलद्वैतोदधौ परितः प्राशिते मोक्षाख्यश्चिन्तामणिः सलीलं पाणिगतो भवतीति तत्त्वदर्शिनामबाध्योऽनुभवः समुल्लसतीति बोध्यम् ।

ननु प्रमाणाद्यनङ्गीकारे शास्त्रीयो लौकिकश्च सर्वोऽपि तदुपजीवी व्यवहारो लुप्येतेति चेत । आस्तां नाम व्यवहारस्य लोपः । निरुद्धः प्रवृत्तो वा भवतु व्यवहारः । सर्वथाऽबुद्धमुद्दिश्यैव सः । यस्य त्वात्मतत्त्वबोधेन विलुप्तप्रायो व्यवहारः स जीवन्मुक्त एव ज्ञेयः । अत एव श्रुतिरपि—“ यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्केन कं विजानीयात । यत्र नान्यत् पश्यति नान्यद्विजानाति स भूमा ” इत्युपदिशति । स्मृतिरपि—

“ यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ।

इति तदर्थमनुसरति । व्यवहारोपरि भृशमनुकम्पा चेत्तदर्थं प्रमाणमङ्गी कुरु । तेन जन्तूनां जीवनयात्रा सिध्येत । अथापि सर्वतः प्रदीप्त आत्मयाथात्म्यबोधाग्नौ शलभवत्तदुभयस्य विलोपेन निःशेषं द्वैतं भस्मसाद्भवत्येव ।

दृश्यं तापत्रयं सच्चेत्तस्योपशान्तिः कदाऽपि न स्यात् । तदुपशान्त्यभावे तद्बोद्धरि जीवे कैवल्यस्य वार्ताऽपि दुष्करा । दृश्यमार्जने सत्येव तद्विज्ञातरि

ामाद्यागतं बोद्धृत्वादिकं चिराय विलीनं जायते । सबीजस्य तस्यात्यन्तविलय एव ोक्षभावोऽवगन्तव्यः ।

नन्वास्तां नाम भ्रमसिद्धमपि प्रमाणम् । का क्षतिः । यद्वदद्वैतवादिनस्तव ते भ्रमसिद्धाऽपि श्रुतिः प्रमाणं तद्वदेव द्वैतपक्षे भ्रमसिद्धमपि प्रत्यक्षादिकं ामाणमेवेति चेन्न । न ह्यद्वैतसिद्धान्ते वेदोऽपि प्रमाणमिति भगवती श्रुतिरेव वयं कथयति । तथा हि—“ नेह नानाऽस्ति किंचन । विज्ञातारमरे केन विजा- ीयात् । यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्, केन कं विजानीयात् । ाव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा । मृत्योः स मृत्युमाप्नोति य इह ानेव पश्यति । एकमेवाद्वितीयं ब्रह्म । यत्र वेदा अवेदा भवन्ति । यद्वाचाऽन- युदितं येन वागभ्युद्यते । यन्मनसा न मनुते येनाऽऽहुर्मनो मतम् । तदेव ब्रह्म वं विद्धि नेदं यदिदमुपासते । यदि मन्यसे सुवेदेति दभ्रमेवापि नूनम् । यत्र ान्यत्पश्यति, नान्यद् विजानाति स भूमा । भूमैव सुखम् । नाल्पे सुखमस्ति” ति । अतो निःशेषद्वैतव्यावृत्तावेव श्रुतेः परमं तात्पर्यम् । नाद्वैतब्रह्मबोधने । ात्र तु शाखाचन्द्रन्यायेन द्वारभूता सा नैव प्रमाणम् । “असङ्गो न हि सज्जते ” ति श्रुतेः परमार्थतो योऽसङ्गस्तस्य प्रमाणादिद्वैतेन सह संसर्गः कथं स्यात् । अत एव निर्विशेषमद्वैतं वस्तु सर्वथाऽव्यवहार्यमिति वेदः कथयति । तस्माद्- द्वैते व्यवहारः कथं सिध्येदित्याक्षेपः प्रश्नो वा द्वैतिनं प्रत्येव कार्यः ।

ननु द्वैतव्यावृत्तौ श्रुतेः प्रामाण्यमित्युक्तौ प्रमाणप्रमेयव्यवहारस्तव गले बला- पतितः । सत्येवमद्वैते प्रमाणादिव्यवहारः सर्वथाऽसंभवीति तव कथनं निःसारमिति ेन्न । यो ह्युक्तव्यवहारः सत्य इति मनुते तस्य बोधाय “ पररीत्या परो ोधनीयः ” इति नियमं क्षणमवलम्ब्य तथोक्तम् । तेनाद्वैतवादिनो मम न ाऽपि क्षतिः ।

ननु वेदे द्वैतमपि प्रतिपादितमुपलभ्यते । अतस्तदेवास्माकमभिमतम् । प्रत्यक्ष- सेद्धत्वात्तस्येति चेत् । किं ब्रह्मणो भिन्नं जगदिति वेदेनोपदिष्टम् । उत जीवा- पृथगित्युक्तम् । नोभयमपि । यतो “ ऐतदात्म्यमिदं सर्वम् । सर्वं खल्विदं ब्रह्म । नेह नानाऽस्ति किंचन । नात्र काचिद्भिदाऽस्ति । मृत्योः स मृत्युं ाच्छति । य इह नानेव पश्यति ” इत्यादिना वाक्यनिचयेन निखिलोऽपि भेदः कण्ठतो निराकृतो वेदेन ।

सृष्टिवाक्येभ्यो भेदः प्रतीयत इति चेत्तदपि न । नहि ब्रह्मणो भिन्ना सृष्टिर्भवितुं शक्या । यो हि यस्माद्भिन्नस्तस्य तस्मादुत्पत्तिर्न दृश्यते लोके ।

पटाद्भिन्नो घटः कदाऽपि पटान्न जायते । मनुष्याद्भिन्नः पशुरश्वादिर्मनुष्यान्नोत्पद्यते । महिषाद्भिन्नो गौर्न महिषाज्जनिं लभते । “ जनिकर्तुः प्रकृतिः ” (पा० सू० १।४।३०) इति शासनात्प्रकृत्यर्थे पञ्चमी विभक्तिर्भवति । “ यतो वा इमानि भूतानि जायन्ते । तस्माद्वा एतस्मादात्मन आकाशः संभूतः । आत्मन एष प्राणो जायते । तत्सत्यम् । स आत्मा । यद्भूतयोनिं परिपश्यन्ति धीराः ” एवमादिभिः सृष्टिश्रुतिभिः परमात्मा चराचरस्य जगतो योनिः प्रकृतिः । उपादानकारणमित्युक्तम् । उपादानकारणात्तत्कार्यस्य भेदो नास्तीति मृद्घटजलतरङ्गसुवर्णकटककुण्डलादिषु प्रत्यक्षसिद्धम् । अत एव “ ध्रुवा पृथिवी ध्रुवा द्यौः ” इत्यादिवेदवाक्येषु पृथिव्यादीनां ध्रुवत्वमुपवर्णितमुपपद्यते । अन्यथा सावयवत्वात्कार्यभूतपृथिव्यादीनां नाशः प्रत्यक्षसिद्धः । नैव तेषां स्वतो ध्रुवत्वं कदाऽपि । अत उपादानभूतध्रुवब्रह्मणोऽभिन्नत्वादेव तेषां ध्रुवत्वकथनं समुपपद्यते । “ महतः परं ध्रुवम् ” इति श्रुतौ ब्रह्मैव ध्रुवपदेनोक्तम् ।

ननु यद्यस्मादभिन्नं तत्तस्य कार्यं न भवति । यथा मृदभिन्ना मृत्स्ना न मृदः कार्यम् । घटो वा घटस्य, तन्तवो वा तन्तूनाम् । तथा ब्रह्मणोऽभिन्नं चेज्जगन्नैव तस्य कार्यं भवेदिति चेद्बाढम् । अथापि “ ऐतदात्म्यमिदं सर्वम् । सर्वं खल्विदं ब्रह्म ” इत्यादिश्रुत्या कार्यं कारणादभिन्नमुपदिष्टम् । तदवश्यमभ्युपेयं श्रुतिशरणैः । यद्यभिन्नताकार्यतयोर्विरोधाच्छ्रुत्युपदिष्टकार्यत्वाङ्गीकारे संकोचः स्यात्तदा श्रुतिः कार्यत्वभ्रममनुवदतीत्येव वक्तव्यम् । तस्या मुख्यं तात्पर्यमभेद एव ज्ञेयम् । यद्यपि मृद्घटयोः सुवर्णकटकयोर्वा अभेदात्तयोर्वास्तवः कार्यकारणभावो न संभवति तथाऽपि भ्रमसिद्धः सोऽस्त्येव । सृष्टिप्रतिपादिका श्रुतिस्तं लोकप्रसिद्धं भ्रमादनतिरिक्तं कार्यकारणभावमनूद्य वास्तवमभेदं विदधातीत्येव सिध्यति । अत एव—

> मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिर्या चोदिताऽन्यथा ।
> उपायः सोऽवताराय नास्ति भेदः कथंचन ॥

इति माण्डूक्यकारिकायां भगवत्पादपरमगुरूणां गौडपादाचार्याणां श्रुत्यनुसारी उपदेशः संगच्छते ।

योऽपि कार्यकारणयोर्भेदः प्रत्यक्षप्रसिद्ध इति ब्रूते तेनापि भेदज्ञापिका श्रुतिर्लोकप्रसिद्धं तं भेदमनुवदतीत्येव वक्तव्यम् । किंच यदि महिषाश्ववद्भेदसत्त्वे मृन्मृत्स्नावदभेदसत्त्वे च कार्यकारणभावो न संभवति तर्हि स भ्रमान्नातिरिच्यत इत्येव वाच्यम् । मोहादध्यारोपितो हि पदार्थोऽधिष्ठानादभिन्न उपलभ्यते ।

यथा रज्ज्वामारोपितः सर्पो रज्जोरभिन्नः । रङ्गारोपितं रजतं पृथगसत् । मरुमरीचिकास्वध्यारोपितस्य पानीयस्य ताभ्यः पृथक्सत्त्वाभाववद्वा । अधिष्ठानं विहाय आऽऽरोप्यस्य प्रसिद्धिरेव न सिध्यतीत्यधिष्ठानाद्भिन्नमध्यस्तं वस्तु कालत्रयेऽपि तत्र नास्ति । अत एव कार्त्स्न्येनाधिष्ठिते ब्रह्मणि प्रतिभातं द्वैतं जगद् ब्रह्मणो भिन्नं नैवास्तीति श्रुतेर्डिण्डिमः श्रवणपथमागच्छति । अत एव च प्रसक्तं विजातीयभेदमपि सुतरां तत्र निरस्य " नेह नानाऽस्ति किंचन, नात्र काचिद्भिदाऽस्तीति, एकमेवाद्वितीयं ब्रह्म " इति चैवमादीनां वाक्यानां निचयेन स्वगतसजातीयविजातीयेतित्रिविधभेदशून्यं ब्रह्मतत्त्वमित्यपौरुषेयो वेदः सुस्पष्टं पाठयति । तस्मान्न ब्रह्मणो भिन्नः कश्चन जीवो नाम तत्त्वतोऽस्ति । नैव च तदभिन्नाज्जीवाज्जगदपि भिन्नं वर्तत इति सिद्धम् । ननु—

" ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे ।
छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः ॥
द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्यो अभिचाकशीति ॥

एवमादिवेदमन्त्रेभ्यो जीवेश्वरयोर्भेदः सुस्पष्टं प्रतीयते इति चेत् । बाढम् । किंतु प्रातिभासिकः सः । तमौपाधिकं प्रसिद्धं भेदाभासं श्रुतिरनुवदतीत्येव ज्ञेयम् । यथा कोऽपि विज्ञः पुमानज्ञबुद्धिसिद्धस्य रजतस्यानुवादं कुरुते " यां त्वं रजतं जानासि न सा रजतम् । किंतु शुक्तिरेव " इत्यस्मिन्विज्ञवाक्ये रजतशब्दस्य प्रयोगो भ्रान्तबुध्द्यनुसारतस्तद्भ्रमानिरासार्थं दृश्यते । तद्वद् भगवती श्रुतिरपि मूढबुध्द्युत्प्रेक्षितं जीवेश्वरयोर्भेदमनुवदति तन्मोहनिरासाय । नोपदिशति । आपामरप्रसिद्धत्वात्तस्य । अनधिगताबाधितार्थबोधकत्वेन हि प्रमाणसामान्यस्य प्रामाण्यं शास्त्रलोकप्रसिद्धम् । अत एव " द्वा सुपर्णा " इति श्रुतेरपि द्वैते भेदे वा नैव तात्पर्यम् । भगवद्याथात्म्यजिज्ञासुः साधको ह्यापामरप्रसिद्धद्वैतानुभवतो भगवत्तत्त्वविषयिणीं दुर्गमतां ज्ञात्वा तत्तादात्म्यं कामममसंभवीति आपाततो मनुते । तेन प्रयत्ने तस्य शैथिल्यं जायते । तथा सति तादात्म्यस्य वार्ताऽपि न श्रूयेत । अतो भगवत्तादात्म्यस्य सर्वथोपपन्नत्वं तद्विषयिणी चोत्कण्ठा चापेक्षिता । ताभ्यां यत्ने तैक्ष्ण्यं साफल्यं च सिध्येत् । अतो मातुरप्यधिकप्रेमार्द्रा श्रुतिजननी " सुपर्णपदेन जीवेश्वरयोर्वैजात्यं भ्रान्तप्रसञ्जितं सुतरां दूरी करोति । " सखाया " इति विशेषणेन तयोः समानशीलत्वं ख्यापयति । " समानशीलयोः सख्यम् " इति

तु प्रसिद्धमेव । तच्च सख्यमुभयोरपि सच्चिद्रूपत्वेन ज्ञेयम् । तेन च विशेषणेन तादात्म्यविषयकदौर्लभ्यस्याप्यविवेकप्राप्तस्य निवारणं जायते । सुष्ठु शोभनौ पर्णौ पक्षौ ययोस्तौ सुपर्णौ ( पक्षिणौ ) इत्यर्थकेन पदेन तयोः संमीलनं नाम तादात्म्यं कठिनमित्यपि व्यज्यते । सख्युः सख्या सह संमेलनं साहजिकमिति प्रसिद्धं सर्वत्र । ननु जले स्थितमपि जलजं यथा तेनासंस्पृष्टं तथा जीवसांनिध्येऽपीश्वरस्य तेन सह संमीलनं भवितुमशक्यम् । वस्तुतोऽसङ्गत्वादीश्वरस्येति चेत् । अस्याः कुशङ्काया अपनोदार्थमेव श्रुतिः सयुजाविति कथयति । युज्यतेऽनेनेति युक् संबन्धस्तादात्म्यलक्षणः समान एकः शाश्वतिकश्च ययोस्तौ सयुजाविति तस्यार्थो ज्ञेयः । वैयधिकरण्यव्यावृत्त्यर्थमर्थात्सामानाधिकरण्यबोधनाय " समानं वृक्षं परिषस्वजाते " इति ब्रूते श्रुतिः । सत्यपि सामानाधिकरण्ये विजातीययोस्तादात्म्यं न संभवति । जीवेश्वरयोस्तु साजात्यं सादेश्यं च वर्तते । सच्चिदानन्दात्मना साजात्यमस्ति । एकत्र स्थित्या च सादेश्यं विद्यते । एवं साधर्म्ये विराजमाने तत्त्वतो भेदकस्य वैधर्म्यस्याभावाच्च तयोर्भेदः प्रदत्तजलाञ्जलिरेवेति पर्यवस्यति ।

निरवयवस्य वस्तुनः स्वरूपभेदमन्तरेण निरुपाधिको भेदः कथं वक्तुं शक्यः । न ह्येकस्वरूपमाकाशं, कालो दिग्वा औपाधिकभेदं विना भिन्ना भवन्ति । स च भेदस्तत्त्वत उपाधेरेव । नोपधेयस्य । स्वच्छतरे स्फाटिके सांनिध्यात् स्वीयलौहित्यासञ्जकजपाकुसुमवदन्यस्मिन्नात्मधर्मासञ्जकस्योपाधेरागन्तुकभेदप्रयोजकत्वेऽपि तस्यैकदेशस्थत्वं नैवोपधेये भेदापादकम् । यथा मठान्तर्वर्तिघटाकाशो न मठाकाशाद्भिन्नः । तथा जीवस्य परिच्छिन्नत्वेऽपि परमात्मनो व्यापकत्वाद्यत्र जीवस्तत्रैवान्तर्यामितया ईश्वरो वर्तत इति तयोरेकदेशस्थत्वान्न तयोर्भेदः । कुत्रचित् साजात्यसादेश्ययोः सत्त्वेऽपि दुरदृष्टवशाच्छत्रुत्वं दृष्टमपि प्रकृते परमं सख्यमस्तीति नैव जीवेश्वरयोर्भेदः ।

नानात्वमर्थाद् भेदं सर्वथा निषेधन्ती श्रुतिरपि " किंचन, काचन, एकमेव, सर्वमात्मैव, इत्यादिशब्दप्रयोगं कुर्वाणा स्वगतः, सजातीयो विजातीयो वा कोऽपि भेदो ब्रह्मणि नैवास्तीत्यसंदिग्धं बोधयति ।

ननु " नेह नानाऽस्ति " इति श्रुतिर्ब्रह्मणि सजातीयं भेदमेव निवारयति न विजातीयम् । सजातीयभेदप्रत्याख्यानं त्वस्माकमिष्टमेव । यतो वयमपि द्वितीयं परमेश्वरं नाङ्गी कुर्म इति चेन्न । " किंचनेति श्रुतेः " इह अर्थाद् ब्रह्मणि " किंचन " किमपि ' नाना ' द्वैतं भेदो वा नास्तीति सा सर्वविधं द्वैतमर्थाद्भेदं निषेधति । न केवलं सजातीयम् । सत्येवं सुस्पष्टे श्रुत्यर्थे

जीवब्रह्मभेदस्य, जीवमिथोभेदस्य, जीवजगद्भेदस्य जगद्ब्रह्मभेदस्यान्यस्य वा कस्यचित्स्वकपोलकल्पितभेदपिशाचस्य नास्त्यत्र ग्रीष्मीयमध्याह्नमार्तण्डवत् प्रदीप्यमाने श्रौतसिद्धान्ते कियानप्यवसर इत्यवगन्तव्यम् । एवमेव " नात्र काचन भिदाऽस्ति । नान्यत्किंचन मिषत् । आत्मैवेदं सर्वम् । एकमेवाद्वितीयं ब्रह्म " इत्यादिः श्रुतिसमूहः सर्वप्रकारं भेदं सुतरां निषिध्य परब्रह्मणोऽद्वितीयत्वं द्वैतस्य च निखिलस्य शुक्तिरूप्यवत्, मरुमरीचिकातोयवत् रज्जुसर्पवद्वा प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वात्मकं मिथ्यात्वं सुव्यक्तमावेदयतीति बोध्यम् ।

यस्तु जीवं ब्रह्मणस्तत्त्वतो भिन्नं कथयति स भेदवादीत्थं प्रष्टव्यः । त्वं कोऽसि । किं जीवः, उत ब्रह्म, आहोस्विदीश्वरः । यद्याद्योऽसि तर्हीश्वराद्भिन्नः किंवा ब्रह्मणः पृथक । ईश्वराच्चेत्तत्र कि भेदकम् । ईश्वरे विद्यमानं मयि चावर्तमानं सर्वज्ञत्वमेव तथेति चेद्बाढम् । यत ईश्वरः सर्वज्ञो नाहमिति कथयसि ततो " अर्थं बुद्ध्वा वाक्यरचना " इति न्यायात ( नियमात ) सर्वशब्दस्यार्थं जानास्येव त्वम् । सत्येवं त्वमपि सर्वज्ञ एव । कथं तर्हि नाहमिति ब्रवीषि । यद्यपि सामान्यतः सर्वं जानाम्यहमथापि विशेषतो न जानामीति नाहं सर्वज्ञ इति चेत् । एवमप्यन्ततः शब्दस्यार्थं जानास्येव । यतो विशेषत इतिशब्दस्य प्रयोगं करोषि । यदि शब्दस्यार्थं न जानासि तदेश्वरे कं धर्मं साधयसि । येन तस्मात्तव भेदः सिध्येत् । अथ जीवोऽपि सर्वज्ञ इति चेत्कथय मन्मनसि किं वर्तते । युष्मदुच्चारितस्य किंशब्दस्य योऽर्थः स एव युष्मन्मनस्यस्तीति चेत् । अनया रीत्या शक्यं सर्वकर्तृत्वमपि जीवे समापतति । अशक्यं तु तत् । नेश्वरे जीवे च वर्तते । ईश्वरः सत्यसंकल्पो न जीवस्तथेति चेत् । किं सत्यशब्दः संकल्पस्य विशेषणमुत संकल्पविषयस्य । आद्ये तव संकल्पो येन हेतुना न सत्यस्तेनैव हेतुनेश्वरसंकल्पोऽपि नैव सत्यः । कल्पितत्वदृश्यत्वरूपो हेतुरुभयत्र समानः । ईश्वरसंकल्पस्य विरामे प्रलयावेदकश्रुतेः, तस्योदये च सृष्टिश्रुतेः समन्वयो भविष्यति । सृष्टिप्रलयगोचरः संकल्प एक एवेश्वरस्य नित्यः। एवं चेदपि तन्नित्यत्वं न मिथ्यात्वविरोधीति ज्ञेयम् ।

जीवसंकल्पः कल्पित इति यद्युच्येत तदा सा कल्पना कल्पिता वा न वा । यदि कल्पिता तदाऽनवस्थाप्रसङ्गः । न चेत्कल्पिता तदेशकल्पनावत्साऽपि नित्या स्यात् । तेन यादृश ईशसंकल्पस्तादृश एव जीवस्यापि संकल्प इति समायाति ।

"नासदासीन्नो सदासीदिति श्रुतेः प्रलयकाले सर्वस्यैवाभावः प्रतीयते । इतीश्वरसंकल्पस्यापि तदानीमस्तित्वं वक्तुमशक्यम् । प्रलयसमये प्रलयगोचरः संकल्पोऽवश्यं स्थास्यतीति चेत्तर्हि सर्वप्रलयः कथं सिध्येत् । स तु श्रुत्या उपदिष्टः । अतः परमेश्वरस्य संकल्पोऽपि कल्पित इति सिध्यति । संकल्पस्याभावेऽपि न काऽपि क्षतिः । यतस्तदानीं भेदमात्रं निवर्तयितुं वयं प्रवृत्ता नैव त्वदभिमतेश्वरसिद्धौ । स्वप्नतुल्यपदार्थेषु सत्यत्वस्य वार्ताऽपि दुष्करा । सर्वज्ञत्वं सर्वकर्तृत्वं चोक्तरीत्या जीवसाधारणम् । तस्माज्जीवेश्वरयोर्भेदचर्चाऽपि सर्वथाऽसंगतेति ज्ञेयम् । जीवब्रह्मणोरपि भेदो नास्त्येव । यतः सर्वात्मके तस्मिन् ब्रह्मणि सर्वज्ञत्वं, व्यापकत्वमल्पज्ञत्वमित्यादि सर्वं संभवति । अतस्तत्र विरोधशङ्कायाअप्यनवसरो ज्ञेयः ।

अबाध्यत्वेन सत्यत्वं स्वप्रकाशत्वेन चिद्रूपत्वं निरतिशयप्रेमास्पदत्वेनाऽऽनन्दरूपत्वं च जीवेऽपि वर्तते । अतः "सत्यं ज्ञानमनन्तं ब्रह्म" इति श्रुत्युपदिष्टं ब्रह्मणः स्वरूपलक्षणं जीवे निष्प्रतिबन्धं समन्वेतीत्यलब्धावकाशो जीवब्रह्मणोस्त्वदभिमतो भेदभूतः क्वापि विलीन एवेत्यसंदिग्धं सिध्यति ।
नन्वेवमपि जीवो नान्तर्यामी किंत्वीश्वर एव तथेति—

"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया" ॥

इति भगवत्स्मृतेर्निश्चीयते । तस्माज्जीवब्रह्मणोरभेदो नाम ऐक्यं दुर्घटमिति चेन्न । तथा हि—व्यवहारनियन्तृत्वं किंवा स्वीयसत्ताप्रदातृत्वमिदमेवान्तर्यामित्वम् । सत्ताप्रदातृत्वं त्वधिष्ठानस्यैव धर्मः । जगदधिष्ठानभूतब्रह्मसत्तयैव नियम्यं नियामकं च सर्वं सत्तावद्वर्तते । स्वीयदेहेन्द्रियादीनां जीवोऽपि नियन्ताऽस्ति । यद्धि प्रकृतं तदेव सर्वशब्दस्यार्थः । एवमात्मनः शरीरेन्द्रियादीनां नियन्तृत्वाज्जीवोऽपि सर्वनियन्ता वाऽन्तर्यामी भवितुं शक्यः ।

भेदवाद ईश्वरः सर्वकर्ता कथं स्यात् । यद्यज्जीवकृतं वस्तु तदीश्वरकृतं कुतो भवेत् । इत्थयं भेदवादिमत ईश्वरस्य सर्वकर्तृत्वे महानन्तरायोऽस्ति । यदि जीवकृतमपि वस्त्वीशकृतं मन्यसे तर्हि जीवकृतं किमपि नास्त्येवेति स्यात् । तत्त्वसमञ्जसम् । तस्मात्सर्वकर्तुः कस्याप्यसत्त्वादीश्वर एव नास्तीति प्रसङ्गो भेदवादिमते प्राप्नुयात् । किंवा सर्वेऽपीश्वरा एव भवेयुः । तथा सति क्षित्यङ्कुरादिकर्तृत्वेन केवलं विज्ञातृत्वं सिध्येन्नैव सर्वज्ञत्वम् । अल्पकर्तृत्वेनाल्पज्ञत्वम् । ततस्त्वदभिमत ईश्वरोऽपि जीवकोटिप्रविष्ट इत्यगतिकतया वक्तव्यं भवेत् ।

अधिकज्ञताऽथवाऽधिककर्तृताऽपि नेश्वरत्वस्य प्रयोजिका । यतस्तत्रांशतोऽज्ञत्वस्याकर्तृत्वस्य च प्रवेशो वर्तते । ईश्वर एव सर्वकर्ता चेज्जीवेऽकर्तृत्वं दुरुद्धरमेव । तत्तु सर्वप्रसिद्धकर्तृत्वविरुद्धम् । विरोधपरिहाराय जीवे प्रसिद्धं कर्तृत्वं संरक्षितं चेत्तेनैव कार्यसंभवे जीवभिन्न ईश्वरोऽन्यथासिद्धः स्यात् । नहि विद्यते तदानीं तस्यापेक्षा । घटपटादिस्तु कुलालं तन्तुवायादिं च लब्ध्वा निरपेक्षो भवत्येव क्षित्यङ्कुरादिः परमीश्वरमपेक्षेत स्वीयजनौ । एवमपि सर्वकर्तेति तव सिद्धान्तहानिः ।

अद्वैतसिद्धान्ते तु परमेश्वरः सर्वात्मा विद्यते । अतः सर्वकर्तृत्वं सर्वज्ञत्वं च तस्मिन्निराबाधं वर्तत इति बोध्यम् । प्रखरप्रकाशभास्करमण्डले घूकारोपितान्धकारवज्जीवेनैव हि वस्तुतः स्वाभिन्ने परमात्मन्यविद्यावशतो जगदारोपितम् । तस्याश्चाविद्याया आत्मयाथात्म्यविद्यया बाधे जाते तत्कार्यं जगदपि चिराय बाधितं जायते । अत एव प्रज्ञात्मा एव शिवोऽद्वैतस्तुरीयः परमात्मा इति माण्डूक्यकारिकायां साक्षात्कृतब्रह्मतत्त्वैर्जगद्वन्द्यैर्गौडपादमुनिभिरुपदिष्टम् ।

ननु भवदुक्तरीत्या विमर्शे कृते यद्यपीश्वरत्वं सुसंगतं प्रतिभाति तथाऽप्येतन्मतेनेश्वरेऽनन्तत्वं प्रसज्येतेति चेत् । किं संख्ययाऽनन्तत्वप्रसक्तिरिति ब्रूष आहोस्वित्परिमाणतः । यदि परिमाणतस्तर्हि तदिष्टमेवास्माकम् । संख्यया चेत् सा नियमेनोपाधिग्रहणग्राह्या । तदभावान्नैव सा तात्त्विकी । अतो नास्माकं काऽपि क्षतिः । यथा सत्यपि दशावताराणां परस्परं भेदे विष्णोर्दशविधत्वं नास्ति तेषु सर्वेष्वपि विष्णुत्वं विष्णोरेकत्वं चाबाधितमेव विराजते तथैवेदं सांख्यमनन्तत्वं ज्ञेयम् । तत्तदुपाधौ सुव्यक्तचित्स्वरूपेण भोगोऽपि सुसंगत एव बोध्यः । अत एव भोगज्ञानयोर्न सांकर्यम् । सर्वोपाधिष्वेक एव भोक्ता । तस्यैव सर्वोपाधिनियामकत्वात्सर्वेश्वरत्वम् ।

असङ्गाऽनाद्यनन्ता जन्यादिषड्विकारशून्याऽद्वैता संविदेव पारमार्थिकं तत्त्वम् । तत्रैव निःशेषं दृश्यं कल्पितम् । तदेव प्रत्यगभिन्नं ब्रह्म । तत्रैव ब्रह्मणि भोगो भोक्ता, भोग्यम्, नियन्ता, नियम्यं, नियमनं, ज्ञाता, ज्ञेयं, ज्ञानं, इत्यादित्रिकं कल्पितम् । एतत्सर्वं द्वैतं प्रातिभासिकम् । तदधिष्ठानभूतमद्वैतवस्तु सत्यम् । लौकिकः शास्त्रीयश्च सर्वोऽपि व्यवहारो द्वैतोपजीवी पूर्वपक्षीभूतः । पारमार्थिकः सिद्धान्तस्तु सदाशिवमद्वैतमेव । अत एव चोक्तं वृद्धैः—

"न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता" ॥ इति ।

'तदेवाहमिति सर्वं मङ्गलम् ।

इति द्वैताद्वैतविमर्शः । संपूर्णं चाऽऽत्मतत्त्वविमर्शप्रकरणम् ॥

---

## अथाऽऽत्मोद्धारविमर्शः ।

उद्धरेदात्मनाऽऽत्मानं नाऽऽत्मानमवसादयेत् ।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥
बन्धुरात्माऽऽत्मनस्तस्य येनाऽऽत्मैवाऽऽत्मना जितः ।
अनात्मनस्तु शत्रुत्वे वर्तेताऽऽत्मैव शत्रुवत् ॥ [भ०गी०६।५-६]

अथ सत्यामेवेच्छायां प्रयत्यतेऽसत्यां च नेति सर्वत्रानुभवसिद्धान्वयव्यतिरेकाभ्यां कृतिहेतुत्वमिच्छायाः सिध्यति । अत एव " जानाति इच्छति यतते " इति ज्ञानेच्छाकृतीनां कार्यकारणभावसूचकः पौर्वापर्यक्रमः शास्त्रे निर्दिष्टः । स्थिते चैवं प्रकृतात्मोद्धारानुकूलकृतिहेतुभूता स्पृहा कस्य पुंसो जायत इति विचारणायां यद्वदभिजातः पुरुषो हठात्कारायां निबद्धश्चेत्तरमादाकस्मिकाद्बन्धनान्निर्गन्तुमिच्छति तदनुसारं न्याय्यं प्रयत्नं च कुरुते तद्वद्यस्यान्तःकरणमवनत्युद्भूतेनाऽऽधिना नितरां विद्धं तस्यैव पुंसः प्रबलाऽऽत्मोद्धारेच्छा समुत्पद्यते । विद्यमानायामवनत्यवस्थायामेव प्रणिधानं मन्यमानस्य कापुरुषस्य सा भवितुं सुतरामशक्या । " असंतोषः श्रियो मूलम् " अयं नियमो यद्वदाधिभौतिक्याः संपत्तेः साधकस्तद्वदाध्यात्मिकसंपत्तेरपि प्रयोजकोऽस्ति । महत्त्वाकाङ्क्षा दृढप्रयत्नस्य मूलम् । साऽऽकाङ्क्षाऽऽत्मविश्वासेन योग्यप्रयत्नेन सम्यग्ज्ञानेन च समुपबृंहिता चेत्तं पुरुषं प्रति समुन्नतेः शृङ्गं प्रापयति । येनाऽऽत्मनो दिव्यं स्वरूपं सत्संगतेरभावाच्छास्त्रश्रवणादेरभावाच्च नाधिगतं तेन पुंसा कथं परमार्थसंसाधकेन भाव्यम् । अद्ययावधे महान्तः पुरुषा अभवंस्तेषां मनस्यवनतेः परं तीरं गन्तुमत्यन्तं चिन्ता समजायत । तत एव तेभ्यः करुणाष्टकानां भगवत्प्रार्थनायाश्च प्रादुर्भावः समभूत् । आत्मनो वास्तवं स्वरूपं तु " ज्ञानमयमानन्दमयमद्वयमव्ययं परमपवित्रम् " च सदपि वयमज्ञानतो दुःखगर्ते पतित्वा पचाम इत्यस्या दुरवस्थायाः प्रत्नानां पुरुषाणां मनसि साधकावस्थायामत्यन्तं घृणाऽऽसीत् । आत्मनो दिव्यस्वरूपस्यानुभवं स्वीयैवाशुद्धा मनोवृत्तिः स्वैराणि चेन्द्रियाणि प्रतिबध्नन्तीति विज्ञायात्यन्तं खिन्नाः सन्तस्ते भगवता साकमपि महान्तं कलहमकुर्वत । तीव्रतरया चिन्तया तेषां नेत्रेभ्यः संततमश्रुप्रवाहो वहति स्म । अहर्निशं मनोऽस्वस्थमासीत् । आत्मनो दिव्यस्वरूपं साक्षात्कर्तुं दिव्यं सामर्थ्यमावश्यकमिति निश्चित्य महता प्रयत्नेन तत्संपादयांचक्रुः । इन्द्रियमनसोर्निग्रहार्थमनुष्ठिते प्रयत्ने नैराश्यप्रसङ्गे सति भगवत्कृपैवाऽऽशायाः किरणः संदृष्टः । आत्मोद्धारसाधनानां ज्ञान-

मपि भगवत्संनिधावेव करुणया तैः प्रार्थितम्। उच्चैः कृता प्रार्थना भगवतः कर्णयोः प्रविष्टा। ततो भगवत्कृपया तेषां मनोनिग्रहसामर्थ्यमुपचितम्। चित्ते सुप्तं सामर्थ्यं जागृतमासीत्। ततः प्रफुल्लं जातम्। तेषां यत्नः सफलो बभूव। हेतुरपि संसिद्धः। आत्मनः परममहत्पदानुभवसमकालमेव तैर्महात्मभिः संसाराख्ये प्रतप्तवालुकामयप्रदेशे संतप्यमानानां जीवानां समाधानाय सदुपदेशामृतस्यानवरतं वृष्टिः कृता। संसारार्णवमग्नानां जीवानामुद्धरणार्थं स्वीयं कर्तव्यं तैः कृतमेव। परं तेषामुपदेशामृतस्य सम्यगुपयोगं वयमिदानीं न कुर्मः। तदुपदेशं शृणुमो वाचयामश्च किंतु तदनुसारं नैव वर्तयामः। उन्नतमानि तत्त्वानि केवलं श्रुत्वा जनानामग्र उक्त्वा वा किं प्रयोजनम्। तानि प्रशस्याचरणेन स्वानुभवारूढानि कर्तव्यानि। सांप्रतं भूदेववृन्दस्य किमप्यावश्यकं चेदिदमेव। अधुनातना द्विजाः पुरातनानामेव ब्राह्मणानां वंशजाः। अतस्तेषां ब्राह्मणानां ये विकासोन्मुखा आनुवंशिका गुणास्ते संप्रति केषुचिद्द्विजेषु वर्तन्त एव। पारम्परिकाः केचन संस्कारविशेषा अपि वर्तन्ते। परं तेषां सर्वात्मना विकासार्थं दीर्घः प्रयत्नोऽपेक्ष्यते। तस्यैव कार्पण्यमधुनातनेषु द्विजेषु दरीदृश्यते। ब्राह्मणानामौत्पत्तिका गुणास्तु—

शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम्॥

इत्येते सन्तीति भगवानेव कथयति। एतेष्वेव गुणेषु चातुर्वर्ण्यान्तर्गतं स्वभावजं प्रभुत्वमाविशति। एतेषां विकासेनैव येन साकमितरैः कदाऽपि स्पर्धा कर्तुं न शक्यते यत्कस्याप्यपकारकं कदाऽपि न जायते यत्सर्वेभ्यः सुखं दातुं समर्थं तस्याऽऽध्यात्मिकसामर्थ्यस्योदयः संभवति। तस्याभावादेव सांप्रतिकानां भूसुराणां दुरवस्था दरीदृश्यते। तस्याः समुन्मूलनस्योपायस्तु भगवदुक्तानां गुणानां स्वस्मिन् विकासीकरणमेव। परं सांप्रतिकद्विजशिक्षणे तस्य गन्धोऽपि नोपलभ्यते। तादृशं शिक्षणमत्यन्तमनभिमतमेवेदानींतनानां द्विजानाम्। अत एव भूदेववृन्दमितरैर्द्विष्यते तुच्छी क्रियते वा। उक्तैर्गुणैः संपन्नः पुमान् कस्याप्यादरणीय एव भवति। परं त्वादौ तत्संपिपादयिषुणा भाव्यम्। वयं ब्राह्मणवंशजास्तेषां गुणानां कर्मणां चास्मासु परिपोष आवश्यक इतीच्छा भगवत्कृपया द्वित्राणामुत्पन्ना चेत्तेनापि महत्कार्यमुत्तरत्र भविष्यतीति विश्वास इति शम्॥

---

## अथ भगवद्भक्तिविमर्शः ।

भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ॥ ( गी० ११ । ५४ )
प्र० का दुर्लभा नराणाम् ? उ० हरिभक्तिः ।

प्र० कस्यैश्वर्यं सकलम् ? उ० यः शंकरमाराधयेद्भक्त्या ( प्रश्नोत्तरमा० )। अथ भगवद्विरचितेऽस्मिन्नवनिमण्डले मायापरनामिकया भगवच्छक्त्या प्रवर्तित ऐन्द्रजालवदनारतप्रवर्तितजननमरणप्रवाहाख्यसंसारचक्रे बंभ्रम्यमाणं सर्वदा तापत्रयेण दंदह्यमानं भ्रान्त्या तस्मादेव संसारचक्रान्निरतिशयं सुखं स्यादित्याकाङ्क्षया प्रत्यहं प्रयतमानमपि विफलप्रयत्नं प्राणिजातं भगवन्मुखारविन्दविनिःसृता मातृतोऽप्यधिकवत्सला गीताजननी समधिकवात्सल्येनेत्थमुपदिशति—

अयि वत्साः, यदर्थमिदं भवद्भिः प्राणं पणीकृत्य यत्नाधिक्यमनवरतमनुष्ठीयते न तज्जात्वपि सुखमापादयितुं समर्थम् । यर्हि भवन्तः सुखीभवितुमिच्छथ तर्हि विहायेमं वन्ध्यमभिनिवेशं करुणापारावारं भगवन्तं परमेश्वरं सर्वात्मना शरणं भजत । यतः कदलीकाण्डवन्निःसारे संसारेऽस्मिन्नद्वितीयो भगवानेव शाश्वतिकानन्दकन्दो विराजते । तदन्यत्सर्वं भङ्गुरं दुःखप्रायमेव । अतस्तादृशान्मिथ्याभिनिवेशात्सुखं न प्राप्स्यथेत्येव केवलं न किंत्वनन्तरं नितान्तमनुतप्स्यथ । यस्माद्वि वित्तादिवस्तुसमूहात्सुखं प्रार्थ्यते भवद्भिः, महता प्रयत्नेन प्राप्तादपि तस्मादाभासमानं सुखं न सुचिरं स्थातुमर्हति । यतः क्षणिकसुखसाधनत्वेनाभिमतं तद्वित्तादिवस्त्वकस्मान्नष्टं चेत्ततो दुःखमेव पर्यवस्यति । तस्माद्वित्तादिवस्तुसमुदायाधीनं सुखमिति भ्रान्तिरेव भवताम् ।

उच्चावचेऽस्मिन्प्रपञ्चे निःशेषमप्यात्मभिन्नं वस्तु मरुमरीचितोयवदापातरमणीयमित्यत्र न कोऽपि संदेहः । एवं समस्तो जन्तुश्चिराय जीवितुमिच्छतीत्यपि प्रसिद्धमेव । परं क्षणमात्रमपि जीवनं न तदधीनं चिराय तु दूरापेतमेव । तथा संततं सुखं मे भूयादित्यभिवाञ्छति प्रयतते च । किंतु प्रतिकूले विधौ लवमात्रमपि तत्तेन नैव लभ्यते । यतः प्राक्सुखमाभासयतः पश्चाच्च निरवधिकं दुःखं ददतो विषयाननुधावन्तो वयं शाश्वतिकसुखस्योदयः क्व वर्तते तन्नैवाऽऽलोचयामः । तत एव प्रतिपदं स्खलन्तो जन्मान्धानुगामिनोऽन्धसार्थस्येव मार्गभ्रष्टाः सन्तः सुचिरं नैराश्यमनुभवामः । प्राशितेऽपि प्रदत्तामृतनामनि विषकन्दरसे नैव तेनामृतत्वं सिध्यति । प्रत्युत वैपरीत्यमेव जायते । यथा वा रत्नबुद्ध्या वसनाञ्चले धृताः प्रज्वलित-

स्वदाराङ्गाराः प्राणघातकास्तथा सुखविषयकभ्रान्तकल्पनामूलकप्रयत्नैः सुखसंपादनेच्छा खपुष्पगन्धजिघृक्षासदृक्षेति न संदेहः । सुतरां नित्यानित्यवस्तुविवेकपराङ्मुखा वयम् । अत एव स्वाराज्यापरनाम्नो निःश्रेयसात्प्रभ्रष्टाः सन्तश्चिराय परदास्यशृङ्खलां पादबद्धां समवलोक्यापि दौर्बल्येन तज्जन्यदुःखततिमनुभवामः ।

मर्त्यलोकोऽयं खलु, यत्र वयमुक्तविवेकशून्याः कथंचित्प्राणधारणं कुर्मः । यत्र च करालकालोदरे हठात्प्रविष्टानां जन्तूनां नामापि न श्रूयते । अन्तकस्तु प्रखरतरदंष्ट्रादुर्दर्शं विकटतुण्डं प्रसार्य सर्वानेव स्वोदरे भस्मसात्कर्तुं प्रवृत्तः । सम्राडसम्राड्वा । श्रीमान्दरिद्रो वा । प्रबलो दुर्बलो वा । वीरो भीरुर्वा । देवो राक्षसो वा । त्यागी रागी वा । एते सर्वेऽपि सर्वभक्षकस्यान्तकस्य समाना एव । सत्यलोकाधिपस्य ब्रह्मणोऽप्यायुर्यत्र परिमितं तत्रेतरेषां जीवकीटानां कथैव का । एवमात्मकेन कृतान्तेनाऽऽत्मसात्कृतेऽस्मिँल्लोके ममेदं ममेदमित्यभिनिवेशं धृत्वा प्राणव्ययेन संरक्षिता अपि पदार्थाः क्षणाद्विनष्टा भवन्ति । अतस्तेभ्यः सुखं भविष्यतीति कल्पना व्यर्थैव । यतः कुपितफणिफणामण्डलच्छायासदृशं तत्सुखमित्यनुभवसिद्धं सर्वेषाम् । दरिद्रः पुरुषो नास्माकं सर्वसुखावहं हर्म्यमिति कष्टी भवति । परं मानुषानन्दभोगार्होऽपि जनः प्रासादे नवनीतवन्मृदुधवलतल्पे निषण्णो दुर्धराधिव्याधिग्रहगृहीतो विनीतनिद्रः खिन्नस्ततत आलोडनं कुर्वन् कथं कथमपि यामिनीं यापयतीति दरीदृश्यते । ऐहिकं सुखमत्यल्पं दुःखपरिणामि ध्वंसप्रतियोगि चेति विभाव्य पारत्रिकसुखाकाङ्क्षिभिस्तदर्थं प्रयतमानैश्च नरैः ' क्षीणे पुण्ये मर्त्यलोकं विशन्ति ' इति भगवदुक्तिर्नैव स्मर्यत इति प्रतिभाति । अतः पार्थं पुरस्कृत्य भगवान् सर्वानेव मानवानित्थमुपदिशति—अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् । इति । अशाश्वतेऽस्मिन्दुःखबहुले संसार एको भगवानेव निरतिशयानन्दकन्दः करुणापारावारश्च समुज्जृम्भते । तमनन्यचेतसा सेवितुं पुण्यकर्मचित ऐहिके पारत्रिके च विषयोपभोगे वैरस्येन भाव्यम् । नहि रामकामावेकस्मिन्स्वान्ते युगपत्स्थातुं प्रभवतः । भगवच्चरणारविन्दयोः परानुरक्तिमिच्छतः पुंसश्चित्ते सांसारिकेषु वित्तक्षेत्रादिविषयेषु दृढा विरक्तिरवश्यमपेक्षिता । यावद्धि नैकविधभोगलिप्सया मानसमाक्रान्तं तावत्पावनतमं भगवत्तत्त्वज्ञानं नैव तत्राङ्कुरितं भवेत् । प्रपञ्चलालसापरमार्थस्पृहे जात्वपि नैकत्र तिष्ठतः । तत एव श्रीभगवानर्जुनं निमित्तीकृत्य पुण्यानपुण्यान्वा समस्तानेव मानवानुद्दिश्य ' भजस्व माम् ' इत्यनुकम्पयोपदिशति । नात्र कस्यापि प्रतिबन्धोऽस्ति । दुराचारमपि मर्त्यं ' न मे भक्तः प्रणश्यति ' इत्याश्वासयत्येव । हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः । अनिच्छयाऽपि संस्पृष्टो दहत्येव

हि पावकः ॥ इति न्यायेन सर्वतः प्रज्वलित आत्मज्ञानाग्नौ चण्डतरा अपि पाप-पर्वता निःशेषं भस्मसाद्भवन्तीति किमत्र चित्रम् । तच्चाऽऽत्मज्ञानमैकान्तिकया भगवद्भक्त्यैव लभ्यम् । तदुक्तं भगवतैव गीतायाम्—' भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः ' इति । भगवति परानुरक्तिरूपया भक्त्या सुप्रसन्नो भगवांस्तं भक्तं बुद्धियोगेन संयुनक्ति । तदप्युक्तं भगवतैव—' ददामि बुद्धियोगं तं येन मामुपयान्ति ते ' इति । तेन च बुद्धियोगेन तस्य चित्ते भगवतो वास्तवस्वरूपाधिगमः स्वयमेवाऽऽविर्भवति । आविर्भूते च तस्मिन् स नरः स्वयं सम्राड् भगवानेव जायते । ' यदि सत्कृतिं कुर्यात्तर्हि नरो नारायणः स्यात् ' इत्यस्याः साधूक्तेर्याथार्थ्यमनुभवति च ।

नूनं परमरमणीयमिदमुपन्यस्तम् । अथापि ' प्रागयश्चणका भक्षिताश्चेदेव पश्चाद्दन्तपदे नर्तितुं शक्यम् ' इत्यभियुक्तोक्तेरादावनन्येन मनसा भगवतो भक्तिरेव कार्येति निर्विवादं निश्चीयते ।

सा च भक्तिः किंस्वरूपा कतिविधा कथं च कार्येत्याकाङ्क्षायामित्थमुपदिष्टं भगवत्पूज्यपादैः श्रीमदाद्यशंकराचार्यैः प्रबोधसुधाकरे—अथातो भक्तिं व्याख्यास्यामः । सा परानुरक्तिरीश्वरे ।

शुध्यति हि नान्तरात्मा शिवपदाम्भोजभक्तिमृते ।
वसनमिव क्षारोदैर्भक्त्या प्रक्षाल्यते चेतः ॥

स्थूला सूक्ष्मा चेति द्वेधा हरिभक्तिरुद्दिष्टा ।
प्रारम्भे स्थूला स्यात्सूक्ष्मा तस्याः सकाशाच्च ॥

स्वाश्रमधर्माचरणं भगवत्प्रतिमार्चनोत्सवो नित्यम् ।
विविधोपचारकरणैर्हरिदासैः संगमो नित्यम् ॥

भगवत्कथाश्रवणे महोत्सवः सत्यवादश्च ।
परयुवतौ द्रविणे वा परापवादे पराङ्मुखता ॥

ग्राम्यकथासूद्वेगः सुतीर्थगमनेषु तात्पर्यम् ।
भगवत्कथावियोगे व्यर्थं गतमायुरिति चिन्ता ॥

तथा—श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥

भगवताऽपि—मत्कर्मकृन्मत्परमो निःसङ्गः काम( मद्भक्तः सङ्ग )वर्जितः ।
निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ॥

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥
पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥
तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥ इत्युक्तम् ।

तात्पर्य—शास्त्रेण यद्यत्पावनं कर्म कर्तुमुपदिष्टं तत्तच्छ्रद्धापूर्वकं यथासामर्थ्यं विधाय भगवति समर्पयेत् । भगवत्सृष्टस्वस्ववर्णानुसारं कृतेन कर्मणा भगवतः सपर्या विधेया । यथा स्वस्वान्ते ज्ञानार्कस्योदयः स्यात्तथा विषयेभ्यः शनैः शनैः करणान्युपसंहृत्य वैराग्यं समभ्यस्येत् । वाण्या भगवद्गुणाः कीर्तनीयाः । कर्णाभ्यां भगवत्कथाः श्रोतव्याः । नेत्राभ्यां भगवतः सगुणं स्वरूपं द्रष्टव्यम् । रसनया भगवत्प्रेमरस आस्वादनीयः । चरणाभ्यां भगवत्समीपे गन्तव्यम् । हस्ताभ्याम-र्चनादिका भगवतः सेवा कर्तव्या । सच्चिदानन्दकन्दे भगवति यथा चित्तं विलीनं भवेत्तथा सर्वात्मना प्रयतितव्यम् । इदं जनिमतो मानवस्याऽऽद्यं कर्तव्यम् । जनुषः साफल्यं चेदमेव । एतादृशोऽयं गीतामातुः कल्याणोदर्कः सर्वान्प्रत्युपदेशो वरीवर्ति । अनुष्ठितेनानेन सर्वेषामेव समुद्धारो भविता । बुद्धिस्थेनानेन सर्वं राष्ट्रं सुखि संपन्नं च स्यात् । सोऽयमुपदेशः समस्तं विश्वं नीतिमत्ताया उन्नतेश्च परां काष्ठां प्रापयिष्यति । एतद्वैपरीत्येन कदाऽपि कस्यापि मङ्गलं न स्यात् । हठा-द्धनिकेभ्यो धनमपहृत्य दीनेभ्यः प्रदत्तमपि निःसारं सर्वसाम्यं वाङ्मात्रेण जगति प्रसारितमपि नैव तेन जनतायाः समाधानं भविष्यति । इमं गीतामातुरुपदेशं पश्चा-त्कृत्यौत्पत्तिक्या अस्पृश्यताया औत्पत्तिकीनां च जातीनां निर्मूलनायाव्यापारेषु व्यापा-रमिति न्यायेन कृतेऽपि प्रयत्ने पादपातेनाऽऽपादितेऽपि स्वातन्त्र्ये तेन राष्ट्रं सुसं-पन्नं सुपथवर्ति चिराय सुखि च स्यादित्याशा खपुष्पेहावन्न कदाऽपि सफला भवेत् । भयकृद्भयनाशनो भगवानेव सुस्थिरस्यैश्वर्यस्य शाश्वतिकानन्दस्य परमपवि-त्रज्ञानार्कस्य चाऽऽद्यं स्थानं वर्तत । तत्स्थानं विसृज्य कृतः कोऽपि प्रयत्नः फलायालं न स्यादेव । सर्वात्मना भगवत्कृपासंपादनमेव मर्त्यानामस्माकं मुख्यं कर्तव्यम् । तस्याः संप्राप्तौ य आनन्दः समुज्जृम्भते सोऽस्माकं स्वान्ते समुदेत्विति नवनीरदनीलनीलं भगवन्तं नामं नामं सप्रश्रयं प्रार्थयाम इति शम् ।

---

## ( अथ सुखविमर्शः ) ।

सुखार्थाः सर्वभूतानां मताः सर्वाः प्रवृत्तयः ।
सुखं तु दूरमत्यन्तं विनाऽधिगममात्मनः ॥

अथैतस्मिन्नतिविचित्रे वैरिञ्चे प्रपञ्चेऽनादिकालमारभ्याऽऽब्रह्मस्तम्बं सर्वेऽपि प्राणभृतः सुखमन्वेषयन्तीत्येतन्निर्विवादम् । यतः प्रत्येकमपि जन्तुः सुखमाकाङ्क्षत्येव । तदेव तस्य यावज्जीवं ध्येयमस्ति । तत्सिद्ध्यर्थं च स्वीयं बुद्धिसर्वस्वं शक्तिसर्वस्वं च व्ययीकृत्याहर्निशं प्रयतते । अथापि यैरुपायैः सुखं स्यादिति तस्येहा वर्तते संपादिता अपि त उपायाः सुखं दूरतरं धावति । इमे सुखप्रापकोपाया इत्यभिमन्य यथा यथा तेऽनुष्ठीयन्ते प्राणिभिस्तथा तथा तैः सुखस्याऽऽशा परं वर्धते । किंत्वाशानुसारं सुखं नोपलभ्यते । इति जीवितस्यापूर्णता नापगच्छति । जात्वपि कृतकृत्यता न प्राप्नोति । उत्कण्ठा न विनश्यति । सर्वोऽपि प्राणिनिकायः स्वस्वपरिस्थितावसंतुष्टः सन्नितरस्य स्थितिं शोभनां मनुते । दरिद्राणां धनवन्तः सुखिनो भासन्ते । किंतु ते धनस्वामिन आधिव्याधिभिर्जर्जरिताः सन्तो भृशं क्लिश्यन्त इति दरीदृश्यन्ते । अपुत्रः पुत्रवतो जीवितं सुखकरं गणयति । पुत्रवांस्तु व्याधिग्रस्तस्य स्वल्पायुषो दुर्वृत्तस्य वा पुत्रस्य जननापेक्षयाऽनुत्पत्तिं मृतिं वा प्रार्थयते । अशिक्षितः सुशिक्षितं प्रशंसति । किंतु सुशिक्षितस्य दुःखानि सुशिक्षित एव जानाति । तस्य पुरतः प्रतिपदं नूतना एव दुःखपर्वताः प्रादुर्भवन्ति । परतन्त्रं राष्ट्रं स्वातन्त्र्यप्राप्तौ सुखी भवेयमिति भावयति । परं तु स्वतन्त्रं राष्ट्रं प्रत्यप्युद्भ्रान्तं कुर्वन्तः प्रश्ना गहनतराः किमल्पाः सन्ति । यान्त्रिकशक्तावनिष्णातं देशं प्रति यान्त्रिकशक्तिसंपन्नो देशो नितरां पिनष्टि । परं सा दुःसहा यन्त्रशक्तिर्मा कदा विघातयिष्यतीति न जान इति चिन्तानलस्तं प्रत्यपि सततं प्रदहत्येव । सर्वथा राजायत्तराज्यतन्त्रतो लोकायत्तं राज्यतन्त्रं वरमिति केषुचिद्राष्ट्रेषु यावदुच्चैर्जोघुष्यते तावदितरेषु तेषु तन्न हितावहं किंतु भृशमनर्थकरमिति निश्चित्य विशकलितं सदधः पततीत्येवं तर्कयन्ति ।

इत्थं समष्टिदृष्ट्या व्यष्टिदृष्ट्या वैतस्मिन् बाह्ये जगति यः सुखान्वेषणप्रयत्नः सततं प्रचालितः समवलोक्यते तद्विषये कश्चिद्विचारः क्रियते । यदेतस्मिन्बाह्ये जगति यत्किमपि भौतिकं वस्तु सुखसाधनमिति मनुजोऽभिमन्यते तत्तथाभूतं सदपि क्षणभङ्गुरं दुःखपर्यवसायि चेति नियमो दृश्यते । नैकमपि भौतिकं वस्तु तादृशं समुपलभ्यते यन्नियमेन सुखमेव संपादयेत् । अतो बाह्ये जागतिके वस्तुनि प्राणिनः

सुखार्थत्वात्प्रवर्तयेयुरथवा दुःखार्थत्वान्निवर्तयेयुरिति चेदत्रोच्यते । सांसारिकाणां सुखार्थिनां तत्र प्रवृत्तिनिवृत्त्योः क्रम इत्थमालक्ष्यते । यत्र सुखापेक्षया दुःखं साम्येन न्यूनत्वेन प्रतीयेत तत्र सुखसंपादकत्वबुद्धिर्दुःखसंपादकत्वबुद्धिं नियमेन निवर्तयति । ततस्तत्र प्राणिनः प्रवर्तन्त एव न ततो निवर्तन्ते । ननु यस्मिन् वस्तुनि दुःखं न्यूनं सुखं चाभ्यधिकं तत्र दुःखसंपादकत्वबुद्धेः प्रबलया सुखसंपादकत्वबुद्ध्या बाधायुक्तं तत्र सुखार्थत्वात्प्राणिनः प्रवर्तयेयुरिति । किंतु यत्र सुखदुःखे साम्येन तिष्ठतस्तत्र प्रबलदुर्बलभावाभावेनान्यतरेणान्यतरस्य बाधाभावात्प्रवर्तयेयुर्निवर्तयेयुर्वेत्यस्यानिश्चयेन कथमिव प्रवर्तन्त एवेत्युक्तमिति चेत्सत्यम् । संशये सति युक्तायुक्तविवेकेन निश्चयकरणं हि बुद्धेः कर्तव्यम् । निश्चयात्मिका हि बुद्धिरित्युक्तत्वात् । सांसारिकाणां बुद्धिस्तु सुखलोलुपत्वान्मलिना कामपरतन्त्रा चेत्यसंदिग्धम् । कामश्च स्वप्रतिकूलतया तत्र वस्तुतो विद्यमानां दुःखसंपादकतामाच्छाद्य सुखसंपादकतामेव स्फोरयति । तथा च तत्र तादृशकामसंयुक्तः पुरुषो ग्राह्यत्वेनैव निश्चयमातन्वानो दुःखसंपादकत्वबुद्धेर्बाधमाकलयति । किंच यत्रापि वस्तुनि सुखापेक्षया वस्तुतः समभ्यधिकं दुःखं वर्तते तत्रापि कामोऽकुण्ठितप्रसर एवेति दुःखनिष्ठमधिकत्वं सम्यगाच्छाद्य सुखेन समतां न्यूनतां वा स्फोरयन् दुःखसंपादकत्वबुद्धेर्बाधमेव सुखलोलुपेन पुंसा कारयति । अपि च यत्र सुखदुःखयोर्महदन्तरं सुखमतीवाल्पं दुःखं तु परमं महन्मृत्युसमं तत्र कामः क्वचिद्दुःखाच्छादनेऽसमर्थः संस्तूष्णीकामास्ते । यथा क्षुधार्तोऽपि हि पुमान् विषेण संमिश्रमन्नं न जिघत्सतीति । क्वचित्तु तादृशेऽपि विषये दैवदुर्विलासेन दत्तहस्तावलम्बः कामो यथेच्छं नरीनृत्यमानः प्राणिनमन्धीकर्तुं प्रभवत्येव । यथा—

> कामान्धः किं न कुर्वीत यत्पाण्डुः काममोहितः ।
> जानन्नपि स्वकं मृत्युं माद्र्या साकमरीरमत् ॥ इति ।

स्पष्टं चेदं महाभारते । अन्ततो गत्वा विचारे क्रियमाणे भौतिके वस्तुनि सर्वत्र सुखमत्यल्पं यवपरिमितं दुःखं तु पर्वतप्रायमिति स्थितिः । तदुक्तं—

> यवमात्रं सुखं दृष्टं संसारेऽस्मिन्नवस्थितम् ।
> दुःखं तु पर्वतैस्तुल्यमित्येवं साधुभाषितम् ॥ इति ।

सत्येवं निरुक्तरीत्या यः सुखान्वेषणप्रयत्नो दृश्यते स नाद्यापि लेशतोऽपि सफलः संवृत्तः । अन्ततः शरद्घनवन्नैष्फल्यं नातिक्रामति सः । यतः सुखस्याऽऽद्यमुद्गमस्थानं क्व वर्तत इत्यस्य विचार एव यावन्न प्रवृत्तः । प्रवृत्तोऽपि

प्रामादिकः स तावत्सुखावाप्तिर्यश्च भृशं दुर्लभे । अखण्डानन्दावाप्तिः साक्ष्यं केन-चिद्दीयेत चेत्तस्त्वतो ब्रह्मज्ञेनैव पुरुषेण तद्दातुं शक्यम् । यतः स एवासीमसुखसागरे पूर्णं प्रविष्टोऽस्ति । न केवलं प्रविष्टोऽपि तु परमगभीरानन्दात्मनैव परिणतः सः । अतस्तेनोपदिष्टपथेन गच्छतो जनस्य सोपानारोहणकाले प्रतिपदमभ्यधिकानन्दानुभवः समायायादेव । अस्याऽऽनन्दस्यैको विशेषश्चमत्कारोऽस्ति । यदयं सर्वथा स्वाधीनः स्वतन्त्रश्च विद्यते । लेशतोऽपि न परतन्त्रः सन्स्वयंसिद्धोऽस्ति । न ध्वंसप्रतियोगी नापि वा प्रागभावप्रतियोगी । अत एवाखण्ड इत्यवधेयम् । दुःखपर्वतानां प्रपतनेऽपि नास्याऽऽनन्दस्य विच्छित्तिर्जायते । इन्द्रियाद्यगोचरत्वात्तेषु विकलेष्वपि तस्मिन्नाणुमात्रमपि वैगुण्यं समायाति । तत्प्राप्त्यर्थं नेतरस्य कस्यापि किमप्याहर्तव्यं भवति । न कोऽप्युद्वेजयितव्यः । स्वस्थानं विहाय वा नान्यत्र कुत्रचिद्गन्तव्यं भवति । इत्थं महाभागः स आनन्दो विराजते । सर्वोत्तमोऽयमानन्दः स्वेन लब्धव्य इति कस्य समीक्ष्यकारिणो मनस्याकाङ्क्षा न जायेत । अस्याऽऽनन्दस्य स्वरूपं सर्वेषां परिचितमेवेति साधवः कथयन्ति । किमधिकेनायमानन्द आकीटपतङ्गमा च देवेन्द्रं सर्वैः प्राणभृद्भिः समास्वादनीयोऽस्ति । नास्य संप्राप्तिमन्तरा मानवजीवितस्य कृतार्थता संपद्यते । अद्वितीयसच्चिन्मूलादेवायमखण्डं प्रवहतीति तमनुभवद्भिर्महात्मभिरुच्चैर्जोघुष्यते । यदि भौतिकाद्वस्तुनोऽस्याऽऽनन्दस्योद्गमः स्याच्चेत्तद्भौतिकं वस्तु यावत्कस्यचिन्निकटे वर्तेत तावदसति प्रतिबन्धे तस्यानुभवः सातत्येन भाव्यः । परं न तथाऽनुभूयते । अथ यस्माद्वस्तुन आनन्दः संवृत्तः श्वस्तदेव वस्त्वानन्दप्रदं न जायते । नैतावदेवापि तु तस्मिन्वैरस्यमुत्पद्यते । चित्तमन्यत्रैवाऽऽनन्दमन्वेष्टुं स्वैरमटतीति प्रसिद्धं लोके । एतावता भौतिके कस्मिन्नपि वस्तुनि नाऽऽनन्दोद्गमस्थानं वर्तत इति निश्चितं भवति । एतस्याऽऽनन्दोद्गमस्य मूलभूते सच्चित्स्वरूपे सकृदधिगते मनसि दृढं धृते च सुचिरमयमानन्दोऽनुभवितुं शक्यः । अत एवाऽऽदौ तमानन्दकन्दं यत्नातिशयेन सम्यगन्विष्य दृढं चित्ते धारयत तेनैव यूयं सुखिनो भविष्यथेति सर्वान्प्रत्युपदेशो विद्यते प्रत्नानां महात्मनाम् । परमयमानन्दकन्दः क वर्तत इति मूलत एव प्रश्नश्चेत्तस्येदमुत्तरं वरीवर्ति । यदसावानन्दकन्दः स्वसंनिधावेवास्तीति । हृद्येव समुल्लसति सः । बाह्यविषयेभ्यो भृशं विनिवृत्तेन तत एव सुशान्तेन मनसा साक्षात्कर्तुं शक्यः । नैकविधासद्विषयवासनाक्रान्ततयाऽस्मिन्मनःसरसि विचित्रा वृत्तितरङ्गाः प्रतिक्षणं प्रादुर्भवन्ति । तेनास्याऽऽनन्दकन्दस्य याथार्थ्येनाधिगमो न जायते । संतताभ्यासेन मनसो निरोधे

सत्येव तस्य दर्शनं भवितुं शक्यम् । अभीप्सितबाह्यविषयप्राप्तावस्माकं यत्सुखं जायते तदपि तत्तदिष्टविषयप्राप्त्या मनसः क्षणं वृत्तिशून्यावस्थायां सत्यामेवोत्पद्यते । तदिदं सुखं वृत्त्यन्तरतरङ्गोत्पत्तिं यावत्तिष्ठति । वृत्त्यन्तरोत्पत्तौ सत्यां तत्सुखमस्तंगतमिव भवति । स्वस्य काऽपि महत्त्वाकाङ्क्षा संसिद्धा । स्त्र्यादिविषयसुखं लब्धम् । पुत्रः संजातः । अकस्माद्विपुलं धनं संप्राप्तम् । अभीप्सितः कार्यविशेषो विना प्रयत्नं सिद्ध इत्येवमादेरिष्टस्य सिद्धौ सत्यां तद्विषयिका मनोवृत्तयः शाम्यन्ति । ततो निस्तरङ्गजलराशिवन्निश्चलं मनः स्वयंसिद्धानन्दास्वादनायोन्मुखं भवति । ततः स एव सहजानन्दकन्दस्तस्मिन्नाविर्भवति । सा मनसो निर्वृत्तिकावस्था चिरकालं स्थिता चेच्छाश्वतिकानन्दलाभोऽर्थात्सिध्यत्येव । सर्वा एवेन्द्रियवृत्तयः पाञ्चभौतिकविषयेभ्यः परावृत्ताः सत्यः परमात्मप्रवणाः संपन्नाश्चेत्स्युस्तदाऽस्मिन्नानन्दे कदाऽपि विच्छित्तिर्न स्यादेव । अस्मिन्निरुपाधिकानन्दानुभवे प्रत्यवायो नोत्पद्यते । तत्र देवभक्तयोरैक्यं जायते । सुखस्यान्वेषणं परिसमाप्तं भवति । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते । अस्य पूर्वार्धं तु—पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते, इति । बृहदारण्यके पञ्चमाध्याये प्रथमब्राह्मणे सोऽयं मन्त्रः पठितः । अस्यार्थः—पूर्णमदः । अद इति परोक्षाभिधायि सर्वनाम । तथा चादःशब्दवाच्यं परोक्षं ब्रह्मेत्यर्थः । पूर्वत्र ब्रह्मणः प्रकृतत्वात् । तत्परं ब्रह्म पूर्णं, न कुतश्चिद्व्यावृत्तम् । आकाशवद्व्यापि निरन्तरं निरुपाधिकं चेति यावत् । पूर्णमिदम् । इदं सोपाधिकं नामरूपस्थं व्यवहारापन्नं ब्रह्म पूर्णं व्यापकमित्यर्थः । ननु कथं सोपाधिकस्य कार्यावस्थस्य प्रत्यक्षस्य ब्रह्मणः पूर्णत्वमुच्यते । नह्युपाधिपरिच्छिन्नस्य पूर्णत्वं संभवतीति चेन्न । यतो यत्पूर्णं ब्रह्म तदेवेदं नामरूपस्थं व्यवहारापन्नम् । अतस्तत्स्वेन रूपेण परमात्मना पूर्णमेव न विशेषात्मना । न वयमपहितेन विशिष्टेन रूपेण पूर्णतां वर्णयामः, किंतु केवलेन स्वरूपेणेत्यर्थः । पूर्णात्पूर्णमुदच्यते । तदिदं विशेषापन्नं कार्यात्मकं ब्रह्म पूर्णात्कारणात्मन उदच्यत उद्गच्छतीत्यर्थः । यद्यपि कार्यात्मनोद्गच्छति तथाऽपि यत्स्वरूपं पूर्णत्वं तन्न जहाति । अविद्ययोद्गच्छतीत्यत एव परमार्थस्वरूपादन्यदिव प्रत्यवभासत इति यावत् । पूर्णस्य पूर्णमादाय । पूर्णस्य कार्यात्मनो ब्रह्मणः पूर्णत्वमादायाहमेवादः पूर्णं ब्रह्मास्मीत्येवं पूर्णत्वं गृहीत्वा ब्रह्मविद्यया तिरस्कृत्यापूर्णस्वरूपतामविद्याकृतां नामरूपोपाधिसंपर्कजां पूर्णमेव केवलमवशिष्यत इति । इत्येवं वेदोपदिष्टां प्रागेव सतीं स्वकीयां भूमावस्थां प्राप्यायं जीवः सर्वथा कृतकृत्यो भवति । नास्य कुत्रापि किमपि स्वकीयं परकीयं वा कर्तव्यमवशिष्यत इत्यावेद्यालं कुर्म इति शम् ॥

---

( अथ श्रेयःप्रेयोविमर्शः )।

श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ संपरीत्य विविनक्ति धीरः।
श्रेयो हि धीरोऽभिप्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद्वृणीते॥(का०अ०१व०२)।

अथानादिकालमारभ्यैव श्रेयःप्रेयोविषये मनुष्याणां विवादः समुपलभ्यते। यद्यप्यद्वयात्तत्त्वादाविर्भूतेन जीवेन पुनस्तत्रैव गन्तव्यमित्येव तस्यान्तिमं ध्येयमथाप्येतदवस्थाद्वयान्तरालिकः प्रवासो द्वैतपथेनैव कर्तव्यो भवति। अस्मिन् प्रवासे बलवत्प्रमाणोपजीविन्या एव सदसद्विवेकशालिन्या मत्या शुभाशुभाशंसिमार्गदर्शित्वसमुपकारः क्रियते। तदा तेजस्तिमिरवन्मिथो विरुद्धसुखदुःखपापपुण्यसौशील्यदौःशील्याढ्यत्वाकिंचनत्वप्राबाल्यदौर्बल्यज्ञत्वाज्ञत्वप्रभृतिसांसारिकद्वंद्वसंबन्धिश्रेयःप्रेयःकलहेन समाक्रान्तः पुमान्भवति। तदा तस्य निर्दुष्टप्रमाणोपजीविन्याः सदसद्विवेकविधायिन्याः प्रज्ञायाः साहाय्यं न स्याच्चेत्तज्जीवितनौका तीक्ष्णपाषाणखण्डोपरि पतित्वा विदीर्णा भविष्यत्येवेत्यत्र न संशयः।

भगवद्गीतायामन्येषु चाऽऽर्याणां धार्मिकग्रन्थेषु श्रेयःप्रेयोविमर्शः प्रत्नैस्तत्त्वविद्भिः साकल्येन विस्तरशः कृतोऽस्ति। भारतीयार्यधर्मे यथाधिकारं मानवानां यद्यत्कर्म मोक्षाख्यपरमपुरुषार्थसिद्ध्यनुकूलं भवेत्तच्छ्रेयस्करमप्रमादेन कर्तव्यमेवेत्युपदिष्टम्। कर्तव्यशब्दस्यार्थोऽपि यत्कालत्रयेऽप्यधिकारानुसारं कर्तुमर्हं स एव। अर्थादनादिकालमारभ्याविच्छिन्नस्वरूपेण प्रवृत्तजननमरणप्रवाहरूपसंसारबन्धनान्निर्मुक्त्यै यत्कर्म जीवानामुपकारकं भविष्यतीति वेदादिशास्त्रं कथयति तत्कर्तव्यशब्दस्यार्थ इति पारमार्थिकदृष्ट्या सिध्यति। लौकिकव्यवहारपारमार्थिकयोर्यद्यपि षट्त्रिंशदङ्को नास्ति तथाऽपि तयोर्दृष्ट्योर्विशिष्टं पार्थक्यं वर्तत एव। किंच पारमार्थिकश्रेयसस्तदुपकारिणः कर्तव्यस्य च निर्विचिकित्सं निर्णेतारः कृतकेतरग्रन्थप्रमुखाः प्रत्नैः कृतास्तदनुसारिणो ग्रन्थमणयः सन्त्येव। तथा भगवत्पूज्यपादप्रभृतयो लोकोत्तरबुद्धिविद्यावैभवशालिनो महापुरुषा ईश्वरकल्पा अपि सन्ति। अतः पारमार्थिकश्रेयोविमर्शात्क्षणं विरम्य व्यावहारिकश्रेयसस्तदनुकूलकर्तव्यस्य च विमर्शं प्रसङ्गतः कुर्मः।

श्रेयो नाम चिरकालीनं कल्याणम्। तज्जनकं यत्तच्छ्रेयस्करमिति बोध्यम्। प्रेयो नाम तात्कालिकं सुखम्। प्रियं तत्कालसौख्यदमित्युक्तत्वात्। तत्प्रदं यत्तत्प्रेयस्करमित्यवगन्तव्यम्। यच्छ्रेयस्करं तदेव प्रियमित्यपि नैकवारं व्यवहारे परिदृश्यते। तथा हि—कस्याचिच्छिशोर्दुग्धं स्वादु जम्बीरं च ( मोसंब )भृशं

प्रियम् । अगदंकारेणापि तस्य शरीरप्रकृतिं सम्यक्परीक्ष्य क्षीरं तज्जम्बीरं च तस्मै यथाशक्यमधिकं देयमित्युक्तम् । तत्र श्रेयः प्रेयश्चैकमेव संवृत्तम् । एतद्वैपरीत्येन कस्यचित्सद्वृत्तस्य कुमारस्य विद्याभ्यासोऽत्यन्तं प्रियः, प्रयत्नोऽप्यहर्निशं तस्य तदनुकूलः । शिष्यवृत्तिरपि तेन संपादिता । किंत्वधिकं शिक्षणं कृत्वा समधिकमासिकवेतनदाव्यास्तदीयोच्चशिक्षणाभिज्ञराज्ञः सेवायाः संभवो नैवास्ति । प्रापञ्चिकदृष्ट्या च विमर्शे कृते यथासंभवमविलम्बेन सेवावृत्त्यवलम्बनमेव सम्यक्, इत्यस्यां परिस्थितौ सेवाकरणमेव श्रेयस्करं न किम् । समधिकविद्याभ्यासः समीचीनः प्रियोऽप्यस्ति । अथापि व्यवहारदृष्ट्या कथंचित्सेवावृत्तिस्वीकार एव श्रेयस्करः । विवेकी पुमानस्यामवस्थायां प्रियमपि विद्याभ्यासं गत्यन्तराभावादुपेक्ष्य सेवावृत्त्यवलम्बनमेव कुर्यात् । यतस्तद्विना जीवितयात्रैवाशक्या स्यात्तदीयपरिवारस्य । अस्मिन्नुदाहरणे श्रेयःप्रेयसोः पार्थक्यं वर्तते । कस्मिन्नपि प्रसङ्गे श्रेयोदृष्टिं विहायाविवेकेन कार्यं कृतं चेदन्ततस्तस्य कार्यस्य घोरा परिणतिरिच्छायामसत्यामपि भोक्तव्या भवेत् । अकीर्तिमलिनं जीवनं च याप्यं स्यात् ।

भगवत्कृपया भिषगुपदिष्टौषधपथ्यादेः सेवनेन च तूर्णमेव ज्वरादेर्गदान्निर्मुक्तानां मनुष्याणां युगपद्बह्वशनस्य तत्रापि कटूनां तैलपाचितानां च पदार्थानां भक्षणे बलवती स्पृहा जायते । तदशनं तस्य प्रियमपि श्रेयस्करं भवति वा । कदाऽपि नैव श्रेयस्करम् । रोगपीडोत्थितबालानां विषय उक्ता रीतिर्विशेषतो दृश्यते । तत्र पालकैरेव जागरूकैर्भाव्यम् । तस्मात्कस्यामप्यवस्थायां श्रेयोविमर्शं कृत्वैव किमपि कार्यं कर्तव्यमिति सिध्यति । श्रेयसि दृष्टिं संस्थाप्य तत्सिद्ध्यर्थं यत्कार्यं क्रियते स एव कर्तव्यशब्दस्य मुख्योऽर्थः । अर्थाच्चिरकालिकं कल्याणं श्रेय। तत्साधको व्यापारः कर्तव्यं कर्म । इत्येवमेतयोः पार्थक्ये सति लोकव्यवहारे 'इदानीं त्वं श्रेयः कुर्विति यः प्रयोगो दृश्यते स तत्साधकतया कर्तव्य औपचारिको ज्ञेयः । यत्र श्रेयःप्रेयसोः संसाधकं वस्त्वेकमेव तत्र किं कर्तव्यमिति प्रश्नो नैवोद्भवति । यत्र तयोः पार्थक्यं विद्यते तत्रैवोक्तप्रश्नस्यावसरः । अस्य सर्वप्रसिद्धमुदाहरणं तु भारतीययुद्धप्रसङ्गे नरवीरस्यार्जुनस्य पुरतः प्रादुर्भूतः किंकर्तव्यविषयकः संदेह एव । अत एव तेन वीरेण "यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्" इत्येवं भगवान् श्रीकृष्णः सप्रश्रयं प्रार्थितः ।

जननानन्तरं षष्ठं सप्तमं वा मासमारभ्यैव श्रेयःप्रेयसोः कलहस्तस्य बालकस्य पुरतः प्रादुर्भूतो भवति । तथा हि—स्तनंधयो बालको रात्रौ प्रज्वलितं दीपज्योतिः स्थिरदृष्ट्या समवलोकयति । रमणीयं तद्दीपज्योतिस्तस्य भृशं प्रियं प्रतिभाति ।

कराभ्यां तदुद्धर्तुं प्रयतते । परं तेन तद्धृतं चेत्तस्य कोमलः करो भर्जितः स्यादिति मात्रादयस्तं प्रतिबध्नन्ति । तेन स शिशुरुच्चै रोदिति । हस्तेन दीपज्योतिषो ग्रहणं बालदृष्ट्याऽत्यन्तं प्रियमपि नैव श्रेयस्करमित्यकर्तव्यं तत् । न जात्वपि कर्तव्यं सिध्यति ।

स एव बालको वयसाऽधिकायां पञ्चषवत्सरावस्थायां तस्य जातायां मधुरादिपदार्थानां समधिकाशने लोलुपो यदा कदा वा यत्र कुत्र वा यस्यां कस्यामप्यवस्थायां कामं क्रीडासक्तः शिक्षणमन्दिरं गन्तुं पराङ्मुख इत्यपि प्रायशोऽनुभूयते । तन्निदानं तस्य सारासारविचारशक्तिस्तस्यामवस्थायां प्रसुप्ताऽस्ति । तेन स बालः प्रेयोवलम्बनमेव पूर्णं करोति । न श्रेयः समीक्ष्यते । असामर्थ्यात् । तस्मिन् समये तत्कुशलेच्छवः पित्रादय एव सदसद्विमर्शं कृत्वा निर्भरं प्रेयआसक्तं तस्य चित्तं प्रेमप्रचुरोपदेशादिना प्रेयसः परावर्त्य शनैः श्रेयोऽभिमुखं विदधति । तदनुसारेण तस्य वर्तनं जातं चेद्देव क्रमेणोत्तरत्र सुप्तशक्तेर्विकासेन सोऽपि सदसद्विमर्शं विधाय श्रेयस्करसाधनावलम्बनतश्चिराय श्रेयोभाजनं भवतीति लोके सुप्रसिद्धम् ।

" बुद्धिमत्सु नराः श्रेष्ठाः " इति मानववचनात्सर्वश्रेष्ठमनुष्यदेहस्य तत्राप्यनुत्तमनरदेहस्य प्राप्तावपीन्द्रियाणां क्षुद्रसुखलोलुपता न निवर्तत इत्येव न, अपि तु नैकविधानां संशोधनानां तज्जन्यवैषयिकसुखसाधनानां च वैपुल्यात्समधिकेन्धनप्रदीप्ताश्रयाशवत्सा लोलुपता प्रत्यहं वर्धत एव । परं देहोत्पत्तिसमकालमेव तेन सहोत्पन्नं चक्षुरादिकरणनियन्तृचित्तमपि नरेण लब्धमस्ति । अतः सर्वेन्द्रियदमनसमर्थस्य तेजस्विनः कर्तव्यशीलस्योदारमनसोऽस्तित्वमेतदेव मनुष्यत्वस्य यथार्थं लक्षणम् । यस्य नरस्योक्तलक्षणलक्षितं चित्तं यावत्समधिकदमनसमर्थं स्यात्तावत्स नरो सत्पथप्रवृत्तो भवतीति ज्ञेयम् । तादृशस्य मनसः संप्राप्तिरादौ गृहशिक्षणं, ततो विद्यामन्दिरीयं शिक्षणमन्तर्बाह्यपरिस्थितिश्चेत्यादिसाधनायत्ता वर्तते । किंच तदर्थमेषाऽऽदौ बुद्धेर्विकासो भाव्यः । बुद्धिव्यापारेषु च प्रमाणाविरोधितर्कशुद्धताऽप्यपेक्षिता । श्रेयःप्रेयसोः कलहकालो तद्विषयार्थसंदेहे समुत्पन्ने सति शास्त्राविरोधितर्कानुगृहीतप्रमाणोपजीविनी बुद्धिरेव तं निरस्य भव्यं श्रेयस्करकर्तव्यस्य निश्चयमादधाति । ततो मनस्तत्कार्यमिन्द्रियैः कारयति । अतः कर्तव्याकर्तव्ययोः सम्यङ्निर्णयप्रदात्री निर्दिष्टा बुद्धिः श्रेयःकाङ्क्षिणः प्रत्येकस्य सविधेऽवश्यं भाविनीति सिध्यति ।

अज्ञदशायामर्थाद्बाल्यकाले यस्मिन् कस्मिन्नपि श्रेयस्करे कर्मणि शासनादिना प्रवृत्तेः प्राक् तत्कार्यं कस्माच्छ्रेयस्करमित्यस्य ज्ञानं तेषां यथा स्यात्तथा विज्ञैः पित्रादिभिः प्रयतितव्यम् ।

तात्कालिकसुखजनकवस्त्वपेक्षया चिरकालिककल्याणप्रदेषु वस्तुषु बालानां मनो यथा संलग्नं स्यात्तथा प्रयत्नः शनैः शनैः कर्तव्यः । श्रेयः कुतः श्रेयस्तदर्थं च किं कार्यं तदेव कर्तव्यं कस्मात्तदितरत्कस्मान्न तथेत्यादिप्रश्नैस्तदुत्तरैश्च बालबुद्धिसंवादिभिः क्रमेण तेषां विवेकशक्तिरुद्‌बुद्धा कर्तव्या । अनया रीत्या तेषां वर्धिष्णुना वयसा सह श्रेयःप्रेयसोः कर्तव्याकर्तव्ययोश्च निर्णयस्य भारः शनैः शनैस्तेषु निक्षिप्तश्चेत्तेषां मतिरपि तन्निश्चेतुं समर्था स्यात् । तथा सत्यकृत्रिमप्रेमनिर्झरसिक्तायां पित्रोः शीतलच्छायायां यथासुखं स्थित्वा सुशिक्षितस्य तस्य मनसि गृहराज्याद्बहिर्विशङ्कटजगत्प्रदेशे पदार्पणकाले कांदिशीकता किंकर्तव्यमूढता च प्रायो नैवाऽऽविशेदित्यवगन्तव्यम् ।

किं नाम श्रेयः प्रेयो वा किं कर्तव्यं च किं तत्सर्वं प्रपञ्चितम् । इदानीं प्रेयसः कुतः श्रेयः श्रेष्ठं तद्विचारयामः । यत्र श्रेयः प्रेयश्चैकमेव तत्र नायं प्रश्नः समुद्भवति । यत्र तयोर्मध्ये पार्थक्यतः कलहो दृश्यते तत्रैवायं श्रेष्ठत्वकनिष्ठत्वयोः प्रश्नः प्रादुर्भवति । तस्योत्तरप्रदानाय नाधिकः प्रयत्नोऽपेक्ष्यते । यतस्तयोः शब्दयोरर्थ एव तस्योत्तरं वर्तते । चिरकालीनं कल्याणं तात्कालिकसुखापेक्षया श्रेष्ठमेवेत्यत्र नास्ति कस्यापि विवेकिनो विप्रतिपत्तिः । श्रेयसि ह्यभ्यर्हितं मानसिकं सुखं भाविकल्याणं चान्तर्भूतमनुभूयते । प्रेयसि त्वैन्द्रियिकं क्षणिकं सुखं समाविष्टं दृश्यते । अतः प्रेयसः श्रेष्ठं श्रेय इत्यवगन्तव्यम् ।

योग्यशिक्षणेन बुद्धिः सुसंस्कृता भवति । सैव यावज्जीवमात्मनः समुपकारिणी विद्यते । यद्यपि साकल्येन विशुद्धायाः परिपक्वायाश्च बुद्धेः संप्राप्तिस्तपःसाध्या भाग्यायत्ता च विद्यतेऽथापि बालानां विवेकशक्तेर्योग्यस्वातन्त्र्यदानेन सम्यक्शिक्षणेन च परिपक्वतापादनं पालकानां शिक्षकाणां चाऽऽद्यं कर्तव्यम् । बुद्धेः सारासारशक्तिर्यथा यथा वर्धिष्यति तथा तथा सा बुद्धिः श्रेयःप्रेयसोः कलहं दूरीकर्तुं समर्था भविष्यति । पञ्चषवत्सरवयसं शिशुं प्रति वयं शालायां प्रेषयामः । गृहसंबन्धि प्रेमप्रचुरं वातावरणं विहाय शालायाः संकुचिते नियमिते किंचित्परतन्त्रे प्रायशः स्नेहशून्ये वातावरणे प्रथममेव पदार्पणं कर्तुं तस्य कष्टतरं भाति । परं शनैः शनैः शिक्षणेन सुशिक्षितत्वसंपादनमेव श्रेयस्करं श्रेयश्चेति मतिः क्रमशस्तस्य समुत्पद्यते । ततः स्वैरवर्तनं आसक्तिं विहाय नियमेन सोत्साहं शालायां गत्वा शिक्षणं गृह्णाति । किंत्वस्मिन्समये पालकैः शिक्षकैश्च तस्य बुद्ध्याद्युन्नतिविषये दृष्टिर्न दत्ता चेत्तद्बाल्यावस्थीयं मनः कोमलं स्वभावत एव प्रेयस्यासक्तं स्यात् । तथा न भाव्यमिति संयमस्य शिक्षणमप्यावश्यकमस्ति ।

श्रेयःकर्तव्यसंयमाः परस्परमविभागेन वर्तन्ते । संयमार्थं मानसिकं धैर्यमत्यावश्यकम् । तदभावे संयमोऽशक्यः । तदसत्त्वे कर्तव्यं दूरमेव । कर्तव्याकरणे श्रेयसः कुतः संभावना ।

चक्षुरादिबाह्येन्द्रियप्रवृत्तेर्मनोमूलकत्वेन साफल्यस्य दर्शनान्मनसः श्रेष्ठत्वं निर्विवादम् । उदात्तमनाः पुमानैन्द्रियकसुखापेक्षया मानसिकं सुखं श्रेष्ठं मनुते । तदर्थं यत्नमप्याधिकं कुरुते । क्वचित्प्रसङ्गे प्रेयसोऽपि मानसिकं सुखं लभ्येत । अथापि प्रेयसस्तात्कालिकसुखप्रदमिति हेतोश्चिरकालिककल्याणदातुः श्रेयसः श्रेष्ठत्वं न तेन हीयते। अनुभवसिद्धायामपि श्रेयसः श्रेष्ठतायां मनुष्यः प्रेयोनुसरणमेव कुतः कुरुत इति चेत्तत्र सुखलोलुपत्वमिन्द्रियविकृत्यधीनत्वं मनसो भृशं दौर्बल्यं च कारणं ज्ञेयम् । प्रेयोनुधावतो मनुष्यस्य स्वीयस्वैरवर्तनस्योत्तरत्र पश्चात्तापो भवत्येव । तावताऽपि तु तद्दुःखप्रदं वर्तनं तेन त्यक्तं चेत्सम्यगेव । न चेत्तस्य भीषणगर्तपातो न दूरेऽस्तीति ज्ञेयम् । जानाम्यहमथापि हातुमसमर्थोऽस्मीति समयविशेषे मनुष्यो ब्रूते । तदानीं तस्य कर्तव्यज्ञानं कथंचिज्जातमपि मनसो दौर्बल्यात्तत्स्वायत्तं कृत्वा निसर्गतः स्वैरधावनशीलानीन्द्रियाणि प्रेयउद्देशेन हठाद्धावन्ति । तस्मिन्समये स्वीयापराधभ्रष्टराज्याधिकारनामधारिराजवन्मनसोऽवस्था जायते । तेनोपर्युक्तोद्गारश्च मुखान्निःसरति ।

इन्द्रियाणां भृशं निग्रह इति मनसो जीवदवस्थाकालीनानेककार्यान्तर्गतं प्रमुखं कर्तव्यम् । तदकृत्वा मन एवेन्द्रियाधीनं संवृत्तं चेच्छरीरादेर्भृशं दुरवस्था स्यात् । तथा हि—रसनेन्द्रियस्यार्थाज्जिह्वायाः सर्वानर्थकारिणो मद्यादिदुष्पेयप्राशनस्याऽऽपणस्थमधुराम्लतिक्तादिपदार्थभक्षणस्य च दुरभिरुचिः संलग्ना चेत्, नेत्रयोः संकरैकनिदानचित्रपटाद्यवलोकने दुर्मनीषा संवृत्ता चेत्, कर्णयोः परनिन्दाश्लीलभाषणादिश्रवणं समधिकं प्रियं प्रतिभातं चेत्तदधिष्ठातृणा मनसा तेषां निग्रहमकृत्वा यथेच्छमितस्ततो धावितुमवसरः प्रदत्तश्चेत्कीदृशी दुरवस्था भवेत्तत्कथनमेव वरम् ।

चक्षुरादीन्द्रियाणि सुविशुद्धमनसोऽधीनानि चेत्तद्विशुद्धं मनस्तेषामुच्छृङ्खलगतेः प्रतिबन्धं कुर्यादेव । शरीरायत्तजातं दुर्व्यसनग्रस्तं रोगाक्रान्तं च न भाव्यमिति जिह्वायां नियन्त्रणं स्थापयेत् । चित्रपटाद्यवलोकनदुरासक्त्या वित्तस्य वेलायाश्चापव्ययो भवतीति चक्षुषोर्नियन्त्रणं कर्तव्यम् । परनिन्दादिश्रवणं त्वत्यर्थं दुर्गुण एवेत्यालोच्य कर्णयोस्तच्छ्रवणावसरः कदाऽपि न देयः । इन्द्रियाण्या-

ह्मवशामि कर्तुं मनोऽत्यर्थं निर्मलं दृढं चापेक्षितम् । दुर्बलेन मनसा तन्निग्रहः सर्वथा दुष्करः । इन्द्रियनिग्रहं विधाय प्रेयोपेक्षापुरःसरश्रेयउद्देशेन तदनुकूलं कर्तव्यं कृतं चेच्छ्रेयसः प्राप्तावप्राप्तौ वा सत्यां यः सात्त्विकानन्दविशेषस्य लाभो निश्च- येनानुभूयते कर्तव्यकृता पुंसा स तदितरानन्दानभवापेक्षयोच्चकोटिक इति वक्तुं न कोऽपि प्रत्यवायः ।

कर्तव्यानन्द इत्थमनुपमो विद्यते । यत्तदर्थमद्यावधि परःसहस्रैर्वीरैः स्वीयप्रा- णार्पणेऽपि पराङ्मुख्यं कदाऽपि नाङ्गीकृतम् । स्वभावभेदतो रुचिवैचित्र्यतश्च पृथ- क्पृथग्जनैर्भिन्नभिन्नरीत्या स्वस्वकर्तव्यं निश्चित्य कृच्छ्रजातं सोढ्वाऽपि महता प्रया- सेन तत्सिद्धं कृतमितीतिहासादितोऽवगम्यते । तदास्तां नाम । वर्तमानकालेऽपि समन्ताद्दृष्टिर्दत्ता चेदित्थमेव दृश्यं दृग्गोचरं भवेत् । यद् गृहसौख्यादिकं सर्वं विहाय कष्टान्येवानुभवितुं बन्धनागारपथिकाः पुरुषाः किमकुर्वन् । शिवच्छत्रपतेः सेनाध्यक्षो देशपाण्डे इत्युपाह्वो बाजीप्रभुः स्वल्पेनापि स्वीयसैन्येन सह विपुलसै- न्यपरिवेष्टितेन यवनसेनापतिना सार्कं किमर्थं भीषणतरं संग्राममकरोत् । कर्तव्य- निष्पत्त्यर्थमेव न किम् । तथैव दृढभावनया विहितकर्तव्यपरिपालनात्समुद्भूतः सात्त्विकानन्दो बन्धनागारस्य द्वारप्रदेशे पदनिक्षेपकर्तॄणां सत्याग्रहिणां वदनेष्वप्या- विर्भूततेजःसु, वीरश्रेष्ठबाजीप्रभोः “मम कर्तव्यं मया सम्यगनुष्ठितम् । अतोऽह- मिदानीं सुखेन मरिष्यामि” इत्यात्मज्योतिरुत्क्रान्तकालीनानन्दोद्गारे च न प्रती- यते किम् । कर्तव्यपरिपालनोत्पन्नानन्दस्य महत्त्वं कियदपि वर्णितं चेत्तदल्पमेव भवेत् । बालानामप्यज्ञानतोऽस्याऽऽनन्दस्य परिचयो भवति । तथा हि—प्रत्यहं तेषां तेषामेवाकाराद्यक्षराणां पुनः पुनर्लेखनस्य जामितायामागतायामपि तल्लेखनमत्यक्त्वा तथै- वाग्रे प्रवर्तितं चेदल्पैरेवाहोभिर्मुक्तासदृक्षाणि स्वीयाक्षराणि संवृत्तानि दृष्ट्वा तस्य कुमारस्य महानानन्दो जायमानोऽनुभूयते । तथैव शालाङ्गणे संवृत्तायाः संमोह- कारिण्याः सुरुचिर( मॅच )क्रीडायाः संदर्शनमोहं यत्नेन दूरमुत्सार्य ज्वरपी- डितस्य सहोदरस्य शुश्रूषां कर्तुं शीघ्रं स्वगृहमागत्य भगवत्कृपोपजीविन्या स्वीय- शुश्रूषया सोदरस्य ज्वरान्निर्मुक्तौ सत्यां जायमानानन्दस्य, क्रीडा( मॅच )दर्श- नोत्थाशुविनश्वरानन्दस्य च तुल्यत्वममूढेन केनापि वक्तुं नैव पार्यते ।

श्रेयोभिधः कर्तव्यानन्दो हि प्रथमः । प्रेयआनन्दस्तु द्वितीयोऽवगन्तव्यः । इत्थं तयोः पार्थक्यमस्ति । “सर्वापेक्षया जीवः प्रियतमः” ( सबसे प्यारा जीव ) इति हि लोके सुप्रसिद्धः प्रवादो वर्तते । अथापि कर्तव्यसिद्ध्यर्थं जीव-

स्योपरि तिलाञ्जलिं दातुमपि मनुष्यः प्रवृत्तो भवति । एवमितरैरपि " वैषयिक-प्रेमभङ्गो दुरुद्धरव्याधितापः, असह्यसंकटापातः, भीषणदारिद्र्यग्रासः, अविच्छेदेन दुःख-परम्परायाः प्रपातः " इत्यादिभिः कारणैर्भृशं त्रस्तो मनुष्यः स्वात्मबलिं दातुं बद्धपरिकरो जायते । एतादृशे प्राणघाते कस्तस्याऽऽनन्दो भवति । केवलं कर्तव्यपरिपालनमेव । असह्यदुःखान्निर्मोचनं वा । इदमेव तत्र बीजं भाति ।

कर्तव्यपरिपालनमिदमेकं वस्त्वित्थं विद्यते । यस्यानुष्ठाने संकटपरम्परायां प्राप्तायामपि प्राणदानप्रसङ्गे सत्यपि कर्तव्यानुष्ठानजन्यं सात्त्विकं समाधानं जायते । तदपीत्थं महद्वर्तते । यत्तस्याग्रे सर्वाणि दुःखानि नितरां विलीनानि भूत्वा चित्तमत्यन्तं समाहितं जायते । कर्तव्यस्य सम्यक् परिपालन एव महतो महत्त्वं तिष्ठति । कर्तव्यार्थं कृतस्त्यागो यावानधिको लोकप्रियताऽपि तावत्यधिका तं प्रेम्णा समालिङ्गति । तस्य त्यागस्याग्रे जनता स्वशिरांसि नमयति । नियमेन कर्तव्याचरणशीलस्य कण्ठ एव यशःश्रीर्विजयमालां समर्पयति । कर्तव्यपरिपालनानन्दस्य पुरतः पराभवप्रयुक्तं दुःखं निस्तेजस्कं भवति । अत एव कोऽप्यात्मप्रसङ्गश्चित्तं विचालयितुं न प्रभवति ।

एकदा कर्तव्यदक्षं बुद्धिमत्तिलकं तिलकं प्रति केनाप्याधुनिकेन सुशिक्षितेनेत्थं प्रश्नः कृतः—" यूयं त्रिंशद्वत्सरमारभ्याद्यावधि इङ्ग्रजसमाख्यै राजभिः साकं वाग्-बुद्धियुद्धं कुर्वन्तः समवलोक्यन्ते । अथापि तेन युद्धेन युष्माभिः किं संपादितम् । किमिङ्ग्रजः सम्राट् किंचिदपि पश्चादपसृतो वा । किंवा सूच्यग्रपरिमिताऽपि भूस्तेन प्रदत्ता वा । प्रजाभिः कररूपेण देयद्रव्यस्य प्रत्यहं शनैर्वृद्धिः प्रचलितैव । जनतया सोढुमशक्यानि राजशासनानि ( पिनलकोड कलमें ) नित्यं वर्धन्त एव । प्रजारञ्जननिमित्तप्रवृत्तिकं राजशब्दमयथार्थं कुर्वाणस्य तस्य स्वैरचेष्टितानि निष्प्रतिबन्धं ताण्डवमनुतिष्ठन्त्येव " इति । तदा तेन महापुरुषेणेदं तस्मायुत्तरं दत्तम् । " सत्यमिदं त्वदुक्तं सर्वम् । अथापि येन फलाभिसंधिरहिता कर्तव्यकरणस्य सशपथं प्रतिज्ञा कृता तेन यावज्जीवं कस्यामप्यवस्थायां प्रतिज्ञातं व्रतं परिपालनीयमेव । तस्य फलं किमपि वाऽऽस्ताम् । न तत्र दृष्टिर्देया " इति । किमियमोजस्विनी कर्तव्यनिष्ठा न किम् ।

तदुक्तं—लोककल्याणकृच्छ्रेष्ठः सदसद्व्यञ्जकः पुमान् ।
कर्तव्यनिष्ठां मनुते जीविताद्धि गरीयसीम् ॥ इति ।

कौमारमारभ्य कर्तव्याचरणशीलस्य नरस्य कर्तव्यपरिपालने विद्यमानस्याऽऽनन्दस्य तज्जन्यसमाधानस्य च निधिः करस्थो भवति । तद्दृष्ट्या कर्तव्यपरिपालनमेवाऽऽनन्दो ज्ञेयः । एतद्विपरीतस्य दुर्बलमनसः कर्तव्यनिर्णेत्री मतिः प्रखर-

शिक्षकवत्तीक्ष्णतरा भासते । स्वस्य स्वेतरस्य वा जीवनक्रमः सूक्ष्मदृष्ट्या समवलोकितश्चेदिदं दृग्गोचरं भवेत् । यत्कदाचिदपि कर्तव्यमुपेक्ष्य प्रेयोनुधावने कृत उत्तरत्रातिमात्रमनुतापस्य प्रसङ्गो दुर्निवार इति ।

" भिन्नरुचिर्हि लोकः " इति नियमात्तन्मनुष्याणां भिन्नभिन्नविषयेभ्य एव सौख्यलाभः स्यादिति प्रतिभाति । तथा ते यत्नमनुतिष्ठन्ति । किंत्वन्ते पश्चात्तापप्रसङ्ग एव तेष्वायातीति प्रायशो दृश्यते । कर्तव्यशीलस्य नैकमप्युदाहरणं तथाऽनुभूयते । कर्तव्याचरणे कष्टस्यानुभवेऽपि तथा प्राणार्पणसमये प्राप्तेऽपि तत्फलस्यानिष्पत्तावपि यः कर्तव्यपूर्तिजन्यस्याऽऽनन्दस्य लाभस्तस्य जायते स भृशमनुपमः । तदर्थमेव महान्तं यत्नं विदधतीति सुप्रसिद्धं जगति सर्वत्र ।

कर्तव्यं नाम किं तदेव कस्मादभ्यर्हितमनुष्ठेयं च तज्जन्यानन्दश्च कीदृश इत्येतत्समालोचितम् । इदानीं तस्य प्रकाराः कतीति विमृशामः । मनुष्यो यस्मिन्कुले समाजे देशे च स्वीयकर्मानुसारं जनिमाप्नोति तत्संबन्धीनि तस्य कानिचित्कर्तव्यानि सन्त्येव । तथाऽऽत्मोन्नत्यर्थं तस्य स्वीयं किमप्येकमभ्यर्हितं कर्तव्यमस्ति । तन्मध्ये किं श्रेष्ठमित्यत्र पारमार्थिकदृष्ट्या व्यावहारिकदृष्ट्या च पार्थक्यं स्यादेव । पारमार्थिकदृष्ट्या मनुष्यजन्मनोऽन्तिमं ध्येयं परमपुरुषार्थो मोक्षः । स च बन्धस्याऽऽत्यन्तिकनिवृत्तिस्वरूपः । बन्धस्तु संततजननमरणप्रवाहाख्यः संसारः । तन्निवर्तकश्च स्वात्मतत्त्वानुभव एव । तदर्थं यत्नं विधाय तत्संपादनमेव श्रेष्ठं कर्तव्यमित्यत्र न कोऽपि संदेहः । तत्सिद्ध्यर्थं सर्वस्य त्यागोऽपि सह्य एव । तद्दृष्ट्या समाजदेशोन्नत्यादयः सर्वाः संकुचिता एव कल्पनाः । तत्पुरतस्ताः कल्पनाः प्रेयःकथाश्चाकिंचित्करा एव । अतस्तदर्थं यद्विधेयमस्ति तदेव सर्वश्रेष्ठं कर्तव्यम् । तच्च स्वेनैवानुष्ठेयम् । सद्गुरुमन्तरेणान्यस्य तत्र साहाय्यं नैवापेक्ष्यते ।

अथ व्यावहारिकदृष्ट्या विमर्शे कृते कुलसमाजदेशादिविषयकं कर्तव्यमवश्यं प्राप्नोति । तत्र तरतमभावनिश्चयः किंचित्कठिन एव । अथाप्यापातत इत्थं वक्तुं शक्यम् । नित्यव्यवहारे मानवस्याऽऽद्यं कर्तव्यं यत्स्वस्य स्वीयकुटुम्बस्य च भरणपोषणादि यथा स्यात्तथा न्यायेन प्रयतनम् । परं स्वदेशोपर्यापत्तौ सत्यां तदितरस्य कस्यापि विचारमकृत्वा देशहितार्थं सर्वथा प्रयतनमेव निश्चितं कर्तव्यं बोध्यम् । समाजकर्तव्यं तु तदङ्गभूतं ज्ञेयमिति ।

कर्तव्याचरणप्रसङ्गेऽनिष्टाचरणप्रसङ्गोऽप्यनेकदा प्राप्नोति । यतः स्वार्थकर्तव्ययोः कलहोऽनादिरेव । ऐहिककीर्तेः कर्तव्यस्य च मध्येऽपि प्राबल्येनोपस्थितस्य स्वार्थस्योदाहरणं लोके न न्यूनमस्ति । तादृशप्रसङ्गे किं विधेयमित्यकाङ्क्षायामे-

तदेव कर्तव्यमित्यसंदिग्धतया कथनमशक्यप्रायमेव । तद्देशकालादिपरिस्थित्यनुसारेण स्वयमेव निश्चेतव्यम् ।

वैषयिकप्रेम्णः कर्तव्यस्य वाऽनुसरणं कार्यमित्ययं विषयः स्वीयभाग्येनास्माकं दुरदृष्टतश्च कल्पितकादम्बरीणां, नाटकानां चित्रपटानां लघुकथादीनां च मुख्यत्वेन लेखनविषयः संवृत्तः सर्वत्र परिदृश्यते । तत्रापि कामिनीकान्तयोः संबन्धिन्याः प्रीत्याः कर्तव्येण सह विवादं विधाय राज्याधिकारपरिवर्तनस्यासाधारणकारणत्वमपि संपादितमिति श्रूयते । मतिवैचित्र्यादेकस्य यत्कर्तव्यमिति भासतेऽन्यस्य तत्तथा न प्रतिभातीत्यत्र नास्त्युपायः । अथापि सदसद्विवेकसमर्थबुद्धिग्राह्यं यत्स्यात्तदेवानुष्ठितं चेदुत्तरत्रानुतापस्य प्रसङ्गो नाऽऽगच्छेदित्यवगन्तव्यम् ।

दृढतरकर्तव्यनिष्ठायामेव महतां महत्त्वमस्तीति प्रागभिहितम् । सामान्यजनः कदाचिदात्मकल्याणं, कुटुम्बकल्याणं, समाजकल्याणं, देशकल्याणं च युगपत्साधयितुमिच्छति । किंतु तन्मध्य एकमपि कार्यं परिपूरयितुं स न शक्नोति । तस्येष्टं तत्कार्यजातं तेनोपक्रान्तमप्युपक्रान्तावस्थायामेव कथंचित्स्थितं पर्यवसाने नितान्तं नैराश्यानुभवप्रसङ्गस्तदुपर्यागच्छति । युक्तमेवैतत् । लक्ष्यद्वये दृष्टिं दत्त्वा तदन्यतलक्ष्यवेधः केनापि कर्तुं न शक्यः ।

चण्डतरवेगेन प्रवहतो जलात्क्षुद्रा जलप्रवाहा निष्कासिताश्चेत्तेषु प्रवाहेषु सा प्रचण्डा शक्तिः कुत आगच्छेत् । प्रतिबद्धः स महाजलौघः पूर्ववद्विविधकार्योपकर्त्रीं विद्युच्छक्तिं निर्मातुं समर्थो भवति । महतां जनानामपि तद्वदात्यन्तिककर्तव्यनिष्ठायामेव महत्त्वं संतिष्ठत इत्यवगन्तव्यम् । सच्छीलस्योत्कर्षार्थं सद्गुणानामावश्यकता विद्यते । तेषां मध्ये कर्तव्यनिष्ठायाः प्रामुख्येण समावेशो भाव्यः । अस्या अभावे मानवः शीघ्रमेव विकाराधीनो भूत्वा दुर्गतिगर्ते चिरं पतति । शीलान्तर्गतगुणान् प्रति धैर्यस्याऽऽधार आवश्यकः । यद्वच्छरीरं प्रति पृष्ठवंशरज्जोराधारस्तद्वत् । शीलं तत्समाविष्टगुणजातं प्रति च धैर्याधारो बोध्यः । एकान्तेन स्वस्मिन् कर्तव्यनिष्ठासंसिद्ध्यै संयमोऽपि भृशमपेक्षितः । कर्तव्यनिष्ठायाः पूर्त्यै सर्वथाऽपेक्षितयोः संयमधैर्ययोरभावे जातेऽपि कर्तव्यज्ञाने किं सिध्येत । तयोरसत्त्वे कर्तव्यप्रवणमपि चित्तं नूनं पङ्गुवदेव भविष्यति । " ज्ञायते परं नानुभवारूढं जायते " इतिवत्तदानीं मनसोऽनुकम्पार्हाऽवस्था भवेदिति धैर्यसंयमावावश्यमभ्यसनीयौ मानवमात्रेणेत्युपदिश्योपसंहारे ' यद्यपि श्रेयःप्रेयसी उभे अपि कर्तुं स्वायत्ते पुरुषेण तथाऽपि साधनतः फलतश्च मन्दबुद्धीनां दुर्विवेकरूपे सती व्यामिश्रीभूते इव श्रेयश्च प्रेयश्च मनुष्यम्—आ इतः प्राप्नुतः । अतो हंस इवाम्भसः पयस्तौ

श्रेय.प्रेयःपदार्थौ संपरीत्य सम्यक् परिगम्य मनसाऽऽलोच्य धीरो धीमान् गुरुलाघवं विविनक्ति पृथक्करोति । विविच्य च धीरः श्रेयो हि श्रेयोमोक्षणमेवाभिवृणीते । प्रेयसोऽभ्यर्हितत्वात् । यस्तु मन्दोऽल्पबुद्धिः सदसद्विवेकासामर्थ्याद्योगक्षेमाद्योगक्षेमनिमित्तं शरीराद्युपचयसंरक्षणमित्तं प्रेयः पशुपुत्रादिलक्षणं वृणीते ' इति शीर्षकस्थश्रुत्यर्थं श्रावयित्वा चालं कर्म इति शम् ।

---

## ( अथ मृत्युविमर्शः ) ।

विशुद्धस्य हि मे मृत्युः पुत्रजन्मसमः किल ।

प्र० कस्माद्भयमिह उ० मृत्योः । प्र० कोऽपरिहार्यः उ० मृत्युः [शं० चार्याः]।

अथास्यां जगत्यां वाय्वग्निजलस्थावरादिभ्यः सिंहव्याघ्रतरक्षुऋक्षगण्डकमहिषगोमायुबिडालश्वमूषकसर्पवृश्चिकपशुपक्षिकीटपतङ्गादिजङ्गमेभ्यो राजतस्करज्ञातिदारिद्र्याधिव्याधिभूतप्रेतपिशाचयक्षराक्षसगन्धर्वशाकिनीडाकिन्यादिभ्यो देवादिभ्यश्चोत्पत्स्यमानानां भयानां मध्ये मृत्योर्भयमत्यन्तं प्रबलं वर्तते । ' भियः सीमा मृत्युः ' इति हि प्रसिद्ध एव प्रवादः । तदितरा भीतयः क्षुद्रा एव । यतस्ता भीतयो लौकिकेनालौकिकेन वोपायेन निराकर्तुं शक्यन्ते । मृत्योर्भीतिस्तु न तथा । तस्या अपरिहार्यत्वात् । मृत्युर्निरसनीय इति सर्वेऽपीच्छन्ति । तदर्थं यथासामर्थ्यं प्रयतन्ते च । " मृत्युर्बुद्धिमताऽपोह्यो यावद्बुद्धिबलोदयम् " इति शास्त्रवचनमप्यस्ति । अथापि सा तेषामिच्छा साकल्येन सफला न भवतीत्येतदपि प्रसिद्धमेव । अयं जीवात्मा तावदमरो जातवपि न विनश्यतीति शास्त्रतो भगवदुपदेशतश्च प्रायः सर्वे जानन्त्येव । अनेन देहेन साकमात्माऽपि विनष्टो भवतीति वदन्तः पामरा जगति विरला एव । सत्येवं कुतो बिभेत्ययं जन इत्याकाङ्क्षायां देहात्मनोर्वियोगाद्बिभेतीत्येवोत्तरं तत्र । इदानीमनेन चिराय संपोषितेन देहेन साकं मम वियोगो भवितेति खिन्नो भवति जीवात्मा । स्वाभाविकमेवैतत् । दश पञ्च वा वत्सरान्यस्य चेतनस्याचेतनस्य वा वस्तुनः सम्यक् परिचयः संवृत्तोऽस्ति तस्याकस्माद् वियोगे जाते दुःखं भवतीति लोके प्रसिद्धम् । तदुक्तं कविकुलगुरुणा कालिदासेन—

यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया
बाष्पस्तम्भितचित्तवृत्तिकलुषं चिन्ताजडं दर्शनम् ।
वैक्लव्यं मम तावदीदृशमतः स्नेहादरण्यौकसः
पीड्यन्ते गृहिणः कथं नु तनयाविश्लेषदुःखैर्नवैः ॥ इति ।

एवं चेद् गर्भावस्थामारभ्य यस्य संगतिरासीद् यस्याव्यभिचारेण साहचर्येण सुखादिकमनेन जीवात्मनाऽनुभूतं तस्य शरीरस्य वियोगप्रसङ्गे प्राप्ते दुःखेन भाव्यमिति साहजिकमेव । अस्य देहवियोगप्रयुक्तदुःखस्य कारणान्तरमप्यस्ति । अस्य देहस्य वियोगानन्तरं मम का वाऽवस्था भवेत्तत्किमप्ययं जीवात्मा न जानाति । मृत्योरनन्तरमत्युत्कृष्टाऽवस्था मम भविष्यति । प्रतिक्षणं वर्धिष्णु सुखमेव मया लभ्येत । इत्थमस्य निश्चयः स्याच्चेद्देहवियोगस्यार्थान्मृत्योर्भीतिर्न स्यादेव । समधिकां भृतिं प्राप्तवतस्तत एवाल्पभृतिकां सेवां त्यजतः सेवकस्य न किमपि दुःखं जायते प्रत्युत तोषः संजायते । तद्वद्यस्य स्वस्याः सद्गतेर्निश्चयो वर्तते । धर्मश्रद्धानुसारतो येन यावज्जीवं सत्कर्मैवानुष्ठितं तेन सत्कर्माचरणेनैतद्देहवियोगतः परं स्वस्योत्कृष्टा गतिर्भविष्यतीति दृढ विश्वासो वर्तते । तस्य मृत्युभयं नैव संभवति । मृत्युमानन्दसंवर्धकं जानाति सः । सत्कर्मप्राप्ये स्वर्गादिसुखे विश्वासं स्थापयतः पुंस इयं रीतिश्चेत्तत्स्वर्गादिसुखं यस्योपरि नीराजयितव्यमस्ति स आत्मानन्दो येनाऽऽत्मसात्कृतस्तस्य मृत्युभयं कदाऽपि न भासत इति किमु वक्तव्यम् । तस्य स आनन्दोऽखण्डितस्तिष्ठति । यस्मिन्नानन्दे चित्तमेकवारं विलीनं चेद्ब्रह्माण्डमपि विस्मृतं भवति । तमात्मानन्दं समासादयतो जीवश्रेष्ठस्य देहवियोगभीतिः कुतो जायेत । यस्य देहभानमेव नास्ति ? मनोऽप्यमनीभावमापन्नम्, तस्य मृत्युभयं कीदृशं स्यात । कालस्यापि कालः संवृत्तः सः । तेनैव मृत्युर्जितः । स एव मृत्युविजयीति बोध्यम् । मृत्युविजयो नाम न देहस्याजरामरीकरणम् । यतस्तदशक्यमनिष्टं चास्ति । तथा हि—रामकृष्णादयो ये साक्षाद् भगवतोऽवतारा अभूवन् तेभ्योऽपि सर्वभक्षकेन कालेनेदानीमुपसंहर्तव्या इमेऽवतारा इति सूचना प्रवृत्ता । योगाभ्यासाद्युपायेनेदं शरीरं चिराय जीवयितुं शक्यमित्युक्तावपि स्त्रीपुत्रादिजनेषु दिवं गतेषु सत्सु स्वस्यैकस्यैव जीवने कस्याऽऽनन्दः स्यात । ईदृशदीर्घायुषो मानुषस्येतरेषां मृत्योरवलोकनमेव संततं भवेत् । तथोत्तरसंततेः स्वैरं प्रवृत्ता नूतनाः स्वस्यानभिमता आचारविचारा अगतिकतया तूष्णीं सोढव्या एव । तथा ‘ वृद्धास्ते न विचारणीयचरितास्तिष्ठन्तु नाम ’ इत्यनादरपुरःसरं नव्यैः कृतोपहासेन दीनदीनो भूत्वाऽस्यां दुरवस्थायां स्थित्यपेक्षया नेत्रयोश्चिराय संमीलनमेव सम्यगिति कार्पण्योद्गारान् प्रकटयेत् ।

“ वृद्धोऽयं व्यर्थं जीवति मृतश्चेदेव शुभम ” इति मव्यानां भासनात् प्रागेव मृतौ स्पृहणीयश्चमत्कारोऽस्ति । ‘ जीवन्नरो भद्रशतानि पश्येत् ’ इत्युक्ते-

श्चिरकालं जीवितव्यमेवेति या मतिः सा नूनं भ्रम एव । प्रापञ्चिकदृष्ट्या पारमार्थिकदृष्ट्या वा विमर्शे कृते सुदीर्घजीवितापेक्षया यथाप्राप्तजीवितस्य भगवद्गुणसंकीर्तनानन्दमुपभोक्तुं व्ययीकरणं प्रशस्ततमं ज्ञेयम् । देहास्तित्वप्रयुक्तः, देहेनोपभुज्यमानविषयेभ्यश्च जायमान आनन्दो नूनं क्षणभङ्गुरः । सत्येवमेकस्मिन् विषयेऽपगते विषयान्तरे यदासक्तिवर्धनं तत्समिद्धात्पावकान्निर्गत्योत्तप्ताङ्गारेषु पतनतुल्यमित्यवगन्तव्यम् । विषयान् प्राप्यापि तत्सेवनसामर्थ्याभावेऽभिरुचेरविनष्टत्वाच्चित्तमत्यन्तं संतप्यते । सुसमर्थे देहेऽभीप्सिता विषया न लब्धाश्चेत्तद्दुःखं निरसितुमशक्यम् । देहः समर्थो भोज्या विषया अपि यथाकामं सन्ति । अथाप्युपभोगशक्तेः परिच्छिन्नतया तस्याः संयमप्रयुक्तं दुःखमपरिहार्यम् । अन्यथा भोगातिरेकेण शक्तौ क्षीणायामुत्तरोत्तरं भीषणं दुःखं भविष्यति । तस्मादस्थिरान् सर्वथा दुःखप्रसवान् विषयानाश्रित्य मनसि दुर्वासनाजालस्योत्पादनापेक्षया तस्य मनसोऽमनीभावो यथा स्यात्तथा प्रयत्नेनाऽऽत्मानन्दे तस्य विलयनमेव शाश्वतसुखस्य सर्वोत्कृष्टः पन्थाः । यस्मिन्नानन्दे लब्धे तदितरक्षुद्रानन्दानां स्मृतिर्नैव जायते । यत्राऽऽनन्दे निमग्नानां पुरुषोत्तमानामुपर्येकस्माद् दुःखस्य पर्वताः पतिता अपि तेषां चित्तं विचलितं नैव भवति । यस्य कदाऽप्यस्तो न जायते, यतः प्रत्यावृत्तिर्नास्ति, एतादृशं यस्याऽऽनन्दस्यैश्वर्यं विद्यते स आनन्दः सततयत्नेन सुसंपादयितव्यो जनिमात्तवता मानवेन । तादृशानन्दस्य संप्रापकं मुख्यं साधनं सतां समागम एव ।

गङ्गा पापं शशी तापं दैन्यं कल्पतरुस्तथा ।
पापं तापं च दैन्यं च हन्त्यद्रे सत्समागमात् ॥

गङ्गा केवलं पापमेव हरति पापहेतुं पापबुद्धिं न विनाशयति । चन्द्रः शीतलयति शरीरं परं मनस्तापं न शमयति । तथा कल्पतरुः संकल्पितं फलं ददात्यथापि मनसि सत्संकल्पं नोत्पादयति । सत्समागमस्तु यथा पापं हरति तथा पापबुद्धिमपि निर्मूलयति । चन्द्रवत्केवलं शीतलतामेव न ददात्यपि तु तां दत्त्वा मनसोऽमनीभावं करोति । कल्पवृक्षापेक्षयाऽप्यधिकौदार्येण शुभोदर्कं शुभसंकल्पमेवोत्पादयति । तस्मादेतादृशं श्रेयस्करं सत्समागमं विधाय यथा प्रपञ्चभानं न स्यात्तथाऽऽत्मानन्दः संपादयितव्यो मानवमात्रेणेति सिध्यति । इदमेवाऽऽद्यं कर्तव्यं जन्मिनो मर्त्यमात्रस्य । भूतपूर्वैर्महात्मभिरिदमेव कृतम् । शारीरं दुःखं निरसितुमीशस्याऽऽराधनापेक्षया विशुद्धेन मनसा भगवदुपासनाजन्यमानन्दमनुभवितुं परमेश्वरस्याऽऽराधनकरणमेव प्रशस्ततमं बोध्यम् । यावद्देहं शुभमशुभं वा प्रारब्धं भोक्त-

श्यमेव । भोगमन्तरा तस्य हानं कदाऽपि कस्याप्यशक्यमेव । दुःखविस्मृतेरयमुपाय इति बुद्धिर्मतायनुष्ठाने कार्या । भगवदुपासनाजन्यानन्देनैव दुःखं विस्मर्तुं शक्यम् । विस्मृते तस्मिन् सदपि तदसदेव भवतीति ज्ञेयम् । अतो नित्यं सदाचरणेन सत्समागमेन च भगवदुपासनायाः संवर्धनमेव निःशेषदुःखनिवृत्तेः परमं साधनं दुःखपङ्कनिमग्नानां जीवानां भाग्यवशादस्मिन् जगति समुज्जम्भूत इति मृत्युभीतेभ्यो जनेभ्यो विनिवेद्यालं कुर्म इति शम् ॥

---

## ( अथ पुनर्जन्मविमर्शः )।

यां यां योनिं तु जीवोऽयं येन येनह कर्मणा ।
क्रमशो याति लोकेऽस्मिंस्ततत्सर्वं निबोधत ॥ ( म० १२ । ५३ ) ।

अथास्यां जगत्यामनेके जीवा जायन्ते क्रमेण व्युत्क्रमेण वा म्रियन्त इति यथा प्रसिद्धं तथा त एव जीवाः पुनर्जनिमापद्यन्त इति प्रत्यक्षतो नावगम्यते । यद्यपि तत्त्वविदस्त एव जायन्त इति ब्रुवन्ति तथाऽपि प्रागनुभूतविषयस्मरणादेरभावात्सामिकृतस्य पूरणादेरदर्शनात्तत्त्वविदामपि केषांचिदत्र विप्रतिपत्तेर्दर्शनाच्च संदेहे प्राप्त आह भगवान् योगेश्वरः श्रीकृष्णः—

वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ॥ ( भ० २ । २२ )

इति । इत्थं जीवानां पुनर्जन्मनः केवलं निर्देशोऽस्त्यार्यधर्मग्रन्थेष्वित्येव न । अपि तु तेषां तत कदा कथं कुत्र च भवति । केन कर्मणा कीदृशं जन्म प्राप्यते । उत्तमजन्मप्राप्त्यर्थमिह किं कर्तव्यमित्यादेः सप्रमाणं सोपपत्तिकं सानुभवं च विवेचनं यथा वैदिकधर्मग्रन्थेषु प्रत्नैर्विस्तरशः कृतमुपलभ्यते न तथेतरत्र कुत्रापि दृश्यते । कृतहान्यकृताभ्यागमादिदोषप्रसक्तेरशाश्वतदेहादिभ्यो विभिन्नतया निश्चितस्याऽऽत्मनोऽमरत्वं सर्वेषां धर्माणां मौलिको भूमिबन्धोऽस्तीति ज्ञेयम् । अथापि तस्य पुनर्जन्मनि केचन धर्मा नास्तिकाः केचन साशङ्काश्च वर्तन्ते । यदाधुनिकाः कतिपये सुधारकब्रुवा मानुषा अस्पृश्यतोन्मूलनधर्मपरिवर्तनविधवोद्वाहविजातीयोद्वाहप्रभृतीनुच्छास्त्रान् संकरपर्यवसायिनो विषयानवलम्ब्य तत्सिद्ध्यर्थं महता संरंभेणाव्यापारेष्वितिवयत्नमनुतिष्ठन्ति तेन ते वेदोपदिष्टे पुनर्जन्मसिद्धान्ते नितरामविश्वासं स्वीयं कापुरुषत्वं चाऽऽविष्कुर्वन्ति । तदन्तर्गताः केचन यद्यपि पुनर्जन्मास्तित्वं कथंचन मन्वते तथाऽपि रमणीयचरणा रमणीयां योनिमापद्यन्ते ।

कपूयचरणाः कपूयां योनिमापद्यन्ते । पुण्यकर्मणोत्तमजन्मप्राप्तिः पापकर्मणाऽधमजन्मावाप्तिरित्यस्मिन् सर्वथाऽबाध्ये श्रुतिसिद्धान्ते केनापि हेतुना नैव विश्वसन्ति । येषां वैदिके धर्मे दृढं विश्वासो वर्तते यावच्छक्यं च ये तदाज्ञां परिपालयन्ति तेषामिदमर्धजरतीयं न कदाऽपि संमतं भवेत् । अस्पृश्यतायाः परिपालनमिदं केवलं रूढिः । न प्रामाणिकम् । जेतॄणां जितेषु बलात्कारोऽयम् । अनार्येष्वार्याणामन्याय्यं वर्तनमिदम् । इत्येवमादयः, पाश्चात्यैस्तदीयकुशिक्षादूषितस्वान्तैरेतद्देशीयैश्च जनतायां प्रसारिताः स्वैरप्रलापा एव । यत इदमस्पृश्यस्पर्शपरिहरणं पुनर्जन्मकर्मवादयोस्तत्त्वैकप्रभवमस्ति । सनातनधर्माभिमानिनां जनानां यः सर्वथाऽशक्ये कैशन्यायेनाऽऽरब्धेऽस्मिन्नस्पृश्यतोन्मूलनवादे विरोधो दरीदृश्यते स तात्त्विकः । न प्रद्वेषमूलकः । न वा दुराग्रहनिबन्धनः । यत्त्विदं 'अस्पृश्यत्वं' वैदिकधर्मस्य लाञ्छनमिति प्रलपनं तदाबाल्यादभ्यस्तावैदिकविद्यस्य चिरायाऽऽर्यसंस्कृतिशून्यप्रदेशे यापितायुष्कस्य लेशतोऽप्यनाघ्रातार्यधर्मतत्त्वस्याव्यवस्थितचित्तस्येत्युपेक्ष्यमेव ।

अत्रेदं विमृश्यम्—यदस्यां क्षितौ सहस्रशः पञ्चजना जानित्वा कनककान्ताप्रभृतिक्षणभङ्गुरविषयावाप्तिलिप्सया प्रत्यहं प्रयतन्ते । परमतृप्ताशा एवाकस्मान्मृत्युना ग्रस्यन्ते । उक्तविषयाकृष्टमनसां तेषामन्तःकरण उदात्तविचारः कदाऽपि नोदेति । सत्येवं तेषां जनुषः साफल्यायावसरः कदा कुत्र च मिलिष्यति । ये शैशवावस्थायामेव करालकालतुण्डे निपतन्ति तेषां जनेः का गतिः । एको जन्मन आरभ्य मूर्खश्चेदपरः कुशाग्रमतिरुपलभ्यते । एकः सात्त्विकोऽन्यस्तामसः । कश्चिच्छमदमाद्युपेतः, कामक्रोधाद्याक्रान्तः परः । कश्चन सुखी कश्चन दुःखी । केचन निसर्गतो जडाः केचन चेतनाः । क्षणभङ्गुराः केचित्केचिच्चिरावस्थायिनः । नित्या अपि केचित । एवं धनी दरिद्रो व्यङ्गोऽव्यङ्गः सुन्दरोऽसुन्दरो रुग्णोऽरुग्णो धन्योऽधन्य इत्येवमाद्यनन्तविधं वैचित्र्यं दृश्यत इत्यविवादम् । चरमोच्छ्वासनिर्मोकावसरेऽपि तेषां पृथक्पृथगवस्थोपलभ्यते । सत्येवं मृत्योरनन्तरं ते सर्वे समाना एवेत्युक्तिः कथमिव श्रद्धेया स्यात् । यावज्जीवमनुष्ठितशुभाशुभकर्मणां फलं तैरवश्यं भोक्तव्यमेव । तैः कृतानां कर्मणां परिणातिः समाजे भवति । अतः समाजकल्याणार्थं शुभमेव कर्म कार्यं नाशुभमिति शास्त्रतो व्यवहारतश्च सिद्धेऽप्यनेके तामसा जना इत्थमपत्रपाः सन्ति यत्स्वीयमशुभं कर्म समाजे केन हेतुना कथं च परिणमतीत्यस्य स्वप्नेऽपि विमर्शं न कुर्वन्ति । स्वीयानैतिकाचरणेन समाजहानिर्भवती-

त्येषोऽर्थस्तेषां मनांसीषदपि न स्पृशतीत्याश्चर्यम् । किंचैकेन कर्म कर्तव्यं तत्फलं चान्येन भोक्तव्यमित्यन्याय्यम् । यत्र तथैवोद्देशस्तत्र तथा स्यादित्यन्यत् ।

तस्माद्व्यक्तमुपलभ्यमानमिदं वैचित्र्यं यतः कार्यं नामोत्पन्नं ततः सहेतुकं तदित्यवश्यं वाच्यम् । नह्यन्तरेण कारणं कार्योत्पत्तिर्युक्ता दृष्टा वा कुत्रचित् । निपुणतरमन्विष्यापि यत्र कारणं नोपलभ्यते तत्र यया कयाऽपि विधयाऽज्ञाते कारण एव विश्राम्यति सर्वो लोक इति प्रसिद्धम् । स्थिते चैवं तत्कारणमपि विचित्रमेवाङ्गीकर्तव्यम् । न चेद्विचित्रं कार्यं न स्यात् । नहि शुक्लेभ्यस्तन्तुभ्यो विचित्रवर्णः पट उत्पद्यते । किंतु चित्ररूपेभ्य एव तेभ्यः । तदुक्तम्—'वैचित्र्यं च समस्य न ' इति । किं तद्विचित्रकारणं दृष्टमदृष्टं वेति विचारणायां दृष्टस्याऽऽशुतरविनाशित्वात्कालान्तरभाविसुखदुःखाद्यहेतुतया ' पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन ' इति श्रुतेः पुण्यपापाख्यमदृष्टमेव कार्यगतवैचित्र्यस्य कारणमकामेनापि स्वीकार्यं भवति । अत्रेदमनुमानम्—विचित्रं जगदिदं विचित्रकारणकं, विचित्रकार्यत्वात् । विचित्रवर्णपटवदिति ।

ननु वस्तुनः स्वभावेनैव वैचित्र्योपपत्तावलं पुण्यपापाख्येनादृष्टकारणेनेति चेत् । नैवं वक्तुं शक्यं विकल्पासहत्वात् । तथा हि—किमयं स्वभाव एकाकारोऽनेकाकारो वा ? । आद्ये वैचित्र्यानुपपत्तिस्तदवस्थैव । अनेकाकारश्चेत्कस्मादनेकाकारत्वं तस्येति वक्तव्यम् । येन तत्तस्य दृष्टत्वे प्रागुक्तदोषादनुद्धारः । अदृष्टं चेत्प्रक्षालनाद्धीति न्यायेनाऽऽदावेव तदङ्गीकारो न्याय्यः । सर्वेष्वपि हि दृश्यमानपदार्थेषु कार्यकारणभावनियमदर्शनादाकस्मिकवादोऽनुभवविरुद्धस्तुच्छ एव । अतो दृश्यमान कार्यवैचित्र्यान्यथानुपपत्त्या गम्यमानमदृष्टाख्यं विचित्रं कारणं गले पाशायत एव । किंच श्वेदाद्यशने स्वाभाविकप्रवृत्तेरनुपलम्भाद्दुग्धाद्यशने तस्यास्तथोपलम्भाच्चेष्टसाधनताज्ञानप्रवृत्त्योः कार्यकारणभावः सर्वसंमतः । ततोऽचिरप्रसूतस्य शिशोः स्तनपानाऽऽद्या प्रवृत्तिस्तन्निदानस्येष्टसाधनताज्ञानस्य तदानीमसत्त्वात्तदीयजन्मविनादृष्टेनोद्बुद्धं प्राग्भवीयानुभवोत्थसंस्कारजन्यं स्मरणमगत्याऽङ्गीकार्यम् । एवमाद्यविरोधितर्कानुगृहीते ' पुण्यं वै पुण्येन कर्मणा भवति पापः पापेन । रमणीयचरणा रमणीयां योनिमापद्यन्ते ब्राह्मणयोनिं क्षत्रिययोनिं वैश्ययोनिं वा । कपूयचरणाः कपूयां योनिमापद्यन्ते श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा । नाबीजाज्जायते किंचिन्नाकृत्वा सुखमेधते । सुकृतैर्विन्दते सौख्यं प्राप्य देहक्षयं नरः । चक्षुषा मनसा वाचा देहे

च चतुर्विधम् । करोति यादृशं कर्म तादृशं प्रतिपद्यते ' इति श्रुतिस्मृत्यादिप्रमाणैः सिद्धं शुभाशुभकर्मानुसारि शुभाशुभजन्मान्तरं ( पुनर्जन्म ) सुरगुरुणाऽप्यपलपितुमशक्यम् ।

महाभारते व्यासमहर्षिणा सहगतोऽवबोधायाऽऽख्यायिकामिषेण प्रकृतोऽर्थः सुस्पष्टमुपदिष्टः । तथा हि—गौतमीनाम्नी काचन ब्राह्मणी सर्पदष्टं गतासुं पुत्रमवलोक्य भृशं शोचन्ती, केनचिल्लुब्धकेन बद्ध्वा स्वसमीपमानीतं तं सर्पं जहीति मुहुरुच्यमानाऽपि तद्वधं नाकरोत् । सर्पोऽपि नाहं वधकर्ता, कुठार इव च्छिदिक्रियायामत्र परतन्त्रोऽहं मृत्युरेवात्र कारणमित्यवोचत् । अथ मृत्युः प्रादुर्भूय कालपरतन्त्रोऽहमित्यवाच । ततः कालोऽप्यागत्य नाहं स्वातन्त्र्येण हेतुः किंत्वस्य कर्मैवेत्याह—

प्रागनेन कृतं कर्म तेनासौ निधनं गतः ।
विनाशहेतुः कर्मास्य सर्वे कर्मवशा वयम् ॥ इति ।

ननु प्राक्कृतकर्मानुसारेण सम्यगसम्यग्जन्म सुखदुःखादिकं च प्राप्यते मानवेनेति पौरुषं निरर्थकमेवेति चेन्न । यतः प्रारब्धमपि तत्तदबुद्ध्यादीनां व्यापारैरेव फलं निष्पादयतीति प्रसिद्धम् । नहीश्वरः सर्वेषां कारणमिति विना भानूदयं सुप्रभातं तनोति । लोचनमन्तरेण वा नीलपीतादिरूपाणि दर्शयति । तद्वदेवेदं द्रष्टव्यम् ।

प्राक्तनमैहिकं चेति द्विविधं पौरुषम् । तत्र प्राक्तनं प्रारब्धं दैवमिति चोच्यते । ऐहिकं पुरुषकार इति प्रसिद्धम् । उक्तभास्करोदयादिदृष्टान्तानुसारेण प्राक्तनस्यैहिकापेक्षत्वादैहिकेन च तदन्यथाभावस्य बाहुल्येन तत्र तत्रोपलम्भनात्पुरुषकारः श्रेष्ठ इति निश्चीयते । यत्र तु कृतेऽपि पुरुषकार इष्टं फलं न दृश्यते तत्र पुरुषकारे किमपि वैगुण्यमेव संजातमिति बोध्यम् । तदेतत्सर्वमुक्तं योगवासिष्ठे—

प्राक्तनं चैहिकं चेति द्विविधं विद्धि पौरुषम् ।
प्राक्तनं चैहिकेनाऽऽशु पौरुषार्थेन जीयते ॥

साधूपदिष्टमार्गेण यन्मनोङ्गविचेष्टितम् ।
तत्पौरुषं तत्सफलमन्यदुन्मत्तचेष्टितम् ॥

भोक्ता तृप्यति नाभोक्ता गन्ता गच्छति नागतिः ।
वक्ता वक्ति न चावक्ता पौरुषं सफलं नृणाम् ॥
प्राक्तनं पौरुषं तद्वद्दैवशब्देन कथ्यते ।

दैवमाश्वासनामात्रं दुःखपेलवबुद्धिषु ॥

इत्यादिग्रन्थसंदर्भेण । अत एव नीतिशतके—

उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी—

दैवं प्रधानमिति कापुरुषा वदन्ति ।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिध्यति कोऽत्र दोषः ॥

इति पौरुषविषयिणी साहंकारा भर्तृहर्युक्तिः संगच्छते । तथा—

उद्योगः खलु कर्तव्यः फलं मार्जारवद्भवेत् ।
जन्मप्रभृति गौर्नास्ति पयः पिबति नित्यशः ॥

इति चाभियुक्तोक्तिरपि समन्वेति ।उपसंहारे—

विधुं दद्राणं समने बहूनां युवानं सन्तं पलितो जगार ।
देवस्य पश्य काव्यं महित्वाऽद्या ममार स ह्यः समान ॥

[ ऋ० अ० ८ अध्या० १ व० १६ ऋक् ५ ] अस्यार्थः सायणाचार्यकृत इत्थम्—अनया कालात्मक इन्द्रः स्तूयते । विधुं विधातारं सर्वस्य युद्धादेः कर्तारम् । विपूर्वो दधातिः करोत्यर्थः । तथा समने । अननमनः प्राणनम् । सम्यगननोपते संग्रामे बहूनां शत्रूणां दद्राणं द्रावकमीदृक्सामर्थ्योपेतं युवानं सन्तं पुरुषं पलितो जरा जगार । निगिरतीन्द्राज्ञया । एवमुक्तलक्षणं वक्ष्यमाणलक्षणं च देवस्य कालात्मकस्येन्द्रस्य महित्वा महत्त्वेनोपेतं काव्यं सामर्थ्यं पश्य । पश्यत हे जनाः । तथा जरसा प्राप्तोऽयं ममार म्रियते । स ह्यः परेद्युः समान सम्यक्चेष्टते । पुनर्जन्मान्तरे प्रादुर्भवतीत्यर्थ इति । अत्र जरसा व्याप्तो यो म्रियते स एव पुनर्जन्मान्तरे प्रादुर्भवतीति स्पष्टमेव जन्मान्तरं सूचितम् । इमामेव वेदपुरुषोक्तिमनुसरन्ती गीतास्था ' जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ' इत्येकस्यैव जन्ममरणयोः सामानाधिकरण्यनियमोक्तिः साक्षाद्भगवतः समुज्जृम्भते । एवमेव भगवद्गीतायाः सकाशात् पुनर्जन्मप्रदर्शकानि बहूनि वचांस्युद्धर्तुं शक्यानि । तानि यथा—' बहूनां जन्मनामन्ते ' भ० गी० ७ । १९ ]

नह्येवाहं जातु नाऽऽसं न त्वं नामी जनाधिपाः ।
न चैव न भविष्यामः सर्वे वयमितः परम् ।

बहूनि मे व्यतीतानि जन्मानि तव चार्जुन । [ भ० गी० ५ । ५ ]
तथा राजानकरामकविकृतायां सर्वतोभद्राख्यभगवद्गीताटीकायां ' कस्यैव

जन्ममरणविकारलक्षणयोग इति तत्त्वमविचारयतोऽपि लोकस्यायं प्रवादः स्थित एव । जातो म्रियते मृतो जायत इत्येवं विधः ' इत्युक्तम् । एवं पुनर्जन्मावेदकश्रुतिस्मृतीरुदाहृत्यालं कुर्म इति शम् ।

---

## ( अथ शब्दब्रह्मविमर्शः ) ।

शाब्दे ब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ।
इति वात्सल्यतो बिभ्रत्तद्रूपं पातु नः शिवः ॥

अथास्मिन्नवनिमण्डले यद्यदुच्चावचं चेतनमचेतनं वा वस्तु वर्तते तत्सर्वं ज्ञातं ज्ञेयं वाऽस्तीत्यविवादम् । कदाऽपि कस्यापि चेतनस्य ज्ञानगोचरेण तेन तेन वस्तुना भाव्यमेवेत्यर्थः । यच्च ज्ञेयं तस्य व्यञ्जकेन शब्देनापि भाव्यमेव । नह्यन्तरा शब्दं तस्य सम्यग्व्यञ्जनं भवितुमर्हति । तस्य व्यञ्जनं चाभिधालक्षणाव्यञ्जनाद्यन्यतमया वृत्त्या तेन तेन शब्देन यथासंभवं क्रियत इत्यन्यदेतत् । अत एव सर्वस्यापि वस्तुजातस्य पदस्य ( शब्दस्य ) अर्थो वाच्यमभिधेयं वेति व्युत्पत्त्या पदार्थ इत्यन्वर्थं नामान्तरं विद्यते । तस्माद्यो यः पदार्थो नाम वस्त्वस्ति तस्य तस्य व्यञ्जकानि तेन तेन समव्याप्तानि तादात्म्यापन्नानि पदानि भाव्यान्येव । यस्यार्थस्य व्यञ्जकं पदं नास्ति स पदार्थ एव न भवति । तथा च परब्रह्मसदृशी शब्दब्रह्मणोऽस्य व्याप्तिर्वर्तते । तदुक्तं—

म्यरस्तजभ्नगैर्लान्तैरेभिर्दशभिरक्षरैः ।
समस्तं वाङ्मयं व्याप्तं त्रैलोक्यमिव विष्णुना ॥ इति ।

परं ब्रह्म यद्यस्ति तर्हि तज्ज्ञायते केनापीत्यवश्यं वाच्यम् । यदि ज्ञायते तर्हि तस्य शब्दमन्तरा ज्ञातुमशक्यत्वादादौ शब्देनैव तज्ज्ञातव्यं भवति । सोऽयं परब्रह्मबोधकः शब्दः परापश्यन्तीमध्यमावैखरीति चतुर्धाऽभिव्यक्तो भवति । तथाऽभिव्यक्तः सञ्श्रोतुश्चित्ते स्वज्ञाप्यार्थविषयकवृत्तिज्ञानाख्यान् संस्कारान्जनयति । इयं सर्वेषां शब्दानामभिव्यक्तिर्हिरण्यगर्भाद्भवति । हिरण्यगर्भः परमेश्वरस्य ज्ञानशक्तिर्विद्यते । सूत्रात्मा च तस्य क्रियाशक्तिः । व्यष्टिशरीरे यथा जीवात्मा प्राणवायुर्जाठरोऽग्निरित्येते परस्परमविनाभूताः सन्ति तथा समष्टौ हिरण्यगर्भः सूत्रात्मा आदित्य इत्येते त्रयस्तथा तिष्ठन्ति । तत्र सूत्रात्मा समष्टेः प्राणवायुस्थानीयः परमेश्वरस्य क्रियाशक्तिर्विद्यते । हिरण्यगर्भस्तस्य ज्ञानशक्तिर्ज्ञेया । मन्त्रब्राह्मणात्मनः कृत्स्नस्य वेदस्य मौलिकमुद्गमस्थानं तदेव । ज्ञानक्रियाशक्त्योः संयोजयिताऽऽदित्यः परमेश्वरस्य जाठराग्निस्थानीयः । अतो हिरण्यगर्भस्यैतज्जगदन्तर्गतानां चतुर्दशभुवनानां प्रत्यक्षं ज्ञानं वर्तते । तच्च ज्ञानं तेन वेदात्मना प्रकटीकृतमस्ति । भूर्लोकवासिनामस्माकं चक्षुरादिभिरिन्द्रियैरत्रत्यानामेव रूपादिवस्तूनां प्रत्यक्षज्ञानं कदाचिज्जायते । भुवरादिलो-

कानां तत्रत्यानां चेतनाचेतनानां च पदार्थानां प्रत्यक्षं नास्त्येव । हिरण्यगर्भस्य तु सकलगोचरमपरोक्षज्ञानं वर्तते । अस्मदीयं ज्ञानं हैरण्यगर्भेण ज्ञानेन तादात्म्यापन्नं चेदेव तत्प्रकृतं ज्ञानं स्यात् । तथा तद्यथार्थमयथार्थं वेत्यादेर्निर्णायकं साधनं हिरण्यगर्भादाविर्भूतो वेद एव । सोऽसौ वेदः परमेश्वरस्य परा वाक्वर्तते । इदानीमप्यविच्छिन्नगुरुपरम्परया पठ्यमाना वेदास्त्रिकालाबाध्यं पारमेश्वरं पवित्रतमं ज्ञानं प्रकाशयन्तो दर्पणा अवगन्तव्याः । यथा रूपग्राहकमिन्द्रियं नयनद्वारा शुक्लादिभेदभिन्नं रूपं तद्वन्तं च पदार्थं विषयी करोति । श्रोत्रेन्द्रियं च कर्णद्वारा शब्दान् गृह्णाति । तद्वत्पारमेश्वरं ज्ञानसामर्थ्यं वेदा एव ज्ञापयन्ति । अतो वैदिकाः शब्दा अनाद्यनन्तेश्वरज्ञानस्य प्रकाशका उपाधयो भवन्ति । एतदुपाध्यवलम्बनं विना तत्तादात्म्यापन्नदेवताज्ञानस्य वृत्तिविशेषा नैव जागृताः स्युः । यद्वदचिरमेवास्मिन भारते वर्षे कृतपदं पाश्चात्यभाषाभिज्ञं तद्देशीयं नरं प्रति स्वाभिप्रायमावेदयितुं भारतवर्षीयः पाश्चात्यभाषाभिज्ञः पुमांस्तत्परिचितान्पाश्चात्यशब्दानवलम्ब्यैव तदविनाभूतांस्तन्मनस्यवस्थितान वृत्तिज्ञानविशेषानुद्बोधयति तद्वद्यज्ञादिकर्मसु तत्तद्देवतायै हविराद्यर्पणसमये येन शब्दसंकेतेन देवतावृत्तिरुद्बोधिता स्यात्स एव सांकेतिकः शब्दस्तत्रोच्चारणीयो नान्य इति यज्ञदानतपःप्रभृतिषु शास्त्रीयकर्मसु तासां तासां देवतानामुद्बोधनं कर्तुं वेदमन्त्रा एव यथाशास्त्रमुच्चारणीयाः । यतोऽमुकस्य मन्त्रस्यानया रीत्या समुच्चारणं कृतं चेदेवामुका देवता समुद्बोधिता भवतीष्टफलदात्री च जायत इति वेदादेवावगम्यते । अतस्तत्र मानुषबुद्धेरनवकाशः । वैदिकमन्त्रपदानां विशिष्टदेवतात्मकस्वीयार्थेन साकं तादात्म्याद्यथाविध्युच्चारितेन तेन तेन मन्त्रेण सा सा देवता समुद्बोधिता भवदेव । तत्र मन्त्रार्थज्ञानाभावेऽपि न काऽपि क्षतिः । परमुदात्तानुदात्तादिस्वरवर्णोच्चारणपद्धतावल्पोऽपि विपर्यासश्चेदर्थवैपरीत्येनानिष्टमवश्यंभावि । तदुक्तं——

मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह ।

स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥ इति ।

जपाद्यनुष्ठानसमय उदात्तानुदात्तादिस्वराणां वर्णानां च विपर्यासेनाश्रद्धया चोच्चरितो मन्त्रोऽभीष्टमर्थमनभिधाय विपरीतार्थाभिधानेन वज्रतुल्यो भूत्वाऽनुष्ठातारं हन्ति । यथा देवेन्द्रस्य हननार्थमनुष्ठानं कुर्वन्वृत्रासुरः, इन्द्रशत्रुरित्यस्य मन्त्रपदस्य विपरीतोच्चारणात्तत्पुरुषस्थाने बहुव्रीहिर्भूत्वा वेगादागत्य इन्द्रेणैव हतः । तस्माद्वेदमन्त्राणां सांकेतिकाः शब्दा यथाशास्त्रमुच्चारिताश्चेदेव तैः शब्दैर्देवताया जागृतिः स्यात् । तच्च वैदिकं कर्मेष्टफलदानसमर्थं भवेत् । एतेषां वेदमन्त्राणामर्थमज्ञात्वा केवलं पारायणं

कृतमपि तेन दुरितनिवृत्तिः पुण्यावाप्तिश्च संसिध्यति। वेदार्थं याथातथ्येनावगत्य वैदिकं कर्म कृतं चेत्तेन स्वर्गो नाम दुःखासंभिन्नं सुखं लभ्येत। अर्थमज्ञात्वा श्रद्धया यथाविध्यनुष्ठितेन तेन पितृलोकः प्राप्येत। अथाप्युभयत्रावश्यंभाविनी पुण्यसंपत्तिरस्त्येव। मन्त्रार्थमधिगत्य तपश्चरणपूर्विकया दृढोपासनयैतेषां वेदमन्त्राणां तत्तादात्म्यापन्नदेवताविशेषाणां च साक्षात्कारो येषां महात्मनां जायते ते मन्त्रद्रष्टार इत्युच्यन्ते। द्रष्टारो नामोपासनया साकल्येन देवतात्मकमन्त्राणां निरन्तरध्यानेन साक्षात्कारसंपादकाः। नतु ते मन्त्रान्कुर्वन्ति। ते पूर्वमेव सिद्धाः सन्ति। तेषामुपासनं केवलमृषिभिः क्रियते। यमनियमसंसेवनपूर्विकया तीव्रतरमन्त्रोपासनया मन्त्राभिन्नदेवतासाक्षात्कारं समाधौ संपादयन्त्यृषयः। देवतातादात्म्यं चानुभवन्ति। एवं मन्त्रानुपास्य तदभिन्नदेवतासाक्षात्कारो यैः संसाधितस्ते तत्तन्मन्त्रस्य द्रष्टारः। इत्थमेकस्यैव मन्त्रस्यानेके द्रष्टारो भवन्ति। द्रष्टनेकत्वेऽपि तदन्यतमः कोऽपि महात्मा विशेषतो देवतां प्रसाद्य सुप्रसन्नायास्तस्याः सकाशात्त्वमस्य मन्त्रस्य द्रष्टा, इति प्रथां प्राप्स्यसीति वरं संपादयति। ततः स तस्य मन्त्रस्य ऋषिरिति प्रसिद्धिर्जायते। अत एव ऋषयो न मन्त्राणां कर्तारोऽपि तु मन्त्रद्रष्टार एव ते। तदुक्तं—

ब्रह्मादिऋषिपर्यन्ताः स्मर्तारोऽस्य न कारकाः। इति।
युगान्तेऽन्तर्हितान्वेदान् सेतिहासान्महर्षयः॥
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा॥ इति च।

परमेश्वरोऽपि हिरण्यगर्भस्वरूपेण स्वस्मिन्नव्यक्ततयाऽवस्थितान्वेदान्यथापूर्वं प्रकटयति। 'धाता यथापूर्वमकल्पयत्' इति श्रुतेः। समष्टौ हिरण्यगर्भे सर्वा देवतास्तादात्म्येन सन्त्येव। तासामुद्बोधकान् स्वतःसिद्धान्वेदान् स प्रकटयति। तदुक्तं—'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इति। अत एवायं वेदाख्यः शब्दराशिः परमेश्वरस्य परा वागित्युच्यते। अयं तस्येश्वरस्य स्वयंसिद्धोऽनुभवोऽस्ति। एतत्सूचनार्थं वेदे 'तदेष श्लोको भवति' इत्यसकृदागच्छति। तथा 'एवमत्राऽऽचार्याः' इति यत्र निर्दिश्यते स गुरूणामनुभवः। ईश्वरस्य गुरोश्चानुभवेन साकं स्वस्यानुभवः संगतोऽस्तीति ज्ञापकानि तानि वचमानि। तदिदमेकात्मकं प्रत्ययत्रितयं चेदेव तज्ज्ञानस्य निरपवादं प्रामाण्यं सिध्यतीति शास्त्रप्रतीतिर्गुरुप्रतीतिरात्मप्रतीतिरिति प्रतीतित्रितयस्योल्लेखः शब्दब्रह्मोपासकानां श्रद्धावर्धनार्थं तत्र तत्र वरीवर्ति। इत्थं तीव्रतरोपासनया वशीकृतशब्दब्रह्मा नरो

विनाऽऽयासं परं ब्रह्माधिगन्तुं प्रभवेदिति निरवधिककरुणापारावारः श्रीपरमेश्वरो जगदुद्धारार्थं वेदात्मना प्रादुर्बभूवेति ' वेदो नारायणः साक्षात्स्वयंभूरिति शुश्रुमः ' इत्यार्षोक्तितोऽवगम्यत इत्यावेद्यालं कुर्म इति शम् ।

---

## ( अथ वेदमहत्त्वविमर्शः ) ।

देवपितृमनुष्याणां वेदश्चक्षुः सनातनम् ।
अशक्यं चाप्रमेयं च वेदशास्त्रमिति स्थितिः ॥ (मु० स्मृ० १२।९४) ।

अथास्मिन् वैरिश्चे प्रपञ्चे मानुषमात्रस्य याऽहर्निशं दैहिकी वाचिकी मानसी वा प्रवृत्तिर्दरीदृश्यते सा सर्वाऽपि सुखाप्तये दुःखपरिहाराय चेत्यत्र नास्ति कस्यापि विप्रतिपत्तिः । धार्मिको वा भवत्वधार्मिको वाऽऽस्तिको वाऽऽस्तां नास्तिको वा । सर्वोऽपि जनः पाञ्चभौतिकेभ्यो विषयेभ्य एव निरतिशयं सुखं भविष्यतीत्येवं भ्रान्तमतिः परिदृश्यते । परं तेन सुखसाधनत्वेनाभिमता विषयास्तु द्रव्यं विना दुष्प्राप्याः । ततो वित्तसंपिपादयिषया तस्य या प्रवृत्तिः सा स्वाभाविकीत्यर्थात्सिध्यति । विषयेभ्यो भवित्री सुखप्राप्तिर्दुःखनिवृत्तिश्च द्रव्यायत्तेति यथा प्रसिद्धं तथेदमपि प्रसिद्धं यत् समग्रैश्वर्यसंपन्नो महाराजो दीनदीनो वा कोऽपि मानुषः सर्वथा दुःखसंबन्धरहितः सुखी च नैवोपलभ्यत इति । कोऽत्र हेतुः स्यादिति विमृश्यमाणे द्रव्यसुखयोर्द्रव्यदुःखनिवृत्तेर्वा नाव्यभिचरी कार्यकारणभाव इत्येव सिध्यति । महाराजः पङ्क्तिरथः सार्वभौमोऽपि सन् संततेरभावाद्दुःखेनाऽऽक्रान्तः स्वीयं साम्राज्यमपि तुच्छममन्यत । " पुत्रहीनस्य मे राज्यं सर्वं दुःखाय कल्पते " इति ।

श्रीमद्विद्यारण्यपादैरपि पञ्चदशीग्रन्थे—

अलभ्यमानस्तनयः पितरौ क्लेशयेच्चिरम् ।
लब्धोऽपि गर्भपातेन प्रसवेन च बाधते ॥
जातस्य ग्रहरोगादिः कुमारस्य च मूर्खता ।
उपनीतेऽप्यविद्यत्वमनुद्वाहश्च पण्डिते ॥
यूनश्च परदारादि दारिद्र्यं च कुटुम्बिनः ।
पित्रोर्दुःखस्य नास्त्यन्तो धनी चेन्म्रियते तदा ॥

इत्येवं सांसारिकसुखस्य चित्रं जगत्प्रसिद्धमेवानूदितम् । महाराजो दशरथो लोकोत्तरगुणशालिना श्रीरामचन्द्रसदृक्षेण पुत्रेण पुत्रवानपि तद्वियोगेनान्तं जगाम ।

अन्येषामपि सांसारिकविषयाणां परिस्थितिः प्रायश एतादृश्येवास्ति । एकान्तेनानित्या विषयाः कथं चिराय सुखं दातुं दुःखं च परिहर्तुं शक्नुयुः । दुःखं त्वाध्यात्मिकमाधिभौतिकमाधिदैविकमिति त्रिविधं विद्यते । तत्त्रिविधमपि दुःखं मम कदाऽपि माऽस्तु सर्वदा सुखमेवास्त्वितीच्छति मानवः । तदर्थं प्रयतते च । परं न तस्य प्रयत्नस्य फलमनुभवतीति प्रसिद्धं लोके । प्रत्यक्षादिषु लौकिकप्रमाणेषु नितरां विश्वस्य नूनं सन्नेवायं लोको लोकव्यवहारश्चेति येषां मतिस्तेषामात्यन्तिको दुःखनाशोपायः सुदूरमप्राप्य एव । नन्वेवं चेज्जीवसार्थस्य सुखदुःखप्राप्तिपरिहारेच्छा कथं सफला स्यादिति प्रश्नोऽत्र समुद्भवति । तस्योत्तरं यस्यान्तःकरणे सा स्पृहा नियतं दृढा समुद्भवेत्तेन पुंसा वेदैकशरणेन भाव्यम् । तमन्तरा नान्यः कोऽप्युपायः समुपलभ्यते आत्यन्तिकदुःखनिवृत्तये । तदुक्तम्—

वेद एव मनुष्याणां निःश्रेयसकरः स्मृतः ।
वेदो नारायणः साक्षात्स्वयंभूरिति शुश्रुमः ॥ इति ।

भगवत्पूज्यपादश्रीमच्छङ्कराचार्यैरपि—वेदो नित्यमधीयतां तदुदितं कर्म स्वनुष्ठीयतां तेनेशस्य विधीयतामपचितिः, इत्युपदिष्टम् । भगवाञ्ज्ञानेश्वरोऽपि भगवद्गीताव्याख्यायां भावार्थदीपिकाख्यायां ज्ञानेश्वर्यां षोडशाध्याये चतुर्विंशश्लोके ' ओवी ' नामकपद्येषु श्रुतिमातुः परं श्रेष्ठत्वमित्थं वर्णयति । तानि च पद्यानि गोलार्थतः संस्कृतभाषायां परिणामितानि । यथा—

योऽशेषपुरुषार्थानां स्वामी भवितुमिच्छति ।
तेन मूर्ध्नि श्रुतीनां वै स्थितिः कार्याऽतिसादरम् ॥
नैव कार्या परित्यक्तिः श्रुत्यादीनां कदाचन ।
यतो हि श्रुतयः सर्वाः कुर्युः सदुपदेशतः ॥
निरस्याशेषमहितं जीवानां परिवर्धनम् ।
अतश्च जगति श्रेष्ठा माताऽन्या न श्रुतेः परा ॥
किंतु मातृसहस्रेभ्यः श्रुतिमाता गरीयसी ।
ब्रह्मणा सह जीवस्य सा ह्यैक्यं करोत्यतः ॥
श्रुतिस्मृतिपरित्यागो विधेयो नैव केनचित् ।
नार्हस्येवं पार्थ कर्तुं श्रुतिमातुरनादरम् ॥
किंत्वादरेण सततं तामेव भज भारत ।
इत्याह भगवान् साक्षान्महत्त्वं वेदशास्त्रयोः ॥ इति ।

अपौरुषेयेणात एव निर्दुष्टेन भगवत्कल्पेन वेदेन प्रवृत्तिनिवृत्तिलक्षणौ द्वौ धर्मौ समुपदिष्टौ । तत्र प्रवृत्तिलक्षणो धर्मो जगतः सुस्थितेरभ्युदयस्य च संसाधकः । निवृत्तिलक्षणस्तु मोक्षाख्यपरमपुरुषार्थस्य साक्षात् प्रदाता वर्तते । तदुक्तम्–प्रवृत्तिः पुनरावृत्तिर्निवृत्तिः परमा गतिः ॥ इति । म० स्मृ० । सर्वोऽपि वेदः प्रत्यक्षादिलौकिकप्रमाणैरगम्ये धर्मब्रह्मणी मुख्यतः प्रतिपादयति । तदन्यवस्तुकथनं तु तयोः साक्षात्परम्परया वा साधनमिति कृतं विद्यते । निखिलस्यापि वेदस्य निवृत्तावेव तात्पर्यम् । अथापि जीवसमूहस्य विषयेषु या स्वाभाविकी प्रवृत्तिस्तां परावर्तयितुं " अक्षय्यं ह वै चातुर्मास्ययाजिनः सुखं भवति । अपाम सोममृता अभूम " एवमादिभिर्वाक्यैः स्वर्गसुखं वर्णयति न तत्र वेदस्य परमं तात्पर्यम् । किंतु स्वभावोपनतविषयपराङ्मुख्येन(ण) मोक्षपथानुसारी भवत्वयं जीवव्रात इत्येव तस्य गूढोऽभिप्रायः । तदुक्तं शुकयोगीन्द्रैः श्रीमद्भागवते—

लोके व्यवायामिषमद्यसेवा नित्याऽस्ति जन्तोर्नहि तत्र चोदना ।
व्यवस्थितिस्तेषु विवाहयज्ञसुराग्रहैरासु निवृत्तिरिष्टा ॥ इति ।

भगवान् मनुरपि–न मांसभक्षणे दोषो न मद्ये न च मैथुने ।
प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला ॥

इति तमेवाभिप्रायं प्रकटयति । अत्रायं दृष्टान्तः—कस्यचिद्गृहस्थस्य जातोद्वाहः पुत्र आस । तस्य पत्नी लावण्यवती पतिशुश्रूषणे रता गृहकर्माणि दक्षा चाऽऽसीत् । पुत्रः शीलवानपि यौवनमदेन मत्तः सन्नीचजनसंसर्गतः पांसुलावसक्तो बभूव । सर्वदा बहिरेव तिष्ठति । केवलं वारद्वयमशितुं सद्मन्यागच्छति । पित्राऽनेकधा बोधितोऽपि पितरं वन्ध्यप्रयत्नमकरोत । ततः कालान्तरे तस्य पिता मुमूर्ष्ववस्थायां स्थितः पुत्रमाहूय वात्सल्येनैवमवादीत्—" वत्स, ममैकां चरमामिच्छां त्वं पूरयिष्यसि किम् ? " पुत्रेण नियतं पूरयिष्यामीत्युक्ते पिताऽब्रवीत्–" त्वं प्रत्यहमहर्निशं बहिर्गच्छसि । परमित ऊर्ध्वमष्टदिनाभ्यन्तरे दिनत्रयं बहिर्गच्छ अवशिष्टेष्वहःसु स्वसद्मन्येवावतिष्ठ "। तमेतं पितुरुपदेशं पुत्रः सानन्दमङ्गी चकार । अस्मिन्दृष्टान्ते पुत्रेण कदाऽपि बहिर्नैव गन्तव्यमित्येव पितुरिच्छा वर्तते । तां साधयितुं बहिर्गमने दिनत्रयमनुमोदितमित्यत्र । तदनुमोदनमपि निवृत्तितात्पर्यकमिति व्यक्तं ज्ञातुं शक्यते धीमता पुरुषेण । तद्वन्मनुष्यमात्रेण स्वाभाविकीं विषयप्रवणतां विहाय भगवद्धर्मप्रवणेन भाव्यमित्थमेव वेदस्य तात्पर्यम् । वेदो हि नित्यः तत एव स्वतः प्रमाणमिति " अत एव च नित्यत्वम् " १–३–२९ । अस्मिन्सूत्रे व्यासमहर्षिभिः, तद्भाष्ये च–

" यज्ञेन वाचः पदवीयमायन्तामन्वविन्दनृषिषु प्रविष्टाम् "

" युगान्तेऽन्तर्हितान्वेदान्सेतिहासान्महर्षयः ।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा " ॥

" वेदो नारायणः साक्षात्स्वयंभूरिति शुश्रुमः "

इति श्रुतिस्मृत्यनुसारेण भाष्यकारैरभिहितम् । तथा ' समाननामरूपत्वाच्च ' ' आवृत्तावप्यविरोधो दर्शनात् ' ' स्मृतेश्च ' एतत्सूत्रभाष्ये " यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै " ( श्वे० उ० ) " अनेन जीवेनाऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि " ( छा० ) " त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवन्ति तत्तदा भवन्ति "

तेषां ये यानि कर्माणि प्राक्सृष्ट्यां प्रतिपेदिरे ।
तान्यैवेते प्रपद्यन्ते सृज्यमानाः पुनः पुनः ॥
हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मानृतानृतान् ।
तद्भाविताः प्रपद्यन्ते तस्मात्तत्तस्य रोचते ॥

इत्यादिश्रुतिस्मृतिप्रमाणाभ्यां भगवत्पूज्यपादैः सोपपत्तिकं सप्रपञ्चं च वेदस्य नित्यत्वं स्वतः प्रामाण्यं तथा जगतोऽनादित्वं निर्विचिकित्सं वर्णितम् ।

सर्वेदमिदं विश्वं परब्रह्मणो विवर्तो मायायाश्च परिणामः । ततस्तस्य परिणामिनित्यत्वेऽपि ब्रह्मणो विवर्तत्वान्मरुमरीचितोयवदधिष्ठानयाथार्थ्याधीनं बाध्यत्वमस्तीति न कदाऽपि विस्मर्तव्यं मुमुक्षुणा जीवेन । बाधो नाम मिथ्यात्वनिश्चयः । नतु ध्वंसः । अत एवास्य जगत उपसंहारकाले मायाशबले ब्रह्मात्मन्यन्तर्हिता वेदाः कल्पारम्भे यथापूर्वमुदात्तानुदात्तादिस्वरवर्णपदवाक्यानुक्रमवन्तो हिरण्यगर्भबुद्धावाविर्भवन्ति । अयमर्थः " यो ब्रह्माणं विदधाति पूर्वं यो हि वेदांश्च प्रहिणोति तस्मै " " सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत । दिवं च पृथिवीं चान्तरिक्षमथो सुवः " इति वेदमन्त्राभ्यां सूचितः । तस्मात् " औत्पत्तिकः शब्दस्यार्थेन संबन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात् " अत एव च नित्यत्वम् । " शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम् " इति बादरायणजैमिनिभ्यां महर्षिभ्यामुपदिष्टत्वात् " प्रवाहाविच्छेदे सत्यस्मर्यमाणकर्तृकत्वादपौरुषेयत्वम् " इत्याद्यनुमानस्य च जागरूकत्वान्नारायणस्थानीयेनापौरुषेयेण वेदेन समुपदिष्टो धर्मो जात्वप्यपरिवर्तनीय इति प्रेक्षावान् कोऽपि पुमान् दराशयं विहाय नाङ्गी कुर्यादिति न । अपि त्वङ्गी कुर्यादेव ।

यद्ययं वैदिकः सनातनो धर्मः परिवर्तनीयोऽभविष्यत्तर्ह्यस्य जगतो धारणमेव नाभविष्यत् । सत्येवमुच्छास्त्रसंस्कारसंस्कृताः केचनाऽऽधुनिकास्ताननुसरन्तो ज्ञानलव-दुर्विदग्धाः शास्त्रविन्मन्याश्च " नूनं परिवर्तनार्होऽयं वैदिको धर्मः " इति साट्ट-हासमुक्त्वा तत्साधयितुं यतन्ते । परं तेषां सा रीतिस्ते च तर्काः सर्वोऽपि संरम्भः सामान्यजनताया नेत्रयोर्धूलिप्रक्षेप एव न कुशलोदर्कः स दुरभिनिवेशस्तेषाम् । अतस्तदनुसरणं न कदाऽपि विधेयमास्तिकैर्जनैरिति ज्ञापयामः । अत्रेदमाचार्याणां वचनं स्मृतिपथारूढम् । तद्यथा—

श्रुतिशतनिगमान्तशोधकानप्यहह धनादिदर्शनेन ।
कलयति चतुष्पदादभिन्नानघटितघटनापटीयसी माया ॥
पूर्वापरपरामर्शविकलास्तत्र केचन ।
वाक्याभासान् स्वस्वपक्षे योजयन्त्यप्यलज्जया ॥ इति ।

आस्तां नामेदम् । उपसंहार इह परत्र च कुशलेच्छुना पुरुषेण शाश्वतिको वैदिकधर्मः श्रद्धया यथासंभवमनुष्ठेयः । " तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्य-वस्थितौ " इति भगवदाज्ञा सर्वैरप्यस्माभिः शिरसा परिपालनीयेत्युक्त्वाऽलं क्रियत इति शम् ॥

---

## ( अथ वेदाज्ञापरिपालनविमर्शः) ।

बिभर्ति सर्वभूतानि वेदशास्त्रं सनातनम् ।
तस्मादेतत्परं मन्ये यज्जन्तोरस्य साधनम् ॥ ( म० १२ । ९९ ) ।

अथ भगवन्तः शुकयोगीन्द्रा धर्मराजनप्तुर्भारतेश्वरस्य परिक्षितेरुपर्यनुग्रहं कर्तुं यदा समागता आसंस्तदा तस्य राज्ञोऽत्यन्तं कारुण्यास्पदा स्थितिरभूत् । सप्तभिरेव दिनैः स्वस्य मृत्युर्भविता । एतस्मिन्नत्यल्पकाले न किमपि श्रेयः साध-यितुं शक्यमिति नैराश्यमूलकखेदेन संव्याप्त आसीत्स राजा । तद्दृष्ट्वा तस्मै धैर्यं दातुं ते शुकयोगीन्द्रा अब्रुवन् । राजन्कुत एवं खिन्नोऽसि । सप्त दिनानि नायं लघुः कालः । पूर्वं खट्वाङ्गनाम्ना राज्ञा, एकस्मिन्नेव मुहूर्ते जन्मनः साफल्यं संपादितम् । तस्मिन्नत्यल्पेऽपि समये तेन भगवान्वशीकृतः । त्वया तु सप्त दिना-न्यवधिः संपादितः । एवं चेत्त्वं कस्मात्खिन्नो भवसि । मानुषायुषो महत्त्वमेता-दृशं वर्तते । यदत्यल्पमायुरवशिष्टं चेदपि पूर्वोपार्जितपुण्यपुञ्जेन तदत्युत्कटं यथा स्यात्तथा मनस्युत्पन्नया प्राक्कृतदुरितगोचरघृणापुरःसरभगवत्कृपासंपादनेच्छयाऽऽयुः

साफल्यं भविष्यत्येव । अस्यां भगवत्कृपासंपिपादयिषायां मनस्येकवारमप्याविर्भूतायां सत्यां महद्भ्योऽपि पापपर्वतेभ्यः किमपि भयं नास्ति । यतो भगवत्प्रसादलभ्यः प्रज्वलितो ज्ञानाग्निः क्षणमात्रेण नैकजन्मार्जितानि दुरितानि निःशेषं भस्मसात्करोति । अयमग्निरायुषश्चरमक्षणे प्रज्वलितश्चेदपि निर्दिष्टं कार्यं निश्चयेन करोत्येव । भक्तवत्सलस्य भगवतः कृपैतावत्युदाराऽस्ति यदसंख्याः पापपर्वता नित्यं विनिर्मिता अपि तथा चिरकालमविद्यान्धःकारे स्थित्वा हृदयस्थपरमात्मनोऽत्यन्तमवमानः कृतश्चेदपि भगवांस्तन्नैव गणयति । नैकजन्मार्जितानपराधान्स्वस्योदरे निक्षेप्तुं सर्वदा तत्परो वर्तते । स्वस्माद्दूरं गतो जीवः कदा पुनः स्वस्मिन्मिलितो भवेदित्येवमातुरतया प्रतीक्षां करोति । जीवोपरि कृपां कर्तुं भगवतो वरदः पाणिः सर्वोर्ध्वस्तिष्ठति । मानुषेणास्मिञ्जन्मनि प्राक्कृतानि ज्ञाताज्ञातानि दुरितानि स्मृत्वाऽत्यन्तमनुतप्तान्तःकरणेन ‘ भगवन्करुणानिधे क्षमस्व ’ इत्यसकृत्संप्रार्थ्य विरागतो विषयेभ्यः पराङ्मुखाभिर्वृत्तिभिरुपेतं चित्तं भगवच्चरणारविन्दयोर्लीनं कृत्वा नेत्रयोः प्रेमाश्रूण्याविर्भाव्य भगवतो निःसीमकृपायां विश्वस्य ‘ भगवन्नहं तवैवास्मि त्वामन्तरेण मम नान्यः कोऽप्याश्रयोऽस्ति । अहं त्वां शरणं प्रपन्नः । मम संरक्षणं मारणं वा सर्वथेदानीं त्वदधीनम् ’ इत्यभिधायानन्यभावेन साष्टाङ्गं प्रणतिः कृता चेत्स भक्तवत्सलो भगवांस्तत्कृतानपराधान्विस्मृत्य पुत्रप्रेम्णा तमालिङ्गितुमुद्धर्तुं च भवसागरात्सदा सिद्ध एवास्ति । ‘ अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ’ इति सर्वेभ्यः पाप्मभ्योऽभयदात्री भगवतः प्रतिज्ञा विराजत एव । परमुक्तदिशा मानवान्तःकरणे भावनाया जागृतिर्भाव्या । दुरहंकारवशतोऽहमेव महानहमेव चतुर इत्यभिमन्य श्रुतिमातुः प्रेमपरिप्लुतमुपदेशं धिक्कुर्वतः स्वैराचारस्य मर्त्यस्य चिरसामावृतेशकृपाद्वारप्रदेशमनुलक्ष्य गन्तुमिच्छा नोत्पद्यतेऽयमेवान्तरायो वर्तते । अहंकारप्रभञ्जनोऽयं भगवद्भक्त्या न विषह्यते । यथाभिरुच्यहमीशस्याऽऽराधनं कुर्यां तदर्थं वेदानुसरणस्य किं प्रयोजनं वेदवाङ्न रोचते मह्यं तस्यां मम विश्वासो नैवास्ति, इत्यभिमानतः कोऽपि ब्रूयाद्यदि नूनं भगवतोऽत्यन्तमनभिप्रेतं तत् । यतो वेदः परमेश्वरस्य निःश्वसितम् । स तस्य प्राणः स तस्याऽऽत्मा वर्तते । वेदवाक्तस्य स्वयंभूर्वाणी । तामवमत्य भगवतः कृपा कथमिव संपादिता भवेत् ।

लोकव्यवहारेऽपि साधारणोऽपि मनुजो विशेषतः श्रेष्ठः स्वीयशब्दं प्रति समधिकं महत्त्वं ददाति । मुखान्निर्गतः शब्दो व्यर्थो मा भूदिति सर्वस्वमपि हातुं प्रवर्तते । स्वेन कृतां प्रतिज्ञां प्राणव्ययेनापि परिपालयति । तस्याः पुरतः शारीरं

सुखं नैव गणयति । राज्ञा हरिश्चन्द्रेण स्वीयः स्वाप्नोऽपि शब्दो वितथो मा भूदिति कियान् क्लेशः सोढः । वनवासोऽवमानो दारविक्रय आत्मविक्रयोऽनुचितं कर्मेत्यादि दुःखं तेन सोढम् । अन्ततो निरपराधायाः स्वपत्न्याः शिरश्छेदसदृक्षं नृशंसं कर्म कर्तुमप्युद्युक्तोऽभूत् । परं स्वशब्दः सत्यः कृतः । प्रतिज्ञा परिपालिता । शिविराजेन स्वहस्तेन स्वशरीरं छित्वा मांसमुद्धृत्य सत्त्वं संरक्षितम् । श्रियाळचांगुणाभ्यां दंपतिभ्यां प्रियतमस्यैकस्यैव पुत्रस्य शिरः स्वल्पमपि शोकमकृत्वा कण्डितम् । परं प्रतिज्ञाया भङ्गो न कृतः । तथा दध्यङ्ङाथर्वणो नाम ब्राह्मणो यद्दीमां मधुविद्यामन्यस्मायनुब्रूयां तर्हीन्द्रो मे शिरश्छिन्द्यादिति जानन्नपि देवभिषग्भ्यामश्विभ्यां प्रार्थितः संस्ताभ्यां तामवोचत ' इति । ' इदं वै मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच ' [ बृ० २ । ५ । १७ ] इत्यत्र स्पष्टम् । तत्र किमर्थमयं ब्राह्मणो जीवितसंदेहमारुह्य प्रावोचदित्यत आह—ऋतायन् । यत्पूर्वं प्रतिज्ञातं सत्यं तत्परिपालयितुमिच्छन्, इत्युक्तम् । जीवितादपि हि सत्यधर्मपरिपालना गुरुतरेत्येतस्य लिङ्गमेतदित्याद्युक्तं तद्भाष्ये । कः समीक्ष्यकारी पुमान्स्वशब्दस्यावमाननां सहेत । आत्मशब्दमवमान्य केवलं शारीरसुखार्थं जीवितं यापयन्कापुरुषः सतां कृपायाः पात्रं नैव जायते । जगद्गुयायी श्रेष्ठः पुरुषस्तु सुखाद्यपेक्षयाऽपि निजं शब्दं प्रति समाधिकं महत्त्वं ददातीति लोके दृश्यते । व्यावहारिकस्य पुरुषश्रेष्ठस्येयं कथा चेद्यस्य हि संस्थापनाय भगवानिहावतरति यस्य च महत्त्वं संरक्षितुं तद्विरोधकानसुरादीन्समूलकाषं कषति तस्य महाभागस्य वेदराशेस्तदुक्तधर्मस्य चावहेलनां कृत्वा मत्सरादिदोषदूषितायाः स्वीयक्षुद्रबुद्धेर्महत्त्वं प्रदर्शयन् ' स्वयं नष्टः परान्नाशयति ' इति न्यायेन किमप्यकार्यं कुर्वाणो मर्त्यः परमेश्वरस्य कथमिव प्रियो भवेत् । यत्र स्वयं भगवानेव ' तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ' इति वेदस्य निरपेक्षं श्रेष्ठत्वं प्रतिपादयति तत्र तद्विरोधकर्तॄणां समन्वयः कथमपि नैव संभविता । वेदविरोधो हि भगवत्कृपासंपादनमार्गान्मनुष्यं व्यावर्तयति । तस्मादभ्युदयाकाङ्क्षिणा पुरुषेण सर्वथा वेदाज्ञापरिपालनमवश्यं कार्यम् । यतस्तदेव भगवतः प्रियतमं विद्यत इत्यावेद्यालं कुर्म इति शम् ॥

---

## ( अथ वेदराशेरपौरुषेयत्वविमर्शः ) ।

अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा ।
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः ॥

र्तव्यैव । इत्थं क्रमेणानवस्थादोषः प्राप्नोति । अर्थात्प्रत्यक्षादिप्रामाण्यसाधकप्रमाणान्तरस्य प्रामाण्यं प्रमाणेनासिद्धमित्यतः प्रामाण्यशून्यप्रमाणोपजिविनी सर्वेषामेव प्रमाणानां परम्परा सर्वथाऽप्रमाणं सिध्येत् । अत एव वेदमीमांसकजैमिन्यादिमहर्षिभिः प्रमाणानां प्रामाण्यं स्वत एवेति सिद्धान्तितम् । अतो वेदादिकं वाङ्मयं प्रमाणमित्यङ्गीकृतं चेत्तस्य स्वतः प्रामाण्यं नास्तीति कथनमसमञ्जसमेव । अथ सर्वेषामेव प्रमाणानां परतः प्रामाण्यमित्युक्तं चेदपि शास्त्रं न स्वतः प्रमाणमित्युक्तिर्व्यर्थैव । यतः प्रत्यक्षादिकं सर्वमेव प्रमाणजातं यदि न स्वतः प्रमाणं तर्हि तदन्तर्गतं शास्त्रमपि तथैवेति तन्न स्वतःप्रमाणमिति पृथक्कथनस्य नैवाऽऽवश्यकता ।

अथ वेदादिशास्त्रं मूलतः प्रमाणमेव नेतीयं द्वितीया कोटिः स्वीकृता चेत्तद्वेदादिशास्त्रं न स्वतः प्रमाणमित्यापादनं भृशमनर्थकम् । यतो यस्य प्रामाण्यमेव न विद्यते तस्य स्वतःपरतःप्रामाण्ययोर्विचारो वन्ध्यापुत्रविचारवद्भृशं मौढ्यावेदक इत्यत्र नैव संशीतिः कस्यापि । शास्त्रं मिथो विरोध्यस्तीति कथनमपि नितरां व्यर्थमेव । यतः शास्त्रशब्देन मन्त्रब्राह्मणात्मको वेदराशिर्विवक्षितो यदि तर्हि तस्मिन्विरोधस्य प्रतीतिः पूर्वोत्तरमीमांसानभिज्ञमानुषं विना न कस्यापि भवेत् । पूर्वोत्तरमीमांसादृष्ट्या विमर्शे कृते सर्वत्र समन्वय एव वर्तते । विरोधस्य गन्धोऽपि तत्र नास्ति ।

अथ शास्त्रशब्देनेतरत्किमपि विवक्षितं स्याच्चेत्तत्र विरोधोऽप्रामाण्यं च काममास्तां नाम । न तेनास्माकं काऽपि क्षतिः ।

शास्त्रशब्दस्य प्रकृतार्थे किंचिद्दृष्टिर्दत्ता चेत् "शिष्यते हितमुपदिश्यते येन तच्छास्त्रम्' इति पदव्युत्पत्त्यनुसारेण तत्त्वतः श्रेयस्करोपदेशस्य यत्साधनं तच्छास्त्रमिति प्रसिध्यति । पृथक्पृथग्देशकालपरिस्थित्यनुसारतस्तात्कालिकं शाश्वतिकं च हितं किं तस्यासाधारणं कारणं च किमित्यस्य यथार्थं ज्ञानं किंचिज्ज्ञस्य जीवस्य भवितुमशक्यम् । अत एव सर्वज्ञस्य वचनसमूहः शास्त्रशब्देन चिराय व्यवहृतो विज्ञानां संसदि । सर्वज्ञस्य वचनसमूहात्मके शास्त्रे विरोधस्य कल्पना देवानांप्रियं मर्त्यमन्तराऽन्यः कः कुर्यात् । यो हि परिमितसर्वस्य नियन्ता सोऽपि स्वीयनियम्यानां मङ्गलाय हितोपदेशं विदधाति । तथा कोऽपि शास्ता स्वीयनियम्यानां नियमनार्थं निग्रहानुग्रहयोर्नियमान् ( कायदे ) करोति । इत्येवं लोकप्रसिद्धव्यवहारानुसारतो विचारे कृते यतः समस्तस्यैव चराचरस्य शासकः सर्वज्ञः सर्वेश्वरो

विराजते तस्मात्तन्नियम्यनियमनार्थमाविर्भूतो यो वचनराशिस्तदेव प्रकृतं शास्त्रम्। अत एव तस्मिञ्शास्त्रे विधिनिषेधयोर्विशेषतः प्राधान्यं विद्यते ।

स्वस्वजातिधर्मयोरनुसारमीश्वराराधनम् । पञ्चमहायज्ञानुष्ठानम् । सूर्यचन्द्राग्न्यादिदेवतार्चनम् । एवमादिविहितकर्मणि यथासामर्थ्यं श्रद्धया कृतेऽनुग्रहः । ऐच्छिकी हिंसा मद्याद्यपेयपानम् , अभक्ष्यभक्षणम् , असत्याचरणम् , अस्पृश्यस्पर्शः, इत्यादिनिषिद्धकर्माचरणे च निग्रहः कृतो भवति । इत्येवंरीत्या शासितुर्वचनसमूहात्मके शास्त्रे सुव्यवस्थायां सत्यां तत्र मिथोविरोधापादनमत्यन्तं तुच्छमेव ।

यदि सर्वेषामेव प्रमाणानां प्रामाण्यं निरपेक्षमस्ति तर्हि सर्वान्तर्गतस्य शास्त्रस्यापि प्रामाण्यं निरपेक्षं नाम स्वतः सिद्धमस्तीत्यर्थादेवाऽऽयातम् । तथाऽप्रामाण्यं यदि परतो नामान्यसापेक्षं तर्हि वेदादिवाङ्मयस्याप्यप्रामाण्यं तथेति तत्साधकसामग्र्या महान् भारस्तत्साधक एव चिरं तिष्ठतीति नैव विस्मर्तव्यं केनापि विद्वन्मन्येन कदाऽपि । तस्माद्वेदादिशास्त्रस्य प्रामाण्यमन्धपरम्पराप्राप्तमिति भृशं प्रलपनेन तत्कदाऽपि तथा नैव सिध्येत् । तदर्थं बलवत्प्रमाणमवश्यमपेक्षितम् । यावत्प्रत्यर्थिना तन्नोपन्यस्यते तावद्वेदादिशास्त्रस्य स्वतःप्रामाण्यं त्रिकालाबाध्यं वरीवर्तीति ज्ञेयं निश्चयेन । वेदेतरपौरुषेयग्रन्थादौ भ्रमप्रमादादिपुरुषदोषैर्दूषितत्वस्याऽऽशङ्का स्यात् । वेदे तदभावादनादिकालमारभ्याविच्छिन्नगुरुशिष्यपरम्परात्मकवेदसंप्रदायस्याद्यावधि वर्तमानत्वात्केनापि प्रमाणेन वेदकर्तुः कस्यापि निःसंदिग्धोपलब्धेरभावाद् वेदशास्त्रस्यानादित्वमपौरुषेयत्वं मध्याह्नार्कमरीचिजालवत्स्वतःप्रामाण्यं च नित्यमेव समुज्ज्जृम्भते । इत्थंभूतप्रामाण्यादिकं यद्यन्धपरम्पराप्राप्तमिति तुण्डस्य निरङ्कुशत्वादुच्यते तर्ह्याब्रह्मस्तम्बावधि सर्वमेव चराचरं जगदन्धपरम्पराप्राप्तमित्यपि कामं वक्तुं शक्येत । तथा सति सर्वमेवानादि वस्तुजातं बीजाङ्कुरन्यायेनानादिः कार्यकारणभावश्च त्वदुक्तादन्धपरम्परापाशान्मुक्तो भवितुमशक्यः स्यात्तच्च महदनिष्टं तवैव ।

तस्मात्प्रमाणशून्यत्वसादित्वादेरङ्गीकार इयमेव यथार्थाऽन्धपरम्परा ज्ञातव्या। बीजाङ्कुरन्यायेनाविच्छिन्नतयाऽद्यावधि प्रवृत्ताया वैदिकपरम्पराया अन्धपरम्परकल्पनं तु विकृतमतेरसाधारणं चिह्नं ज्ञेयम्। तस्मादुच्छास्त्रतर्कस्य विरोधः प्राप्तोऽपि तेनोच्छृङ्खलतर्केण निर्दिष्टप्रामाण्यादेः किंचिदपि न्यूनत्वं नाऽऽयाति । प्रत्युत शास्त्रविरुद्धस्य तस्य तर्काभासत्वात्तर्कान्तरबाधितत्वेनानवस्थितत्वाच्च ध्वस्तप्रायस्य सिंहसूकरन्यायेन सत्कार एवोचित इत्यधिगन्तव्यम् ।

अथ समुज्जृम्भते खल्वस्मिन्नवनिमण्डले वेदो नामातिप्राचीनतम ऋग्यजुःसामाथर्वभेदैश्चतुर्विधोऽपि वैदिकशब्दगोचरो मन्त्रब्राह्मणात्मको विश्ववन्द्यो महान्ग्रन्थराशिः। यस्योत्पत्तिसमयो बलवत्प्रमाणस्यासत्त्वान्नाद्यावधि केनापि निर्णेतुं पार्यते। तर्कस्तु न प्रमाणं तर्कान्तरग्रस्तश्चेति प्रसिद्धम्। रुचिवैचित्र्याल्लोकस्य। तस्मादिदमेवास्यानादित्वे गमकं मानम्। यदनिश्चितोत्पत्तिकालत्वे सति वर्तमानत्वम्। ईश्वरवत्। यथा ईश्वरोऽनिश्चितोत्पत्तिकालः शास्त्रलोकप्रसिद्धिभ्यां च वर्तमानस्तथाऽयं वेदोऽप्यनिर्णीतोत्पत्तिसमयः प्रत्यक्षतो वर्तमानश्च। अत ईश्वरकल्पः सः। तदुक्तं 'वेदो नारायणः साक्षात्स्वयंभूरिति शुश्रुमः' इति। ततो नारायणवद्वेदापौरुषेयो वेद इति भारतीयार्यशास्त्रसिद्धान्तः। अत एव च नायं वेदः सृष्ट्युत्पत्त्यनन्तरमुत्पन्नो वाङ्मयात्माऽपि सन्। अपि तु सृष्टिकर्तुर्ब्रह्मदेवस्यापि सृष्टिनिर्मितिप्रकारं शिक्षयिता स्वयंभूर्विराजते।

अस्य वेदराशेः प्राधान्यतः प्रतिपाद्योऽर्थोऽपि लोकप्रसिद्धप्रमाणागम्योऽलौकिक एव। अत एव 'धर्मब्रह्मणी वैदिकवेद्ये' इति प्रत्नानां महात्मनां वेदप्रमेयविशदकर्तृवचनं तत्र तत्र दरीदृश्यते। प्रामाण्यमप्यस्य भास्करवत्स्वतः सिद्धम्। वेदैकप्रमाणगम्यस्य परब्रह्मणोऽघटितघटनापटीयस्या मायाख्यायाः शक्तेश्चराचरप्रपञ्चात्मना विलासो यदोपक्रान्तस्तदारभ्यैव तत्कृतबन्धाज्जीवान् मोचयितुं परमात्मकृपया वेदाविर्भावः संजातः। कमलासनस्याऽऽननेभ्यो वेदो निर्गत इत्यस्य न तेन कृत इत्यर्थः। अपि तु सुप्तरुत्थितो वैदिकः पुमान् प्रागधीतं वेदं स्मृत्वा यथा पठति तथा ब्रह्माऽपि परमेशोपदिष्टं वेदं चिन्तकाग्र्यपुरःसरं स्मृत्वा यथापूर्वमुच्चारयतीत्यर्थोऽधिगन्तव्यः। 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' 'न कश्चिद्वेदकर्ता स्याद् वेदस्मर्ता चतुर्मुखः' 'ब्रह्मादिऋषिपर्यन्ताः स्मर्तारोऽस्य न कारकाः' इति श्रुतिस्मृतिभ्याम्। वैदिकानां महात्मनामियं वेदविषयिणी सात्त्विकश्रद्धोपबृंहिता भावना प्रमाणपूता तर्कशुद्धा च सत्यपि मात्सर्यादिदोषाक्रान्तबुद्धेरगम्यैव सा। अत एवान्यदेशीयानां विद्वन्मन्यानां पुंसां चित्ते सा कदाऽपि नोदेति। असकृदुक्ताऽपि तत्र नाऽऽरोहति। तद्वत्तेषां पदेषु स्वीयपदानि कथंचिन्निक्षिप्यैव गच्छतां भारतीयानामपि मानुषाणां बुद्धौ सा स्थानं नैव लभत इति वेदस्यापौरुषेयत्वमनभिमतं तेषां तपस्विनाम्। नैतावदेव। अपि तु—यस्य कस्य वैकस्यानेकेषां वा कृतिमन्तरा वेदस्यास्तित्वमप्याश्चर्यास्पदं मन्यते तैः सर्वैः। सूर्यः केनोत्पादितः। इयं पृथिवी केन निर्मिता। महासागरः कस्य कृतिः। सदा-

गतेर्वायुदेवस्य कः पिता । इत्येवं पृष्टास्ते कारणमन्तरा स्वयमेवोद्भूता इमे सूर्यादय इत्युत्तरं ददति । एते वाय्वादयो नैसर्गिकाश्चेत्तर्हि वेदस्यापि तद्वदेव नैसर्गिकत्वं स्वयंभूत्वं वाऽशक्यं कुतो मन्यत इति पर्यनुयोगे कृते तस्य तर्कशुद्धमुत्तरमदत्त्वा किमपि प्रलपन्ति ते । वेदः केनापि कृतः स्यादेव । अर्थात्पौरुषेयः स इति तेषां पाश्चात्यप्रभृतीनां दृढमाग्रहः । सम्यगसम्यग्वा स इत्यत्रेदानीं विमर्शं कुर्मः ।

अथानादिपरम्परया भारतवासिनामस्माकं धर्मः संस्कृतिश्चेत्येतदुभयं मुख्यतो वेदमूलकं तदुपजीविऋषिप्रणीतस्मृत्यादिमूलकं चेत्यविवादम् । 'वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्' इत्याप्तोक्तेः । अत एव वेदतदुपजीविप्रमाणातिरिक्तप्रमाणागम्यत्वे सति प्रमितिविषयो धर्म इति भाट्टचिन्तामणावुपदिष्टं धर्मलक्षणमपि संगच्छते । स च वेदोऽपौरुषेयः प्रकृष्टप्रकाशाभिन्नरविमण्डलवत्स्वतःप्रमाणं चेति समासतः पूर्वमुक्तमेव । अथापि पाश्चात्यास्तदनुगामिनश्चास्मदीयाः केचन विद्वन्मन्या वेदस्यापौरुषेयत्वे विप्रतिपन्नाः सन्तो वेदराशेर्मनुयाज्ञवल्क्यादिपरमर्षिप्रणीतधर्मशास्त्रस्य च प्रामाण्यं साधयितुं "येन केनेति" न्यायावलम्बनेनाऽऽत्मघातं विधातुं च प्रवृत्ता इव दृश्यन्ते ।

तेषामाक्षेपस्त्वित्थम्—"वेदादिकं वाङ्मयं स्वतः प्रमाणमिति जात्वपि वक्तुमशक्यमेव । यतस्तत्सर्वं मिथो विरोध्यस्ति । एकस्यैव ग्रन्थस्य पृथक् पृथग्व्याख्यानं कृतमुपलभ्यते । प्रतिग्रन्थमन्योन्यस्मिन्यथाऽविश्वासः स्यात्तथा प्रयत्नः कृतोऽस्ति । यदि वेदादिकं वाङ्मयं स्वतः प्रमाणमेवेत्यभिमानः स्यात्तर्हि तदीयप्रामाण्यस्य संसिद्धिरित्थं विधेया । मिथो विरुद्धयोर्दार्शनिकधर्मशास्त्रयोर्मध्य एकमेव शास्त्रं सर्वथा प्रमाणम् । तच्च नान्धपरम्पराप्राप्तं सांप्रदायिकं चेति । किंच तदेकं शास्त्रं तर्कविरुद्धस्यार्थस्याप्रतिपादकं सदेकोपपत्ति तर्कोपजीवकं वाऽवश्यमपेक्षितम् । तर्ह्येव युष्मदिष्टसिद्धिः स्यादित्यादिः" । अयं तेषामाक्षेपः सामान्यतो विमृष्टश्चेच्छात्त्रीयरीत्या वेदादेरध्ययनस्याभ्यासस्य च स्वप्नेऽप्यभावात्तदीयरहस्यार्थानधिगमैकमूलकोऽयमित्यत्र नैव संदेहोऽस्ति । यतो वेदादिशास्त्रं प्रमाणमेवेति कोटिरङ्गीकृता चेद्यथा तदितरप्रत्यक्षादेः प्रमाणस्य प्रामाण्यं स्वतोऽप्रामाण्यं च परतोऽस्ति तद्वच्छास्त्रमपि प्रमाणमिति तस्य प्रामाण्यं स्वतः सिद्धमेवेति निर्विवादम् । यदि प्रत्यक्षादेः प्रमाणस्य प्रामाण्यं निश्चेतुं प्रमाणान्तरस्यापेक्षा स्यात्तर्हि प्रत्यक्षादेः प्रामाण्यसाधकस्य प्रमाणान्तरस्य प्रामाण्यं साधयितुमन्यप्रमाणस्यापेक्षा गत्यन्तराभावात्क-

नाम । सर्वप्रसिद्धचक्षुरादिभ्यः प्रमाणेभ्योऽपि भिन्नभिन्नमनुष्याणां भिन्नविधं ज्ञानं भवतीति प्रसिद्धमेव । मन्दालोके पतितां रज्जुं कश्चन सर्पं जानाति । तदितरो जलधारां कोऽप्यन्यो मालां कश्चन भूच्छिद्रं रज्जुरित्यपि वेत्त्येको मानुषः । एवमपि तदानीं चक्षुरादिकं प्रमाणमप्राणमिति कोऽपि न मनुते । यतो दोषास्तत्र विपरीतं ज्ञानवैविध्यं विद्यते । तदभावे यथार्थं ज्ञानं भवतीति प्रसिद्धमेव तत्र । यस्य चक्षुः काचकामलादोषग्रस्तं तस्यैव धवलतरोऽपि शङ्खः पीतो भाति । इतरस्य तु पाण्डुर एव चकास्ति । ज्वरितो मधुरमपि गोक्षीरं तिक्तमनुभवति । तैमिरिकदोषदुष्टचक्षुः पुमान्द्वाविन्दू पश्यति नेतरः । तद्वदेव वेदशास्त्रवचनानामप्यनेकेषां यदनेकविधं ज्ञानं जायते तत्तत्तद्व्यक्तिगतदोषप्रयुक्तमित्यवधेयम् । न तत्र शास्त्रस्य कोऽपि दोषः । तत्स्वभावतः स्वतः प्रमाणं निःसंदिग्धमस्त्येव । रुचिवैचित्र्यादज्ञानादिदोषाच्च ज्ञाने वैपरीत्यं भवति । तदुक्तम्—

रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषाम् ।

पुरुषापराधमलिना धिषणा निरवद्यचक्षुरुदयाऽपि यथा ।

न फलाय भर्त्तृविषया भवति श्रुतिसंभवाऽपि तु तथाऽऽत्मनि धीः ॥ इति ।

अत एव निर्दोषव्यक्तेर्यथार्थमेकविधमेव ज्ञानं भवतीत्येतदपि सुप्रसिद्धमेवास्ति । लौकिकव्यवहारेष्वपि न्यायमन्दिरादिषु विप्रतिपन्नविषयस्य यथार्थनिर्णयसमये प्रत्यक्षापेक्षया लिखितेषु साक्षिषु च विशेषतो निर्भरो दीयते। लिखितपत्राणां (दस्तऐवज) प्रमाणपत्राणां (मृत्युपत्र-करारनामे वगैरे)साक्षिवाक्यादेश्च पृथक्पृथगर्थाः क्रियन्ते। प्राड्विवाकस्याग्रतः प्राक्प्रणीता महान्तो निर्णयाः ( फैसले ) प्रदर्श्यन्ते । तेषामर्थेऽपि मतभेदा भवन्ति तथाऽपि पर्यवसाने योग्य एव निर्णयः क्रियते । तत्सर्वमप्रमाणमित्युक्त्वा नोपेक्ष्यते विज्ञेन प्राड्विवाकेन । लिखितस्यार्थनिर्णयार्थं योग्ययुक्त्यादेरुपयोगो भवति नेति न । अथाप्युच्छृङ्खलतर्कादिकं प्रति कदाऽप्यवसरो नैव दीयते । इत्थं लौकिकव्यवहारेऽपि विवादितविषयस्य लेखादिभ्य एव निर्णयः क्रियते चेत्तर्हि ‘ य एव लौकिकास्त एव वैदिकाः ’ इति न्यायेनालौकिकव्यवहारेऽपि तथैव निर्णयो भाव्य इति स्वैरतर्कादिकं विना शास्त्रवचनं व्यर्थमिति कथनं साहसमेव ।

विजातीयक्षेत्रे सजातीयस्त्रसा( स्रा )दिक्षेत्रे च संतत्यनुत्पादस्य या शुभोदर्का समीचीनतरा प्रथाऽद्ययावत्सर्वत्र जगति प्रवृत्ताऽस्ति साऽपि तत्तच्छास्त्रीयाप्तवचनमूलिकैव । उच्छास्त्रतर्कादिना व्यक्तीकृतस्य शास्त्रेण निर्णीतस्य च वाक्यार्थस्य मध्ये महदन्तरं वर्तते ।

अत्युत्तमस्यापि हीरकादिरत्नस्य परीक्षा यद्यपि खरपरीक्षकतुल्येन प्रत्येकेन कर्तुमशक्या तथाऽपि विशिष्टस्तज्ज्ञः पुमांस्तस्य यथार्थं मूल्यं जानात्येव । सोऽत्यादरेण तद्रत्नं स्वशिरसि धारयति । तद्वद्वेदादिशास्त्रस्य महत्त्वमनधिकारिण्या जनताया अज्ञातमपि विशिष्टोऽधिकारी पुरुषोत्तमस्तद्रहस्यं सम्यग्जानाति । स तं प्रति सर्वथा वन्द्यमवगच्छतीत्येव नापि तु यथाशक्यं तदुपदेशानुसारं वर्तनं स्वयं विधायेतरैरपि तथा कारयति । इत्थंभूतं पुमांसं प्रत्येव विज्ञा महात्मानं कथयन्ति नोच्छास्त्रवर्तनशीलम् । पदपदार्थव्युत्पत्त्युपक्रमोपसंहारशास्त्रीयन्यायादेर्ज्ञानं योग्यविधया यस्य नास्ति तेन मानुषेण यथार्थः शास्त्रस्यार्थो न ज्ञायत इत्यलंकार एव तस्य । दुर्मताभिमानग्राहग्रासतः शास्त्रवाक्यस्य विपरीतार्थप्रतिभानं स्वाभाविकम् ।

लौकिकव्यवहारेऽपि कुतश्चित्कारणान्मनसो व्यग्रावस्थायामज्ञायमाना गणितादयो विषयाः शान्तसमये सुशान्तेन मनसा योग्यरीत्या यत्नो विहितश्चेत्सहजत एव ज्ञायन्ते । कामक्रोधादिदोषदूषितस्यात एव चञ्चलस्यासत्पक्षाभिनिविष्टस्य मनसः परमगभीरविषयकग्रन्थस्य यथार्थज्ञानाधिगमः सर्वथाऽत्यन्तं दुर्लभः ।

अत एव पूज्यपादश्रीशंकरभगवद्भिः परमगहनात्मतत्त्वस्य धर्मतत्त्वस्य चाधिगमाय साधनचतुष्टयादिसामग्र्या भृशमावश्यकतोपवर्णिता । केनापि प्रमाणेन सुसूक्ष्मस्य विषयस्य निश्चयः कर्तव्यः स्याच्चेत्तत्र चित्तस्यैकाग्रता तदुपयोगिनी सामग्री चापेक्षिता । परं तेन तस्य प्रमाणस्य वैयर्थ्यं नैव सिध्यति । यथेदानीं ' सूक्ष्मवीक्षणं दूरवीक्षणमित्यादिसाधनेन सूक्ष्मं वस्तु दूरस्थं वस्तु च प्रदर्श्यत इति तत्र चक्षुरिन्द्रियं व्यर्थम् । न तस्योपयोगस्ताद्दिनैव यन्त्रादिना सर्वमुपलभ्यत इति वक्तुमशक्यम् । विज्ञाश्च न तथा ब्रुवन्ति ।

तेन तेन प्रमाणेन जायमानज्ञानं प्रति मनस एकाग्रतायामपेक्षितायामपि विशुद्धप्रमाणोद्भूतं तज्ज्ञानं सत्यम् । न मनोविलासः । तद्वन्नैतिकधार्मिकनियमानामावश्यकतायां सत्यामपि सर्वथा दोषगन्धशून्येन परिपूतवेदप्रमाणेन जायमानं तदर्थज्ञानं यथार्थज्ञानमेव । तन्मनसो भावनेति केनापि वक्तुमशक्यम् ।

येषां जन्तूनां वेदशास्त्रस्य प्रामाण्यं साहसतोऽनभिमतं स्यात्तेषामपि प्राणिनां तर्कादिकमप्रतिष्ठितत्वादनिश्चायकमिति नितरां व्यर्थमेव । ततोऽस्मात्संकटान्निर्मुक्तिरशक्यप्रायैव ।

यद्धि वस्तु मूलत एव सत्यमस्ति तत्स्वतन्त्रप्रमाणेन तर्केण वा ज्ञायत एव । तस्य सिद्ध्यर्थं धार्मिकश्रद्धाया नैतिकधार्मिकशिक्षणस्य वा नैवाऽऽवश्यकतेत्यापादनं नितरामसंगतम् । यस्य हि वस्तुनो वास्तवाधिगमार्थं यावती साधन-

अथ युष्माकं वेदः 'स्वर्गकामो यजेत' इत्यादिना वाक्यनिचयेन स्वर्गाद्यलौकिकमेवार्थं प्रतिपादयति । अतस्तस्य प्रामाण्याप्रामाण्ययोर्विचारेऽवश्यं विधेय इत्यापादनमप्यसंगतमेव । नहि वेदतत्त्वविदां प्रत्नानां महात्मनामित्थं मतमस्ति । येन 'स्वर्गकामश्चैत्यवन्दनं कुर्यात्' 'वा तत्सदृक्षमन्यत्किमपि कुर्यात्' एवमादिकाल्पनिकवाक्येऽपि प्रामाण्यं प्रसज्येत । एतावन्मात्रेण प्रामाण्यस्य सिद्धिरत्यन्तं दुर्घटैव । तदर्थं तत्रोच्यमानदृष्टान्ततुल्या परिस्थितिरपेक्षिता । तथा हि—लोकप्रसिद्धप्रत्यक्षादिप्रमाणेनाज्ञायमाना व्रतत्योषध्यादयस्तासां गुणदोषाश्चाऽऽदौ वैद्यशास्त्रतो ज्ञायन्ते । पश्चात्तासां सेवनेन फलसंवादतस्तत्सत्यत्वं सुनिश्चितं भवति । तद्वदेव तेनैवासमर्थेन प्रत्यक्षादिप्रमाणेन कदाऽप्यज्ञायमानस्य साध्यसाधनादिकस्य ज्ञानं प्रथमतो वेदादिशास्त्राज्जायते । अनन्तरमुक्तरीत्या श्रद्धापुरःसरं साधनेऽनुष्ठिते तस्य याथार्थ्यमनुभूतं भवति । अत एव 'कारीर्या वृष्टिकामो यजेत । उद्भिदा यजेत पशुकामः । पुत्रकामः पुत्रकामेष्टिं कुर्यात् । प्रतिष्ठाकामो रात्रिसत्रं कुर्यात्' एवमादिना वचनजातेन दृष्टफलककर्माणि वेदेनोपदिष्टानि । तेभ्योऽदृष्टफलककर्मणामपि सत्यता फलसंवादश्च सुनिश्चितः स्यादिति ।

कर्त्रादिकारस्य क्रियायाः साधनस्य वा न्यूनतया त्रुट्या च फलप्राप्तेर्विलम्बस्तदभावो वा भवेदेव । एवंविधो विसंवादो यन्त्रादिसाधनं तस्य च संचालनं नाम यन्त्रनिर्मितिस्तस्य प्रवर्तनमित्यादिषु प्रत्यहमुपलभ्यत एव । तथा—हि यन्त्रादेर्निर्माता तस्यां कलायामभिज्ञश्चेदथवा तत्कलानिष्णातेनोपदिष्टपद्धत्या प्रयत्नं विदध्याच्चेत्सम्यग्यन्त्रनिर्मितिर्भवति । तेनोपदिष्टां पद्धतिं विहाय स्वीयतर्केण यत्नं कुर्याच्चेत्तत्र निष्फलः प्रयत्न एव लभ्यते । तेन नेष्टसिद्धिः । तत्र विज्ञस्य शब्द एव प्रमाणं न निराधारस्तर्कः । तद्वदेव प्रत्यक्षादिलौकिकप्रमाणागम्यालौकिकवस्तुनोऽधिगमार्थं प्रत्यक्षादिभिन्नं पृथक्शब्दप्रमाणं विशिष्टमगत्या स्वीकार्यम् । यथा चक्षुषा घ्राणेन रसनया वा शब्दस्य ज्ञानं न जायत इत्यतस्तदर्थं श्रोत्रेन्द्रियं पृथक्प्रमाणं सिद्धमस्ति । तद्वत्स्वर्गनरकपुनर्जन्मधर्माधर्मेश्वरादीनां प्रत्यक्षाद्यगम्यालौकिकतत्त्वानां ज्ञानार्थं प्रत्यक्षादिभिन्नस्य वेदाख्यशब्दप्रमाणस्य नितरामावश्यकता वर्तते । तदागमप्रमाणं कुकल्पनया प्रत्यक्षमूलकं पुरुषकृतमित्युक्तं चेद् घट्टकुटीप्रभातन्यायान्नैव मुक्तिर्भविष्यतीत्यतो वेदशास्त्रं सर्वज्ञस्य वाक्, अर्थादपौरुषेयं स्वतःप्रमाणं तदिति प्रसिध्यति । तेन भ्रमप्रमादादिपुरुषदोषदुष्टत्वशङ्कायाः सर्वथाऽभावात्तदुपदिष्टार्थस्य याथार्थ्यं सुनिश्चितं भवतीति सुधीभिरवगन्तव्यम् ।

'स्वर्गकामश्चैत्यं वन्देत' इत्यादिकल्पितवाक्येषु शिष्टाचारबहिर्भूतेषु प्रत्यक्षानुमितश्रुत्यादिमूलशून्येषु गुरुशिष्यपरम्परात्मकसंप्रदायस्याविच्छेदेनास्तित्वस्याभावाद्भ्रमप्रमादविप्रलिप्सादिपुरुषदोषदुष्टत्वाच्च सर्वथाऽप्रमाणान्येवावगन्तव्यानि तादृशवाक्यानि। अपौरुषेयवेदवाक्यानि तु न तादृशानीति द्वयोर्वाक्यत्वसाधारण्येऽप्यलौकिकार्थप्रतिपादनसाम्येऽपि च महद्वैषम्यं वर्तते। तच्च प्रागभिहितमेव।

एतावता निखिलजगन्निदानस्य सर्वथाऽविकारिणः स्वगतादिद्वैतरहितस्य मङ्गलमयनित्यवस्तुनः प्रामुख्येण प्रतिपादनं करोति वेदराशिरिति स्वतःप्रमाणमपौरुषेयश्च स इति सुनिश्चितं ज्ञेयम्।

नास्मिन्नर्थे शुष्कशङ्कातर्काक्षेपादेः कथंचिदप्यवसरोऽस्ति। वेदैकगुप्त्वात्तस्येति। वेदेनोक्तमत एवेदमेकं वस्तु नित्यमविकारि चेति कथनं वेदविदां महात्मनां नैवाभिमतम्। यतो वेदेन काम्यतत्तत्फलहेतुभूता नैकविधा उत्पन्नप्रध्वंसिन्यः क्रियास्तादृशं चान्यदपि पदार्थजातं प्रतिपादितम्। सत्येवं शाश्वतिकवस्तुन एव कथनं करोति स इति कथं वक्तुं शक्येत। अत एव वेदप्रतिपाद्यं वस्तुमात्रं नित्यमविकारि चेति सप्रमाणमित्यापादनमपि शक्यकोटौ नाऽऽयाति। तथाऽपीत्थमभिधातुं सुशकं यत्प्रत्यक्षादिलौकिकप्रमाणैरगम्यं त्रिकालाबाध्यं परमं तत्त्वं वेदः समुपदिशत्यतः स सर्वप्रमाणमूर्धन्यं प्रमाणमिति। परं तत्रापि मतिमान्द्याद्विना बाधितत्वादिशङ्कायां सत्यां तस्या योग्यविधया निरसनमावश्यकम्। तदैवाबाधितत्वनिश्चयो निष्प्रतिबन्धः सन्स्थिरपदो भविष्यति। वस्तुतो विचार्यमाणे सर्वथा निर्दोषे स्वयंप्रकाशेऽपौरुषेयेऽनाद्यन्ते वेदराशौ सर्वथा दोषस्यासंभव एवास्ति। अतो वेदवचनाज्जायमानं निर्मलं ज्ञानं केनापि निर्दुष्टमतिना मानवेनाप्रमाणमिति स्वप्नेऽप्यभिधातुं सुतरामशक्यम्।

एवमप्येक आक्षेपः कैश्चिद्वेदराशौ क्रियते। यद्वेदस्यैकं वचनं प्रत्येकं प्रति एकविधं ज्ञानं कर्तुमसमर्थम्। यद्येकस्माद्वेदवाक्यात्पृथक्पृथङ्मानवानामेकविधं ज्ञानमभविष्यत्तदा तस्मिन्वेदवचने सर्वेषां विश्वासः सुस्थिरोऽभविष्यत्। प्रामाण्यं चासेत्स्यत। किंतु प्रामाणिकतयाऽभिमता नैके व्याख्याकृतो वेदादिशास्त्रवचनानां स्वस्वेष्टं प्रभिन्नमर्थं ब्रुवन्ति। तत्र कस्यार्थः सम्यगित्यस्य विचारावसरे बौद्धिकतर्कादेरावश्यकता वर्तत एव। तदानीं तच्छास्त्रं प्रमाणमिति भाषनं व्यर्थमेवेति।

अयमाक्षेपो निःसारोऽत एवाविवेककृतः। तथा हि—वेदादिशास्त्रं क्षणं तिष्ठतु

सामग्र्यपेक्षिता । तावतीं सामग्रीमन्तरा तस्य वस्तुनः साकल्येन ज्ञानं न जायेतेति स्वाभाविकं सुप्रसिद्धं च । यथा शरीरान्तर्गतपदार्थानां सम्यग्ज्ञानाय यन्त्रादेः साधनस्याऽऽवश्यकता वर्तते ।

यथा वा षड्जादिसप्तस्वराणां निःसंदिग्धज्ञानार्थं गानकलायाः सुदृढः संस्कारोऽपेक्षितस्तद्वदात्मतत्त्वस्य धर्मतत्त्वस्य वा यथार्थाधिगमार्थमन्तःकरणेन्द्रियादीनां पाविञ्यमपेक्षितम् । तदर्थं शास्त्रोपदिष्टानां नैकविधसंस्कारकर्मणामत्यन्तमावश्यकताऽस्ति । शरीरेन्द्रियमनःसु चिराय निष्प्रतिबन्धं कृतवसतीनां कामक्रोधलोभमोहमदमत्सरप्रभृतीनामन्तर्दोषाणां तन्मूलकबहिर्दोषाणां च सर्वथा निरसनं स्याच्चेदेव परमपवित्रतत्त्वस्याधिगमः सुलभः । नो चेद्दुर्लभ एव । तदुक्तम्—

अतिदूरतरं निजस्वरूपं गुरुशास्त्रान्न विचारयेद्यदि ।
दोषाणामपगमे सुलभमित्यपि प्रदर्शितं तत्र ।
निकटे गुरुशास्त्रवेदनात्प्रकटं स्यात्स्वतनौ स्वयं हि तत् । इति ।

तदर्थं विहितकर्मणामुपासनस्य च भृशमावश्यकता वर्तते । तदुक्तम्—

वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम् ।
कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च ॥
गार्भैर्होमैर्जातकर्मचौडमौञ्जीनिबन्धनैः ।
बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते ॥ इति ।

चक्षुषः सूर्येण साकं संनिकर्षेऽपि तस्य वास्तवं स्वरूपं न ज्ञायते । धर्मतत्त्वविषयेऽप्ययं न्यायो ज्ञेयः ।

अथ वेदराशिरीश्वरस्य वाक् । अर्थात्तस्य कर्तेश्वरः । अत एव वेदः सर्वथा निर्दोषः । इदमपि न सम्यक् । यतो जगदपीश्वरेणैव कृतम् । अथापि तदनेकदोषैः संकुलमपूर्णं च विद्यत इत्येवमेक आक्षेपो वेदस्योपरि क्रियते । स नितरां तुच्छः । यत ईश्वरो जगतः कर्ता । अत एव सर्वज्ञः सर्वशक्तिरित्यप्यभिमतः । तेन च जगत्कल्याणार्थं वेदशास्त्रात्मिका स्वीयवाक् प्रकटीकृता । तर्हि तस्यां वाचि दोषकल्पनां विवेकी पुरुषः कथं कुर्यात् । भ्रमप्रमादविप्रलिप्सेत्यादिदोषदुष्टेन मानुषेण विरचिते वाङ्मय एव सदोषत्वमप्रामाण्यं चासत्यामपीच्छायामागच्छति । न कदाऽप्याप्तकामस्य सर्वशक्तेः सर्वज्ञस्य सावधानस्य सर्वेश्वरस्य वाण्याम् । तत्र दोषस्य कल्पना तु कुत्सितकल्पनैवावगन्तव्या ।

जगतः सदोषत्वमनेकविधित्वमपूतत्वं च नेश्वरप्रयुक्तम् । यो हि सर्वज्ञः सर्वशक्तिर्मङ्गलप्रदः परमेश्वरो लोकांतरान्मनुष्यान् पक्षिणः पशून् सूर्यादींश्च निर्मिमीते

स एव कुत्सितमनुष्यादीनज्ञानत उत्पादयतीति कथं वक्तुं शक्यम्। अर्थाद् भोक्तॄणां जीवानां शुभाशुभकर्मानुसारमीश्वरो भिन्नभिन्नान् पदार्थानुत्पादयतीत्येव वाच्यम्। यथा पर्जन्यो व्रीहियवगोधूमाद्युत्पत्तौ साधारणं कारणम्। तेषां वैषम्ये तु तत्तद्वीजगतान्येवासाधारणानि कारणानि विद्यन्ते। ईश्वरोऽपि तथैव ज्ञेयः। तदुक्तम्— 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्' इति। अत एव शुभं कर्म चेत्सुशीलायाः पतिपरायणायाः स्त्रियः प्राप्तिः। अशुभं चेद्दुःशीलायाः कज्जलपुञ्जवद्वर्णाया बिडालनेत्रायाः कपितुण्डाया बालेयवन्मधुरस्वरायाः कोपनायाः प्रमदाया यावज्जीवं संगतिः। तत्र जगन्मङ्गलाय सत्पथोपदेशकर्त्र्याः परमेश्वरवाण्या ( वेदादिवाङ्मयस्य ) न कोऽपि दोषः। अत एवोक्तं कविना—" शस्त्रं शत्रुजयाय नैजगुरुणा दत्तेऽथ तेनैव चेत्पुत्रो हन्ति निजं वपुः कथय रे तत्रापराधी तु कः " इति।

सर्वज्ञत्वादिदिव्यगुणविशिष्टः परमेश्वरः स्वनियम्यजगतो नियमनाय स्वीयां शासनपद्धतिं वेदशास्त्रद्वारेण प्रकटय्य निग्रहानुग्रहयोः सुव्यवस्थां कुरुते। यदि लौकिकः कोऽपि शास्ता स्वीयशासनपद्धतिप्रणयने प्रमादो मा भूदिति तत्र यथामतिसामर्थ्यं जागरूकस्तिष्ठति तर्हि सर्वज्ञः पूर्णकामः पक्षपातरहितो भगवान् स्वीयशासनेऽण्वपि दोषं कथं स्थापयेत्। अर्थाद्भगवतः शासनं सर्वथा निर्दोषं स्वतःप्रमाणमित्यधिगमनं प्रेक्षावन्मानवबुद्धेः सौशील्यमस्ति।

अथ वेदराशिरीश्वरकृत इत्यत्र न किमपि प्रमाणमुपलभ्यते। अतो मनुष्यकृतेनैव तेन वेदराशिना भाव्यमित्यप्येक आक्षेपः केषांचिद्वेदोपर्यागच्छति सोऽपि तुच्छ एव। यतो येषामन्यत्र प्रामाण्यं साक्षादनुभवसिद्धं विद्यते तेषां परमाप्तानां सर्वज्ञकल्पानां महर्षीणां वचनानि वेदस्येश्वरोक्तत्वे प्रमाणं विद्यते ज्योतिःशास्त्रं, आयुर्वेदः, गान्धर्ववेदः, मन्त्रशास्त्रमित्यादिशास्त्रेषु येषां पूज्यं बुद्धिवैभवं प्रत्यक्षमनुभूयते तेषां महर्षीणां वचनेभ्यो वेद ईश्वरवागिति निश्चितं भवति।

किंच यदि सादेः शास्त्रस्य स्वीयादिमतां नियम्यानां नियमनाय सादिः पद्धतिः प्रत्यक्षसिद्धाऽस्ति तर्ह्यनादेः शास्त्रस्य स्वीयानादिनियम्यानां नियमनार्थमनादिः शासनपद्धतिर्न स्यादिति कदाऽपि वक्तुं न शक्यते। यदा( था )वेदापेक्षया प्राचीना वाङ्मयी शासनपद्धतिः कुत्रापि नोपलभ्यते तथा वेदस्य कालः कर्ता च नैव निर्धारितो भवति। अथानाद्यविच्छिन्नपरम्परया तस्याध्ययनमध्यापनं च प्रवृत्तमस्ति तर्हि सा, ईश्वरीयव्यवस्थाऽस्तीति निःसंदिग्धाङ्गीकारेऽधिगमे च का क्षतिरस्ति।

कदाचिदत्रेत्थमाशङ्का क्रियेत । यद्वेद ईश्वरवागित्यस्मिन्विषये यस्तर्क उपपत्तिर्वा प्रदर्शिता सा यस्योत्पत्तेः समय उत्पादको वा न ज्ञायते तस्मिन्नपीतरवस्तुनि सम्यगायाति । तथा हि—यस्य कोऽपि परिचयो नास्तीत्येतादृशो मानुषः । अथवा यस्य जननीजनकौ न ज्ञायेते एतादृशः परित्यक्तः शिशुश्च समीपमागतश्चेत्स मानुषः शिशुर्वा नैवोत्पन्नोऽपि तु सृष्टेः प्रागारभ्य वर्तत एवेति वक्तुं ज्ञातुं च शक्येत वा । यस्य कस्याप्येकस्य ग्रन्थस्य कस्मिंश्चित्समाजे बहोः कालादारभ्य पठनपाठनपूजनादिकं प्रचलितमस्ति तस्य च कर्ताऽज्ञातः । अतस्तत्पुस्तकं सृष्टेः प्राक्कालीनमीशकृतमित्यनुमानं निर्दुष्टं स्याद्वा । यदि न स्यात्तर्हि वेदो मनुष्यकृत इति स्मृत्यभावेऽपि स ईश्वरोक्त इत्यप्यभिधातुं न पार्यते । अस्मिञ्जगति नैके पदार्था इत्थं विद्यन्ते यत्तेषां कर्ता मूलत एवाज्ञातः । अविच्छेदेन च लोकेषु तेषां प्रसिद्धिः । यथा संप्रति प्राचीनं रूपावलीसमासचक्रादिकमिति । एतावता ते पदार्था ईशकृता इति नैव सिध्यतीति ।

सर्वमेतद्वाग्जालमापातिरम्यं विमृष्टे सत्यन्तः सारशून्यं विद्यते । यद्यपि स मानुषः सर्वथाऽपरिचितः शिशुश्चाज्ञातपितृमातृकः परित्यक्तस्तथाऽपि स मानुषः स च शिशुः सृष्टेः प्रागीश्वरकृत इति कोऽपि न मनुते । मनुष्योत्पन्न इत्येव विदन्ति सर्वे । यस्य तु वस्तुनोऽसंख्यवत्सरादारभ्य परःसहस्रग्रन्थानामसंख्यमानुषाणां मध्येऽबाधितरीत्या व्यवहारः प्रवृत्तोऽस्ति निर्माणकर्तुरुत्पत्तिकालस्य च बलवत्प्रमाणेनापि ज्ञानं न जायते तद्वस्त्वनाद्यनन्तमीश्वरनिमित्तमित्यत्र विवेकिमानवमनसि संदेहस्य गन्धोऽपि स्थातुं न शक्नोति । यस्य संप्रदायपरम्परानियमानुसारं पठनपाठनं प्रवृत्तं वर्तते कर्ता कालश्चाज्ञातो नापि तन्मनुष्यकृतमेतादृशं वेदराशिभिन्नं किमपि पुस्तकं वचनं वाऽन्विष्यापि लब्धुमशक्यम् । सांप्रतिका इतिहासवेत्तारोऽपि वेदसदृक्षः प्रत्नतरः कोऽपि ग्रन्थः पुस्तकं वा नैवास्तीति ब्रुवन्ति ।

त्रिविधसत्याचरणोपदेष्टुस्तादृशब्रह्मचर्यव्रतादेकस्य । देवपितृकार्येष्वप्रमादोपदेशकर्तुः धर्मब्रह्मप्रवणस्याऽऽचार्यादिशुश्रूषावेदकस्य लौकिकालौकिकव्यवहारव्यञ्जकस्य विशिष्टस्वरोच्चारणोल्लसितस्य ग्रन्थदृष्ट्याऽर्थदृष्ट्या चात्यन्तमहतः । समस्तार्थसंदृब्धस्य मङ्गलाचारप्रख्यापकस्य सच्चिदानन्दाद्वितीयब्रह्मकल्पस्य शिक्षाव्याकरणच्छन्दोज्योतिषकल्पनिघण्टेतिषडङ्गमण्डितस्य पुराणाद्युपबृंहितस्य भगवतो वेदराशेः कण्ठस्थकरणपद्धतिर्नितरामद्भुता समादरणीया च विद्यते । यथाऽ-

पौरुषेयत्वभावना दृढा भवति । तथा यत्किंचिदपि पार्थक्यं विना सर्वत्रैकरूपा स्वरोच्चारणपद्धतिरन्यत्र कुत्रापि न दृश्यते । तत एव संप्रदायाविच्छेदे सत्यस्मर्यमाणकर्तृकत्वं वेदराशिं विहायान्यत्र कुत्रापि नास्ति । यस्य हि संप्रदायतः पठनपाठनं प्रचलितं विद्यते तस्य कर्तुरपि स्मरणं वर्तते । यस्य तु कर्तुरस्मरणे सति संप्रदायतः पठनपाठनप्रचारोऽस्त्येतादृशः कोऽपि ग्रन्थो वचनं वा वेदभिन्नं नास्ति । अतो यो ह्यविच्छिन्नसंप्रदायपरम्परातः प्राप्तः सन्यस्य कर्ता कालश्च प्रमाणेन न निर्धारित एतादृशः पदार्थोऽपौरुषेय इत्यकामेनाप्यङ्गीकार्यमेव ।

येषां विशेषतश्चर्चा पुराणादिषु तत्र तत्रोपलभ्यते तेषां सनत्कुमारादिमुनीनां भाग्यवशात्साक्षात्संमेलने जाते सृष्टेः प्राक्तेषां निर्माणं ब्रह्मदेवाज्जातमित्यप्यभिमन्येत । अथापि पितृभ्यां त्यक्तस्यापरिचितस्य बालकादेर्दशभ्यः पञ्चभ्यो वा वत्सरेभ्यः प्राक्तदीयास्तित्वस्य प्रमाणेनासिद्धत्वात्तदनादित्वं कस्य प्रेक्षावतोऽभिमतं भवेत् । तादृशबालकादेर्वयसोऽनुमानं भवितुं शक्यम् । किंतु वचनस्य कस्यचिद्वयसोऽनुमानं न सुलभम् । यतस्तद्वचनं द्वित्रदिनाभ्यन्तरं विरचितं स्यादथवा शतवत्सरेभ्यः प्राक्कालीनमपि भवेत । महाराष्ट्री बंगाली–हिंदी–द्राविडी–इत्यादिभाषाविषयिण्याः परिमितकालकल्पनायाः कथंचित्संभवेऽपि गीर्वाणवाणीविषयिण्यास्तादृशकल्पनाया असंभव एव । यतः सांप्रतिकः संस्कृतश्लोकः प्रत्नतमवाक्यसदृक्षोऽपि भवितुं शक्यः । इदानीं वेदसदृशा अपि मन्त्राः कर्तुं शक्याः । तथा कृता अपि क्वचिदुपलभ्यन्ते । यस्मात् " शब्द इति चेन्नातः प्रत्यक्षानुमानाभ्याम् " इत्युत्तरमीमांसोपदिष्टन्यायानुसारं वैदिकशब्देभ्य एव सृष्टेरुत्पत्तिः सिद्धाऽस्ति । तस्माद् वेदान्तर्गतव्यक्तीनामाधारमवलम्ब्य तस्य कालनिर्णयप्रयत्नो विफलः ।

यदि वेदापेक्षयाऽपि प्राचीनाया भाषायाः कुत्रापि सत्त्वं नास्ति तर्हि सर्वासामपि भाषाणां मूलाधारो वेद इत्यमत्वा तासां निर्मूलतायाः कल्पनमनुचितं तुच्छमेव ।

घटपटादीञ्जन्यान् पदार्थान् कुलालतन्तुवायादय उत्पादयन्तीति सर्वमेव जन्यवस्तुजातं ' मनुष्यकृतम् ' इति कदाऽपि वक्तुं न शक्यते । अङ्कुरादयः पदार्थाः सावयवा उत्पाद्या अथापि ते मनुष्यैर्नैव कृतास्तद्वद्वेदो वाक्यसमूहात्मकोऽपि सन्मनुष्यैर्न कृत इत्यत्र किमाश्चर्यम् । यथाऽङ्कुरादिकं वस्तु मनुष्यकृतमिति प्रमाणेन न सिध्यति तद्वद्वेदोऽपि मनुष्यकृत इति प्रमाणेन जात्वपि न सिध्यति ।

कस्याप्यर्थस्याभिधायकानां पदानां कौशल्येन रचनाकरणसमये रचयितुस्तदर्थस्य ज्ञानमत्यावश्यकं चेदनन्तब्रह्माण्डकर्तुर्भगवतोऽपि तेषां ज्ञानमपेक्षितमेव । सत्येवं परमेश्वरोऽनन्तब्रह्माण्डोत्पत्त्यनुकूलज्ञानवानिति केनाप्यङ्गीकार्यम् । तेन साकमिदमवश्यं स्वीकार्यं यस्मिञ्शब्दस्यानुवृत्तिर्नास्तीत्थं किमपि ज्ञानं नास्तीति प्रत्येकस्मिञ्ज्ञाने सूक्ष्मरूपेण शब्दस्यानुवृत्तिरस्त्येव । तदुक्तं वाक्यपदीये ब्रह्मकाण्डे हरिणा—

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥ इति ।

अर्थादीश्वरज्ञानेऽपि सूक्ष्मात्मना शब्दस्यानुवृत्तिर्भाव्या । वेदापेक्षया च प्राचीनः शब्दसमूहः कुत्रापि नोपलभ्यते । वेदस्य कालः कर्ता च प्रमाणेनानिर्धारित इति प्रपञ्चितमेव प्राक् । अतो वेद एव ईश्वरीयज्ञानेऽनुवृत्त इति निश्चये कृते कः प्रत्यवायः । इत्येवं रीत्या, ईश्वरोक्तो वेदराशिस्तदीयज्ञानवच्चानादिरिति सुष्ठु सिध्यति ।

अस्मिञ्जगति विद्यमानाः सर्वे शब्दा वाक्यानि च नैकरूपाणि । येन हेतुना कांश्चिच्छब्दान् वाक्यानि च कानिचित्पौरुषेयाणि दृष्ट्वा तदितरशब्दा वाक्यान्यपि च पौरुषेयाणीत्यनुमानं निर्दुष्टं सिध्येत् । लोकव्यवहारे ‘ गावी गोणी ’ इत्यादयोऽपभ्रष्टाः शब्दा अन्ये च केचन कस्मिंश्चिदर्थे संकेतिता नूतनाः शब्दाः संवृत्ताः सन्ति भवन्ति च । अनादयोऽपि केचन सन्त्येव । तद्वद्भाषा अपि काश्चन पञ्चशतं सहस्रं द्विसहस्रं वा वत्सरमारभ्य प्रवृत्ता दृश्यन्त इतिहासादिभ्यः । अनादिन्यश्च सन्त्येव काश्चन । यस्याः सहस्रशः संवत्सरात् प्रागस्तित्वं प्रमाणेन नैव सिध्यति सा भाषा नानादिः, परं यस्या अभावो नैव प्रमाणसिद्धस्तस्या भाषाया अनादित्वे नैवास्ति संदेहस्यात्रसरः ।

कोऽप्येको मनुष्यः किमप्येकं यन्त्रादिकं वस्तु निर्माय तस्मिन्नाम्नः संकेतं कुरुत एवंविधस्य संकेतस्य सादित्वं विद्यत इति सुप्रसिद्धम् । किंतु येषां शब्दानामविच्छिन्नव्यवहारपरम्परयाऽनादित्वं प्रमाणेन निश्चितं तेषां शब्दानां तद्वाच्यार्थेन सह यः संबन्धो विद्यते सोऽप्यनादिः । अत एव मीमांसकैः शब्दार्थयोः संबन्ध औत्पत्तिको नाम नित्य इत्युक्तम्—“ औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धस्तस्य ज्ञानमुपदेशः ” इत्यादिना सूत्रेण । कविकुलचूडामणिना कालिदासेनापि— “ वागर्थाविव संपृक्तौ ” इत्यस्मिन्मङ्गलपद्ये तदेव व्यक्तीकृतम् ।

यदि जागतिको व्यवहारोऽनादिरस्ति तर्हि तद्धेतुः शब्दार्थयोः संब-

म्भोऽप्यनादिरित्यगत्या स्वीकार्यमेव । यथा प्रत्येकस्यां सृष्टौ कार्यकारणभावो ज्ञानज्ञेयभावः प्रमातृप्रमेयभावोऽनादिर्वर्तते तथा वाच्यवाचकभावोऽप्यनादिर्विद्यते । यदि प्राणिनां प्रत्येकस्मिन्व्यवहारे स्थूलसूक्ष्मान्यतरस्वरूपेण विचारस्य संकल्पस्य वा भवनमनिवार्यं तर्हि तस्मिन्संकल्पादौ केनापि रूपेण शब्दस्यानुवृत्तेरस्तित्वमत्यावश्यकमेव । अत एव निखिलप्राणिषु शब्दास्तेषां सांकेतिका अर्थाश्च सन्त्येवेतीदं शब्दार्थरहस्यं भगवतः पतञ्जलिमहर्षेः " सर्वभूतरुतज्ञानम् ", इत्यस्मात्सूत्रात्सम्यक्सिद्धं भवति । तस्माच्छब्दोऽर्थस्तयोर्ज्ञानं चेति त्रयाणामत्यन्तं संमेलनमस्तीत्यर्थादायाति ।

उत्पत्तिप्रलययोः परम्परा जागृतिसुषुप्त्योः परम्परावदनादिरस्ति । अत एव सुप्तप्रतिबुद्धन्यायेन पूर्वसृष्टिस्थशब्दार्थसंकेतस्य स्मरणमुत्तरसृष्टौ जायते । केचन शब्दार्थसंकेता भाषाश्चानादिमन्तः सन्तीति प्राङ्निर्णीतमेव । तस्मात्सृष्टेरादिमारम्भसमये शब्दैर्व्यवहारो नाऽऽसीदेव । केवलं हस्ताद्यवयवसंकेतैनैव व्यवहारो भवति स्मेति येषां भ्रान्तं मतं विद्यते ते जन्तवः " चेतनपूर्विका अचेतनसृष्टिः " इत्येतत्परमगभीरं सृष्टिरहस्यं कदाऽपि न जानन्तीति वदनस्य प्रसङ्गः संप्राप्नोति ।

ये त्वचेतनानां परमाणूनां वा तथाविधानां विद्युत्कणानां संघर्षणत एव सर्वा सृष्टिर्जायत ईश्वरं धर्माधर्मादिकं च किमपि नैवाङ्गी कुर्वन्ति तेषां मते सृष्टिवैचित्र्यस्यानुभवसिद्धस्य किं कारणम् । सांप्रतमपि किमप्येकं विशिष्टं कार्यं कर्तव्यमापतितं चेत्तस्य साधकसामग्र्याः समन्वेषणं संग्रहं च कुतः कुर्वन्ति । [ रेल तार रेडिओ विमानं ] इत्यादिकं दृष्ट्वा विशिष्टबुद्धिमत्पुरुषकर्तृकमिदमिति सर्वे जनाः किमर्थं कल्पयन्ति । परमाणूनां विद्युत्कणानां वा संघर्षणमात्रेणाकस्माद्यन्त्रादीनामुत्पत्तिः कस्मान्न मन्यन्ते । कुतो वा तथा न जायते । यथा मनुष्येषु यथाधिकारं संस्कृतादिवाणीनां विकासो दृश्यते तथा पश्वादिषु कुतो नोपलभ्यते । पर्णपुष्पकिसलयवीरुत्तृणगुल्मादीनां पृथक्पृथक्सौन्दर्यं वर्णाश्च हंसशुकमयूरादीनां पतत्रिणां मनोज्ञं वर्णवैचित्र्यं कलरवाश्च कथमकस्मादेव विकसिता भवेयुः । पुनरपि तादृशं विचित्रं कार्यं सहजतः कुतो न भवति । तदर्थं मनुष्याः प्रयत्नं किमर्थं विदधति । एवमादीनां प्रश्नानां समञ्जसमुत्तरं सर्वथाऽशक्यमेव । " चेतनपूर्विका सृष्टिः " इत्यस्मिन्वैदिकसिद्धान्ते तु सर्वज्ञे सर्वशक्तिमतीश्वरे वेदविज्ञानमासीत् । तत्तेन ब्रह्मदेवायोपदिष्टम् । ततो वसिष्ठविश्वामित्रादिमहर्षिपरम्परया व्यवहारः प्रवृत्तः । नैयायिका अपि पुनः सृष्ट्युत्पत्तिसमय ईश्वरेणैव शब्दार्थयोः संकेतः प्रागवत्प्रवर्तित इति मन्वते । मीमां-

सकास्तु तदपि मतं निरस्तं कुर्वन्ति । तथा हि—सृष्टेरारम्भसमये निखिलव्यवहार-प्रवृत्त्यर्थमनन्तानां शब्दानां तेषां तेषामर्थैः सह वाच्यवाचकादिः संबन्धः केन प्रकारेण क्रियते । संकेतकरणायापि हि कस्यचिच्छब्दस्यापेक्षा वर्तत एव । 'अस्माच्छब्दादयमर्थो बोद्धव्यः ' इत्यादिना शब्देनैव शब्दार्थयोः संगतिग्रहो जायते । व्यवहार उपदेशे चोभयत्रापि शब्दस्यावश्यकताऽस्त्येव । अनन्तशब्दार्थयोः संकेतः केवलमवयवादिचेष्टया भवितुमशक्यः । तथाऽनेन संकेतेनायमर्थो ज्ञेय इत्यस्य ज्ञानं विना संकेतितार्थबोधोऽप्यशक्यः । किंच निरवयवः परमेश्वरोऽवयवचेष्टात्मकानि तत्तदर्थज्ञापकानि चिह्नान्यपि कथं कर्तुं शक्नोति । तस्मादीश्वरो येन शब्देन शब्दार्थयोः संकेतं कुरुते स संकेतः सर्वेषां लोकानां प्रागेव ज्ञातोऽङ्गीकार्यः । इत्येवं रीत्या शब्दादेस्तदर्थस्य च संबन्ध औत्पत्तिको नाम स्वाभाविक इत्यवश्यं स्वीकार्यम् ।

इत्थं केचन शब्दा भाषाश्च नूतना( कृत्रिमा ) अपि काश्चन वाण्यः शब्दाश्चाकृत्रिमा अनादय इति संप्राप्तमेव । यस्य हि शब्दादेरुत्पत्तिसमय उत्पत्तिकर्ता संकेतकर्ता च प्रमाणतोऽनिश्चितस्तस्य शब्दसमूहस्य भाषायाश्चानादित्वस्वीकारः समुचित एव । अनया दृष्ट्या विचारे कृते संस्कृतशब्दा भाषा चानादिरस्तीति निःसंदिग्धं सिध्यति । अत एव प्रत्येकभाषायाः शब्दस्य च सादित्वं यदि न प्रामाणिकं तर्हि वेदस्याऽऽदिमत्त्वं कथं प्रामाणिकं स्यात् । अत एव चेत्थमपि वक्तुं न पार्यते यन्नैकविधाः शब्दा भाषाश्चोत्पद्य विनष्टाः सन्ति तर्हि तन्मध्ये काऽप्येका भाषाऽनादिकालमारभ्याबाधितभावेन प्रचलिता वर्तत इति भाषणं कथमुपपन्नं भवेदिति । यतो घटपटादयः पदार्था ध्वस्ता अपि पृथ्वीप्रभृतीनि भूतानि यथापूर्वं सन्त्येव तद्वत्कृतका विनष्टा भाषा अप्यकृतका भाषा वेदराशिश्चाद्ययावत्प्राग्वदेवास्ति । अग्रेऽप्यनन्तकालपर्यन्तं तथैव तिष्ठेदित्यत्र न कोऽपि संदेहः । यतो " धर्मसंस्थापनार्थाय संभवामि युगे युगे " इत्येवं भगवता वेदवक्त्रा प्रतिज्ञैव कृताऽस्ति । सांप्रतिका ऐतिहासिकरहस्यवेत्तारोऽपि वैदिकी संस्कृतिर्गीर्वाणवाणी च भृशं प्रत्नतरा सती तस्याः पुरतो नैकविधाः संस्कृतयो भाषाश्चोत्पन्ना विध्वस्ता अपीयं वैदिकी संस्कृतिर्गीर्वाणगीश्च प्राग्वत्तथैव विराजत इति सादरं ब्रुवन्ति । यथेतरे लौकिकन्याया नियमाश्चोच्छिन्ना अपि ऐश्वरा न्याया नियमाश्चाभेद्याः सन्त्येव तद्वदीश्वरीयं धर्माधर्मनिर्णायकं वेदशास्त्रं निराबाधमस्त्येवेति बोध्यम् ।

यद्यनाद्यनन्तः सर्वज्ञः सर्वशक्तिरीश्वरो विद्यमानोऽस्ति तर्हि तस्मादाविर्भूतस्य वेद-राशेः सर्वथा लोपः कथं स्यात् । नहि साक्षात्तदुत्पन्नस्याऽऽकाशादिपृथिव्यन्ता-देस्तथा लोपः कदाऽपि कुत्राप्युपलभ्यते । तेषां प्रचारादौ परं न्यूनाधिक-भावः स्यात्तथा वेदस्यापि प्रवृत्त्यादौ न्यूनाधिकभावो वैषम्यं वाऽपरि-हार्यम् । अत एव वेदो यदीश्वरीयग्रन्थोऽभिमतो युष्माकं तर्हि तस्य सर्वत्र साम्येन प्रचारोऽवश्यमपेक्षितः । सर्वेषां च तौल्येन मान्योऽपेक्षितः । किंतु नैव तथाऽस्ति । केवलं भारते वर्षे तत्रापि विशिष्टजातीयमनुष्येष्वेव तस्य विशेषतः प्रचारः कथंचिन्मान्यश्च दृश्यते । सत्येवं स ईश्वरीयग्रन्थ इति कथं वक्तुं शक्यम् । एवमादयः कुशङ्कास्तुच्छतरा एव । यथा सत्यम् । अहिंसा । ब्रह्म-चर्यम् । भूतदया । संयमः । गुरुजनादौ विनय इत्यादयो धर्माः सर्वेषां मान्या अपि तथावर्तमानानां संख्या अत्यल्पा एव । तद्वदेव वेदस्य प्रचारादौ द्रष्टव्यम् । युगमाहा-त्म्याल्लोकेष्वीश्वरभावना इव धर्मभावना इव च वेदभावना अपि न्यूनतराः संवृत्ताः । केवलं वेदराशिमुद्दिश्य स्वैरं जल्पः परं प्राचुर्येणोपलभ्यते । नैव तदनुसारिणी कृतिः । सा तु तद्विपरीतैव । तयैव चाऽऽत्मोद्धारः स्यादिति तर्क इदानीं प्रायशः सर्वत्र । प्रारब्धकर्मविलसितमिदं भारतीयानामस्माकं किमन्यत् ।

आस्तां नामेदं करुणार्णवपरमेश्वरकृतहितोपदेशशास्त्रस्य तदीयसृष्टाववश्यमस्तित्वं वाऽवश्यमपेक्षितं च तत् । तच्छास्त्रं किमित्याशङ्कायां सत्यां यत्सर्वापेक्षया प्रत्नतमं यस्य च कर्ता कालश्च प्रमाणेन नैव सुनिश्चितस्तदेवेश्वरीयं शास्त्रमिति निश्चितमु-त्तरं युक्त्युपपन्नमवधेयम् । इतरेषां सर्वेषामेव पुस्तकानामुत्पत्तेः प्रचारस्य कर्तुश्च कालः प्रसिद्धोऽस्ति, न तथा वेदराशेः ।

यस्योत्पत्तेः प्रचारस्य वा त्रीणि चत्वारि पञ्च षड्वा सहस्रवत्सराण्यतीतान्ये-तादृशं वाङ्मयमीश्वरीयं शास्त्रं मतं चेत्क्षुद्रमनुष्यवदीश्वरे वैषम्यनैर्घृण्यदोषयोः प्रसक्तिरापतिष्यति । यतश्चतुष्पञ्चसहस्रसंवत्सरेभ्यः प्रागुत्पन्नानां मानवानां कल्या-णार्थं तेन दयालुनेश्वरेण स्वीयं शास्त्रं नैव दत्तं, तदन्तर्जातिभ्य एव कृपया प्रदत्तम् । इत्थं वैषम्यं नैर्घृण्यं भृशमनिवार्यमेव ।

अनादिवेदशास्त्रं त्वनादिकालमारभ्यैवास्मिञ्जगत्यविच्छिन्नतया प्रवृत्तमस्तीत्यत ईश्वरे तौ दोषौ न प्राप्नुतः । तस्य च शास्त्रस्य मनःपूर्वकं श्रद्धया ग्रहणमु-पेक्षणं वा मानवानां कर्मानुसारिबुद्ध्यवलम्बीति नेश्वरस्य तत्र कोऽपि दोषः । तेन त्वैहिकपारलौकिकमार्गप्रदर्शकं सर्वथा मङ्गलप्रदं वेदशास्त्रं प्रदत्तमेव । तेन कश्चन स्वीयेष्टं साधयति कश्चन नेत्यत्र जीवानामेव दोषः । भगवतस्तत्र न कोऽपि संबन्धः ।

कुशत्यागकृतेऽर्पितेन करणव्यूहेन देहेन च
स्वानर्थं बत जन्तुरार्जयति चेन्मन्तुर्नियन्तुः कुतः।
शस्त्रे शत्रुजयाय नैजगुरुणा दत्तेऽथ तेनैव चेत्
पुत्रो हन्ति निजं वपुः कथय रे तत्रापराधी तु कः॥

अथ लौकिकवैदिकशब्दयोर्मध्ये न कोऽपि भेदः। उभावपि समानावेवेति सिद्ध्यर्थं कैश्चित्क्षुद्रो यत्नः क्रियते सोऽपि व्यर्थः। यतो येन लौकिकवैदिकशब्दानां संसिद्धिर्जायते तद्व्याकरणशास्त्रमेव नैके वैदिकशब्दा लौकिकशब्देभ्यः पृथक् सन्तीति कथयति।

यदि ऋषिप्रणीतमनादि व्याकरणशास्त्रं न मन्यत इति साहसेनोच्यते तदा शब्दानां शुद्ध्यशुद्धिविषये प्रमाणस्यासत्त्वात् काऽपि सुव्यवस्था न स्यात्। 'भिन्नरुचिर्हि लोकः' इति नियमानुसारं विचित्ररुचेर्विचित्रमानवसमाजस्य स्वैरेच्छैकावलम्बनायाः संस्कृतसुरस्वत्या अपीतरभाषावदत्यन्तमव्यवस्थितं स्वरूपमस्थास्यत्। यदि तर्ह्यत्यन्तपुरातनग्रन्थानां सम्यगर्थाधिगमः संप्रति कठिन एवाभविष्यत्। अतः शब्दानां शुद्ध्यशुद्ध्योः सुव्यवस्थायै व्याकरणशास्त्रस्य समादरः कार्य एव। तथा सति लौकिकवैदिकशब्दानां पार्थक्यं सुस्पष्टं ज्ञायेत। उच्चारणं स्वत्राच्यार्थज्ञापनं चेत्येवमादिषु लौकिकवैदिकशब्दानां प्रायशः सादृश्येऽपि पौरुषेयापौरुषेयत्वेन तेषां भेदः स्पष्ट एवास्ति। यदि वृद्धिनदीत्यादिसंज्ञकानां पारिभाषिकशब्दानां गौरश्व इत्यादिशब्दानां च सादितानादिते प्राक्कृतोपपादनानुसारेण निश्चिते स्तस्तर्हि वैदिकशब्दानां लौकिकशब्देभ्यः पार्थक्यं संसिद्धमेवेत्यवधेयम्।

स्वीये मनसि वर्तमानमभिप्रायं प्रकटयितु भाषाऽऽवश्यकीति सत्यम्। अथापि सर्वे शब्दा भाषाश्च कृतका इति न, अपि तु प्राक्कृतोपपादनानुसारेण काश्चनाकृतका अपि सन्ति। नेत्थं वक्तुं कदाऽपि पार्यते यत् कृष्णः पीतो हरितश्च वर्णो नैकवर्णानां संमिश्रणतः पुरुषः कुरुत इति। यतः पर्णपुष्पपल्लवादीनां वर्णा अपि मनुष्येणैवानेकवर्णसंमिश्रणेन कृता इति न प्रसिद्धम्। शुकहंसमयूरबककोकिलप्रभृतीनां पतत्रिणां वर्णा मनुष्येणैव कृताः किम्?।

जगति सांकेतिकभाषायाः प्रवृत्त्यनन्तरं केनचित्कालेन संशोधितस्वरूपतः संस्कृतभाषा सिद्धा। सा सृष्टेः प्राक्कालीना भाषेति कथनं नोपपद्यत इति येषां मतमस्ति तेषां, महाभाष्यकारो भगवान्पतञ्जलिर्वाक्यपदीयकारप्रमुखश्च शब्दब्रह्मनिष्णातो वैयाकरणकेसरीन्द्रसमूह इत्येतयोः सप्रमाणस्य सोपपत्तिकस्य च

सिद्धान्तस्य किंचिदपि परिचयो नास्तीति निर्विवादमेव । यत ईश्वरस्यानाद्यनन्तज्ञानोदधौ समनुवृत्ता अनादयः शब्दाः सन्तीति प्रागेव संसाधितमस्माभिः । संस्कृतायाः संशोधितेति स्वकपोलकल्पितं विशेषणं दत्त्वा तादृशस्य तस्यार्थस्य करणं शब्दसाधुत्वपद्धतेरज्ञानस्य प्रदर्शनं ज्ञेयम् । यतोऽनादिसिद्धशब्दाञ्शिष्यबुद्धिवैशद्यायासिद्धवन्मत्वाऽदृष्टार्थलक्षणेन शब्दसिद्धिः क्रियते । अथवा त्याज्यवस्तुभ्यः पृथक्करणाय चालनीन्यायं स्वीकृत्यापभ्रष्टशब्देभ्यः पार्थक्यसिद्ध्यर्थं सिद्धानामेव शब्दानां व्याकरणशास्त्रेण संस्कारः क्रियते । अपभ्रष्टशब्देभ्यः सिद्धशब्दानां पृथक्करणमयमेव स संस्कारः । संस्काररहिताः शब्दाः प्राकृता इत्युच्यन्ते । सांप्रतमप्यपभ्रष्टशब्दाननुलक्ष्य प्राकृता इमे इति शब्दप्रयोगो भवति ।

अत एव-" झेंद, ग्रीक, लाटिन, इत्यादिभाषान्तर्गतानां केषांचिच्छब्दानां गीर्वाणवाण्यन्तर्गतैः शब्दैः सह कथंचित्सादृश्यं कल्पयित्वा ताः सर्वा अपि भाषाः परस्परं भगिन्योऽवगन्तव्याः । किंचेत्थमपि तत्रावश्यं कल्पयितव्यम्, यदेताभिर्भाषाभिर्व्यवहर्तॄणां पूर्वजाः कस्मिंश्चिदेकस्मिन्नेव प्रदेशे चिराय वसतिं कुर्वन्तः सन्तः सर्वेऽपि त एकयैव भाषया वदनादिव्यवहारं कुर्वन्त आसन् । सा च तेषां भाषाऽनया संस्कृतभाषया सह सर्वासामेव भाषाणामुत्पादयित्री, अर्थाज्जननी भाव्या इत्येवं भाषातत्त्ववेत्तृत्वस्य वृथैव शुष्काभिमानधारिणां केषांचिन्मनुष्याणां भाषितमस्ति । तथैव वृकानुसरणकर्त्रजान्यायेन वर्तनकर्तॄणां भारतीयानां विद्वन्मन्यानामपि यदुक्तभाषितं प्रत्यनुमोदनं विद्यते तत्सर्वं नितरां निर्मूलं तुच्छमेव । यतो यस्याः कुत्रापि कदाऽप्यस्तित्वं सर्वथाऽप्रसिद्धम्, या च स्वयं वन्ध्यासूनुसदृशी खपुष्पतुल्या वा तया जननीत्वस्वीकारापेक्षयाऽनादिसिद्धगीर्वाणवाण्या एव तदितरवाणीनां जननीत्वाङ्गीकारः प्रमाणपूतो युक्तियुक्तश्च विद्यते । गीर्वाणभाषान्तर्गतमतिविशालं शब्दवैपुल्यम्, कूलंकषं व्याकरणम्, परिपूर्णं साहित्यम्, परमपूतगभीरार्थपाटवं च यथाऽनादिकालमारभ्योपार्चितं सत्प्रवृत्तमस्ति तथेतरत्र कुत्रापि नोपलभ्यते । अत एवेतराः सर्वा अपि भाषा अस्या एव कन्या इति निश्चितं ज्ञेयम् । इयं संस्कृतभाषा दैवी नाम ईश्वरीयभाषा वर्तते । अत एव सुभारती वा गीर्वाणवाणीत्यस्या अन्वर्थकं नाम सुप्रसिद्धमस्ति । अस्या अनादित्वं तु प्रसिद्धमेव ।

तस्माद्वैज्ञानिकदृष्ट्या ऐतिहासिकदृष्ट्या तथा वेदाद्यन्तर्गतविषयदृष्ट्या च पूर्णे सुविचारे कृते ' निराकारेणेश्वरेण सृष्टेः प्राग्वेदस्य प्रवचनं कृतमिति न सिध्य-

तीति " यत्प्रलपनं केषांचित्तद्भृशं तुच्छमेव ज्ञेयम् । निराकारत्वेऽपि सर्वज्ञत्वा-द्यचिन्त्यानन्तशक्तिमत्त्वात्सर्वेश्वरत्वाच्च तस्येति ।

" अथेदानीमुन्नतावस्थां गतेन वैज्ञानिकानां संशोधनेनेत्थं सिद्धमस्ति यदत्यन्त-प्राचीनावस्थासमयेऽस्यां पृथिव्यां मनुष्याणां सुखेन निवस्तुं भूमिः, जलम्, वायुः, इत्यादिकं किमपि नाऽऽसीत् । अनन्तरमादौ खनिजपदार्थाः, तदनन्त-रमुद्भिज्जाः, तत्पश्चादितरे प्राणिनः, सर्वेषामेतेषां पश्चाच्च मनुष्यप्राणिन आवि-र्भूताः । एकस्यानन्तरं द्वितीयस्याऽऽविर्भावाय मध्ये भूयान् कालो व्यतीतः । वेदराशावुपलभ्यमानानां नदीनां नामानि ग्रामादेर्विवरणं तथेतरेभ्योऽपि केभ्यश्चिद्धे-तुभ्य इत्थमनुमीयते, यदार्यलोका यस्मिन् काल उत्तरस्यां दिशि निवसन्ति स्म तस्मिन् समये वेदानां विरचना संवृत्ता । इतिहासविदोऽपि वेदरचनायाः कालं निर्दिशन्ति । वेदे प्रमाणसिद्धं किमपि वस्तु नास्ति । यन्मनुष्येण कथ-यितुमशक्यम् । यस्य च निरूपणार्थं सृष्टेरादिमसमयस्य किंवा मुखाद्यवयवशून्यवक्तुर्ले-खकस्य वाऽत्यावश्यकता स्यात् । अत एव वेदोद्देश्यकं परमेश्वरोक्तत्वानुमानं प्रमाणपूतमिति वक्तुं न पारयामः " वेदस्योपर्येवंविध आक्षेपः कैश्चित्क्रियते, परं स आक्षेपोऽत्यन्तासमञ्जसताया इत्युपेक्ष्योऽस्ति ।

तथा हि—यदि वैज्ञानिकमन्यानां जनानां चराचरस्यास्य जगतो मूलकारणं किमित्यस्य अद्यापि निःसंदिग्धतया परिचयस्याभावस्तर्हि तेषां काल्पनिकस्वैरनिर्णयस्य शुष्का-धारोपरि निबद्धं ' सृष्टेरादिमकाले वेदराशिं प्रकटयिता सर्वज्ञः सर्वशक्तिः सर्वे-श्वरः कोऽपि नाऽऽसीत् ' इतीदं हर्म्यं कथमिवाभग्नं तिष्ठेत् । वैज्ञानिकाः स्वयं भ्रान्ताः सन्ति । अत एव तेभ्यः प्रत्यहं नूतननूतनाः प्रामादिकनिर्णया बहिर्निःसरन्ति विनश्यन्ति च। समुद्रपृथिव्यादीनां तत्त्वानां परमायुर्निश्चेतुं सहस्रशो वत्सरेभ्य उपक्रम्यासं-ख्यकालपर्यन्तं तेषां धावनसंभ्रमः प्रवृत्तः संवृत्तः। जडेभ्यः परमाणुभ्य उत ताद्दशेभ्यो विद्युत्कणेभ्यस्तत्संघर्षद्वारा जगदिदं जातम् । अथवा सर्वज्ञानन्तशक्तिमतः परमे-श्वरस्य विशिष्टविज्ञानमनुसृत्योत्पन्नमित्यस्य निर्णयो नाद्यापि तेषां संजातः । सत्येव-मीश्वरविज्ञानात्मकवेदमुद्दिश्य किं मानपूतं वक्तुं त शक्ताः । अतोऽस्मिन् जगति किमपि विशिष्टं कार्यं विशिष्टबुद्धिशालिचेतनप्रयत्नतो निष्पन्नं दृष्ट्वा सर्वथा विचि-त्रमिदं जगदपि सर्वज्ञानन्तशक्तेश्चेतनादाविर्भूतमित्येव वदनं युक्तियुक्तं भाति । एवं तस्यैव नित्यविज्ञाने प्राङ्निर्दिष्टवद्वेदराशेरास्तित्वमपि सुसिद्धमस्ति । तच्च दिव्य-ज्ञानक्रियासंपन्नेभ्यो देवताभ्य ऋषिभ्यश्च क्रमशो मनुष्येषूपदिष्टं भूत्वा सुप्रसिद्धं संवृत्तमित्येतत्कथनमेव न्याय्यम् ।

सृष्टेरुत्पत्तिक्रमो वेदादिशास्त्रे एतदपेक्षयाऽपि सुसूक्ष्मतयोपवर्णितः । महत्तत्त्वमहंकारः पञ्च तन्मात्रा इत्यादयोऽत्यन्तसूक्ष्माः पदार्था मनुष्यादीनां स्थातुमनर्हा इति प्रसिद्धमेव । एतेषामुत्पत्तौ समधिकः कालोऽपि व्यतीतः स्यात् । एवं स्थूलपृथिव्युत्पत्त्यनन्तरं क्रमशः सर्वा सृष्टिर्वर्धिताऽपि स्यात् । अथापि सेश्वरवादात्मके सैद्धान्तिकेऽध्वनि दिव्यज्ञानाक्रियासंपन्नेषु देवेषु ऋषिषु च भगवत्कृपया वेदराशेराविर्भावो जात इत्यत्र न काऽप्यनुपपत्तिरिति विवेकिभिरवधेयम् ।

वैज्ञानिकानां मनोराज्ये बहव्यस्तारकास्तासां रश्मयश्च वर्षसहस्रेणैकस्मिन्क्षणे निरवधिकोशं यावद्दूरं गच्छन्ति । परमद्यापि पृथिवीपर्यन्तं न प्राप्ता इत्येवमत्यद्भुता कल्पना स्वी क्रियते । वेदेनोपदिष्टानि तत्त्वानि परमुपेक्ष्यन्ते । एतन्महदाश्चर्यम् । अथवा स्वैरवैज्ञानिकत्वस्य सामान्यजनतायां तेन विना प्रसिद्धिरपि कथं भवेत् ।

वेदे कथितानां नदीनां ग्रामाणां च वर्णनमवलम्ब्य वेदकालस्यानुमानकरणं तु महर्षिवेदव्यासकृतोत्तरमीमांसाशास्त्रीयप्रमाणपूतसिद्धान्तस्य गाढाज्ञानसूचकं विद्यते । यतस्तत्र " शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम् " वेदशब्देभ्य एवाऽऽदौ निर्ममे स महेश्वरः । इत्यादिश्रुतिस्मृतिभिः प्रमाणैरित्थं सिद्धान्तितम् । यद्वेदशब्देभ्य एव निमित्तहेतुभ्यः सर्वा सृष्टिरुत्पन्नेति । युक्त्याऽपीदमेव निश्चितं भवति । यथा कुलालतन्तुवायादयो घटपटादिशब्देभ्यस्तं तमर्थं मनस्यनुसंधाय पश्चात्कारकव्यापृत्या तं तं पदार्थमुत्पादयन्ति । तद्वदीश्वरोऽपि शब्दानुवृत्तज्ञानेन तत्तद्वस्त्वनुसंधायानन्तरं बाह्यस्थूलस्वरूपेण जगत्प्रकटयति । अनेन सर्वप्रसिद्धेन दृष्टान्तेन युक्त्युपबृंहितवैदिकप्रमाणेन च विमर्शे कृते वेदवर्णितनदीनां ग्रामाणां चोत्पत्त्यनन्तरं वेदस्योत्पत्तिः संवृत्तेति ज्ञात्वापि प्रेक्षावत्पुरुषेणाभिधातुमशक्यम् । प्रत्युत वेदमूलत्वेनैव जगदुत्पत्तिरिति तस्य निश्चयो भविष्यति ।

तात्पर्यम् । अस्यानाद्यविच्छिन्नसंप्रदायप्रवृत्तवेदराशेश्चण्डरश्मिवत्स्वतःप्रमाणतया स्वोपदिष्टवस्तुमात्रासिद्ध्यर्थं नैवेतरक्षुद्रप्रमाणापेक्षा कदाऽपि । अत एव वेदोपदिष्टा धर्माधर्मतत्फलभूतभोगस्थानवैविध्यब्रह्मेश्वरप्रकृतितन्मात्रजन्ममृत्युगतिरागतिपरलोका इत्यादयः पदार्था वेदतदुपजीविप्रमाणमन्तरा केनापि याथार्थ्येनाधिगन्तुं नितरामशक्या एवेति । अत एव च क्षित्यङ्कुरादेः कर्ता शिरःपाण्यादिमतः सामान्यमानवात्पृथगेवास्तीति सुष्ठु कल्पना क्रियते । तया च वेदोपदेष्टा परमेश्वरोऽस्तीति निश्चीयते । वेदवचनेभ्योऽपीदमेव संसिध्यति । तथा हि—" अस्य महतो भूतस्य

निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः । तस्माद्यज्ञात्सर्वहुतादृ(त) ऋचः सामानि जज्ञिरे । छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत । यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । तं ह देवमात्मबुद्धिप्रकाशं शरणमहं प्रपद्ये । यज्ञेन वाचः पदवीयमायन्तामन्वविन्दन् ऋषिषु प्रविष्टाम् । न कश्चिद् वेदकर्ताऽस्ति वेदवक्ता महेश्वरः । ब्रह्मादिऋषिपर्यन्ताः स्मर्तारोऽस्य न कारकाः । " तस्मै नूनमभिद्यवे वाचा विरूपनित्यया । वृष्णे चोदस्व सुष्टुतिम् । इन्द्रं प्रत्नेन मन्मना मरुत्वन्तं हवामहे । अस्य सोमस्य पीतये । ऋ० " इति ।

" अत्र केषांचिदित्थमाशङ्का वर्तते । यदस्य महतो भूतस्येति वाक्ये मनुष्यकृतं शिक्षाकल्पपुराणेतिहासादिकमपीश्वरस्य निःश्वसितमित्युक्तम् । तथा सति कथमिदं वेदवाक्यं प्रमाणमित्यधिगन्तुं शक्यम् । यतः पुराणेतिहासादीनां रचना तेषु वर्णितानां राज्ञामनन्तरं जातेति सुस्पष्टमस्ति । अत एवास्मिन् श्रुतिवाक्ये रूपकेण वर्णनं कृतमित्यवश्यं वाच्यम् । किंच " इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे " इत्यस्माद्वेदवचनादप्ययमर्थः सिध्यति । एतन्मन्त्रकृता हि स्वप्राक्कालोत्पन्नऋषेस्तत्त्वज्ञानं श्रुत्वा ततोऽस्य मन्त्रस्य रचना कृतेति व्यक्तमेव । तस्माद्वेदो मनुष्यकृतः । अयमेव श्रुतिसिद्धोऽर्थ इति । इदं शङ्कितस्य भाषितं श्रोतुं रमणीयमपि विमर्शे कृते निःसारतां नैव जहाति । यतोऽस्य महतो भूतस्येति श्रुतिवाक्यानुसारतो विचारे कृत इतिहासपुराणसूत्राणि वेदस्यैवावान्तरभागा विद्यन्ते । तत्रैतिह्यपुराकल्पौ पुराणमिति इतिहास इति च प्रसिद्धौ । सूत्रव्याख्यानश्लोका अपि वेदस्यैवावान्तरभागा ज्ञेयाः । ' आत्मेत्येवोपासीत ' ' ब्रह्मविदाप्नोति परम् ' इत्यादिबह्वर्थसूचकश्रुतिवाक्यान्येव सूत्राणि । ' तदप्येष श्लोको भवति । मरुतः परिवेष्टारो मरुत्तस्यावसन् गृहे ' इत्यादिस्थलीयमन्त्रा एव श्लोकाः । सूत्रव्याख्यानकृतश्च मन्त्रब्राह्मणभागा व्याख्यानान्युच्यन्ते । एते सर्वेऽनाद्यपौरुषेयवेदराशेरेव भागाः सन्ति ।

लोकप्रसिद्धमत्स्यमार्कण्डेयादिपुराणानि रामायणभारताद्य इतिहासाख्यानाद्य एव विद्यन्ते । तेषां तस्मिन् तस्मिन् समये महर्षिव्यासप्रभृतिभिरधिकृतमहापुरुषैः संकलनमात्रं क्रियते । तेषु वर्णपदादीनां विशिष्टानुपूर्व्या उदात्तादिस्वराणां च नियमस्यासत्त्वात्ते पौरुषेया इत्युच्यन्ते । उपर्युक्तरीत्या वेदशब्दोद्भवा सृष्टिरिति दृष्ट्याऽवलोकिते राजर्षीणां प्रागपि पुराणाद्यन्तर्गतं तेषां वर्णनं सुसंगतमेवास्ति । अत एव रामायणादिष्वपि पुराणानां चर्चा उपलभ्यते । पुराणेष्वपि पुराणानि ब्रह्मविनिर्मितानीत्युक्तमस्ति । तस्मात्तान्यपि भगवन्निःश्वासात्मकानीति वचनं समञ्जसम् ।

अथ वेदराशिर्भगवतः परमेश्वरस्य ‘ निःश्वासः ’ इत्यस्यायमर्थः । यथा श्वासो-च्छ्वासादुत्पत्त्यर्थं सर्वेषां प्राणिनां स्वस्वबुद्धिप्रयत्नयोर्विशेषतो नाऽऽवश्यकता सा क्रिया सहजत एव प्रचलति तद्वदेव वेदराशेराविर्भावः परमेश्वराद्भवति । अत एव वेदराशेरकृत्रिमता निराबाधा विराजत इत्यस्य विशुद्धाशयस्याज्ञानात् किंवा ज्ञात्वाऽपि बुद्धिपुरःसरं तमुपेक्ष्य जडेभ्यः पाञ्चभौतिकेभ्यः श्रुतिसागरस्योत्पत्तेः कथनं तदर्थं शुष्कतर्कवितर्ककरणं च मतिमान्द्यस्य लक्षणं ज्ञेयम् । किंवा सामान्यजन-चक्षुषि धूलिप्रक्षेपोऽवगन्तव्यः ।

“ इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ” अनया श्रुत्या ‘ वेदो मनुष्यकृतः ’ अर्थात्पौरुषेय इति भवदिष्टं जात्वपि न सिध्यति । प्रत्युत वेदस्यानादित्वमेव सुनिश्चितं भवति । यथाऽस्माभिः पूर्वजेभ्यः श्रुतं तथाऽस्म-त्पूर्वजैरपि स्वीयपूर्वजेभ्य एव श्रुतम् । तैः स्वतन्त्रं विरचय्य श्रावितमित्यत्र न किमपि प्रमाणं वर्तते । अमुकेनैकेनेदं वृत्तं मह्यं श्रावितमित्यस्य न तेन नवीनं विरचय्य श्रावितमित्यर्थो भवति । अत एव या केवलं श्रूयत एव न केनापि क्रियते सैव श्रुतिरिति निश्चितं ज्ञेयम् ।

ननु वेद उपवर्णितानामृषीणां नाम्नां क्रियाणां चैतिहासिकवर्णनेन साकं सम्यक्संगतेरसंभवाद्वेद ईश्वरोक्त इति मतं न समीचीनमिति यत्केषां-चिल्लपितं तदप्यविवेकविलसितं ज्ञेयम् । यत एतादृशकुशङ्कायाः अप्युत्तरं पूर्वमी-मांसायां प्रदत्तमेव । तद्यथा—कमप्येकमतिगहनं गणितविषयं बोधयितुं तज्ज्ञः कल्पितस्य नाम्नस्तादृशपुरावृत्तस्य च साहाय्यं गृह्णाति । तथा गहनतरं तत्त्वं ज्ञापयितुं कल्पितस्य नाम्नस्तथाविधाख्यायिकायाश्चावलम्बनं शक्यमेवेति वेदराशा-वुपलभ्यमानानां वसिष्ठविश्वामित्रेत्यादिनामशब्दानां मुख्योऽर्थस्तु प्रतिकल्पं भविष्यन्तीषु वसिष्ठादिव्यक्तिषु समवेता वसिष्ठत्वादिजातिरेव । अथवा प्राड्विवाकादेः ( जज्ज वगैरे ) स्थानमिव वसिष्ठविश्वामित्रेत्यादिकं तस्य तस्य स्थानस्येदं नाम विद्यते । सा जातिस्तत्स्थानं च नित्यमिति शास्त्ररहस्यम् । तस्मिंस्थाने या योग्या व्यक्तिर्नि-युज्यते “ तत्स्थानापन्नस्तद्धर्मं लभते ” इति नियमात्तस्या व्यक्तेस्तेन तेन स्थानेन सह संबन्धस्य विद्यमानत्वाच्च साऽपि व्यक्तिर्लक्षणया तेन तेन नाम्नो-च्यते । अनया रीत्या वेदादौ तानि तानि नामानि निर्दिष्टान्यपि न काचि-त्क्षतिः । किंच भूतं भविष्यद्वर्तमानं चेत्यादिकं सर्वं वेदादेवाऽऽविर्भूतं यदि तर्हि सर्वकालेषूत्पन्नानां व्यक्तीनां नामान्यागतान्यपि वेदे न कोऽपि प्रत्यवायः । नैव च तस्यानादित्वस्यापौरुषेयत्वस्य च प्रतिबन्ध इत्यवधेयमिति च ।

अथ प्रत्यक्षप्रमाणोपजीव्येन " क्षित्यङ्कुरादिकं सकर्तृकं कार्यत्वाद्घटवत् । संर्गाद्यकालीनव्द्यणुकप्रयोजकं कर्म प्रयत्नजन्यम् । कर्मत्वात् । गुरुत्ववतां पतनाभावः पतनप्रतिबन्धकप्रयत्नप्रयुक्तः । धृतित्वात् । पक्षिपतनाभाववत् । ब्रह्माण्डनाशः प्रयत्नजन्यः । नाशत्वाद्घटनाशवत् । घटादिव्यवहारः स्वतन्त्रपुरुषप्रयोज्यः । व्यवहारत्वात् । आधुनिककल्पितलिप्यादिवत् । वेदजन्यप्रमा वक्तृयथार्थवाक्यार्थज्ञानजन्या । शाब्दप्रमात्वात् । चैत्रवाक्यजन्यप्रमावत् । वेदोऽसंसारिपुरुषप्रणीतः । वेदत्वात् । व्यतिरेके काव्यादिवत् । व्द्यणुकपरिमाणजनिका संख्याऽपेक्षाबुद्धिजन्या । एकत्वान्यसंख्यात्वात् " इत्याद्यनुमान( तर्क )प्रमाणेनैवाऽऽदावीश्वरस्य सिद्धिर्जायते । पश्चात्तदुक्तवेदेन तस्योपबृंहणं परं भवतीत्येव वेदाख्यशब्दप्रमाणस्योपयोग इति यत्तटस्थेश्वर( केवलनिमित्तकारण )वादिना तार्किकेणोच्यते तस्योत्तरमीमांसायां ' पत्युरसामञ्जस्यात् ' इत्यधिकरणेन निरासं कृत्वा, ईश्वरो वैदिकप्रमाणगम्य एवेति सिद्धान्तितम् । नन्वीश्वरः श्रुत्यैकप्रमाणसिद्धत्वान्मान्यः । वेदश्चेश्वरविरचित इति प्रमाणमित्यन्योन्याश्रयदोषप्रसक्तिरस्मिन्सिद्धान्त इति यस्तार्किकादीकानामापेक्षः सोऽप्याकिंचित्करः । यत उत्तरमीमांसकाः—वेदराशिरपौरुषेयः । अत एव तस्य निरपेक्षं प्रामाण्यं चण्डरश्मिमण्डलवदिति ब्रुवन्ति । पौरुषेयत्वपक्षे भ्रमप्रमादादिपुरुषदोषप्रसक्तिरपरिहार्या स्यादिति । अत एव पूर्वमीमांसकानां ' वेदराशिरपौरुषेयः ' इत्ययं सिद्धान्तस्तेषामपि सर्वथा मान्य एव । सृष्टेः प्राक्परमेश्वराद्व वेदस्याऽऽविर्भावो जात इति यद्यपि ते सप्रमाणं वदन्ति तथाऽप्यानुपूर्व्या तस्य स्वातन्त्र्यं नास्ति । " यः कल्पः स कल्पपूर्वः " इति नियमानुसारेण सर्वज्ञ ईश्वरो गतकल्पीयां वेदानुपूर्वीं स्मृत्वा उत्तरकल्पे तथैवोपदेशं कुरुत इत्येवं प्रमाणपूतो युक्तिगाढस्तत्त्वज्ञानुभवस्थिरश्च तेषां सिद्धान्तो वरीवर्ति ।

कस्यापि वाक्यस्य ग्रन्थस्य वोत्पादनं नामाऽऽद्योच्चारणं यः कुरुते तस्य विशिष्टबुद्धेः प्रयत्नस्य चापेक्षाऽस्ति । तद्विना तदुत्पादनं नैव सम्यक् सिध्येत् । वेदस्योच्चारणं यद्यनादिकालमारभ्य संप्रदायागतमेवेति सिद्धं तर्हि तस्याऽऽद्योच्चारणात्मकमुत्पादनमेव न संभवति । रघुवंशादिग्रन्थस्याऽऽद्योच्चारणकर्ता कालिदासादिरेव निर्माताऽस्तीति प्रसिद्धमेव । अस्मदुच्चारणेन यद्यप्यानुपूर्व्या उत्पादनं संवृत्तं तथाऽपि तत्पूर्वोच्चारणसापेक्षमुच्चारणमस्ति । सजातीयोच्चारणनिरपेक्षं तदुच्चारणं नैव विद्यते । अतस्तत्तस्य नैव निर्माणम् । तद्वत्सृष्ट्युत्पत्तेः प्राग्वेदविषयकं यत्परमेश्वरस्यो-

चारणं तदपि पूर्वकल्पीयतदुच्चारणानुसारीति तदर्थं विशिष्टबुद्धेः प्रयत्नस्य च नाऽऽवश्यकतेति वेदराशिः परमेश्वरादाविर्भूतोऽपि न पौरुषेयः । किंत्वनादिरपौरुषेयः स्वतः प्रमाणं चास्तीत्यसंदिग्धम् ।

'वाचा विरूपनित्यया । अनादिनिधनोत्सृष्टा वाङ्‌ नित्या तु स्वयंभुवा' 'अत एव च नित्यत्वम्' । "नित्यस्तु स्याद्दर्शनस्य परार्थत्वात् । सर्वत्र यौगपद्यात् । संख्याऽभावात । अनपेक्षत्वात । प्रख्याभावाच्च योगस्य । लिङ्गदर्शनाच्च" । अस्य श्रुतिसूत्रनिचयस्य समासतोऽर्थो यथाक्रमं प्रदर्श्यते—"एते इति वै प्रजापतिर्देवानसृजत । असृग्रमिति मनुष्यान् । इन्दव इति पितॄन् । तिरःपवित्रमिति ग्रहान् । आशव इति स्तोत्रम् । विश्वानीति शास्त्रम् । अभिसौभगेत्यन्याः प्रजाः" । "एते असृग्रमिन्दवस्तिरःपवित्रमाशवः । विश्वान्यभिसौभगा" इति । एवमादिश्रुतेः समस्तस्यास्य जगतो वेदशब्दप्रभवत्वश्रवणाच्छब्दे नित्यत्वं प्रत्येतव्यम् । शब्दो नित्य एव स्यात । कुतः । दर्शनस्य तद्व्यञ्जकोच्चारणस्य परार्थत्वात् । परप्रत्यायनार्थत्वात् । शब्दस्यानित्यत्वे त्वर्थप्रतिपत्तिं यावदनवस्थानात् । परस्यार्थप्रतिपत्तिर्न स्यादिति भावः । गोशब्द उच्चारिते सर्वत्र सकलासु गोव्यक्तिषु यौगपद्यात् । युगपत्प्रत्ययोत्पत्तेः । तस्य नित्याकृतिवचनत्वम । तच्च गोशब्दस्य नित्यत्व एव घटते नानित्यत्वे । न ह्यनित्यस्य नित्यः संबन्धः संभवति । संबन्धनित्यत्वद्वारकमिदं शब्दनित्यत्वसंसाधनं ज्ञेयम् । द्विवारं गोशब्द उच्चारितो न तु द्वौ गोशब्दावुच्चारिताविति व्यवहारः । स च स एवायं गकार इति प्रत्यभिज्ञया तस्यैकत्व एवोपपद्यते । ततः शब्दे द्वित्वादिसंख्याया अभावात्तस्य नित्यताऽवगन्तव्या । यथा घटादेरिद नाशकमित्यनुभूयते तथा शब्दस्य नाशकमिदमिति किंचिदपि केनापि नानुभूयते । ततोऽनपेक्षत्वाद्विनाशहेतोरनुपलम्भतोऽसत्त्वादपि नित्यः शब्दः । योगस्योपादानतया वाय्ववयवयोगस्य प्रख्याभावात्साक्षात्कारस्याभावात् । न वायुकारणकः शब्दः । अतो नित्यः । ध्वंसप्रागभावाप्रतियोगित्वं नित्यत्वम् । तथा च शब्दसामर्थ्यापरपर्यायशक्त्यात्मकनित्ययेति लिङ्गदर्शनादपि शब्दस्य नित्यत्वं ज्ञेयमिति ।

इत्थं श्रुतिस्मृतिसूत्रादिभिः प्रमाणैर्वेदराशेरनाद्यनन्तत्वे सुनिश्चिते तादृशेन स्वतःप्रमाणेनापौरुषेयेण वेदेनैव यस्मात्परमेश्वरस्यास्तित्वं संसिध्यति तस्मात्तत्रान्योन्याश्रयदोषस्य न किंचिदप्यवसरोऽस्तीति ज्ञेयम् । ईश्वरप्रणीतत्वादेव वेदः प्रमाणमित्युक्तं चेदेव तस्य दोषस्याऽऽशङ्का समुत्पद्यते । जात्वपि नास्माकं तथोक्तिरित्यवधेयम् ।

अथ वेदराशिरकारादिवर्णसमूहात्मकः । वर्णास्तु कण्ठतालुदन्तोष्ठादीनां विशिष्टप्रयत्नेनोत्पद्यन्ते । देहशून्यस्य प्रयत्नः कुत्रापि न दृष्टः । सत्येवं देहशून्यादीश्वरादेव आविर्भूत इति कथमिवाभिधातुं शक्यम् । इयमप्याशङ्काऽत्र न युक्ता । यतः प्रतिज्ञानं शब्दानामनुवृत्तिर्वर्तत इति प्रागेव संसाधितम् । अशरीरस्येश्वरस्य स्वात्मकं ज्ञानं भवत्येवेत्यपि प्रसाधितम् । अतस्तस्य नित्ये ज्ञाने शब्दात्मकवेदस्य निश्चयेनानुवृत्तिरस्तीति वक्तुं न किमपि बाधकम् ।

वैखर्या वाण्या एव कण्ठताल्वादिस्थानानामपेक्षा न परापश्यन्त्योः । विना शरीरमस्मदादिव्यक्तीनां प्रयत्नो यद्यपि न जायते तथाऽपि शरीरियत्नानुत्पाद्यसर्वप्रसिद्धाङ्कुरादिकार्यस्योत्पत्त्यर्थं देहशून्यचेतनविशेषस्य प्रयत्नो गत्यन्तरस्याभावात्स्वीकार्यः प्राप्नोति ।

अत एवेश्वरस्य युष्मदस्मदादिवच्चक्षुरादीन्द्रियासत्त्वेऽपि स द्रष्टा श्रोता मन्ता कर्ता वेगवानित्यादिकं तस्य यथार्थं वर्णनं वेदेन कृतम्—“ अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः । स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम् ” इति । किंच जडेषु चक्षुरादीन्द्रियेषु दर्शनादिसामर्थ्यं तदन्तःस्थितचेतनादेव प्राप्नोतीत्यपि वेदः कथयति । तच्च कथनमन्वयव्यतिरेकाभ्यामुपबृंहितमस्ति । यद्वदयोगोलकस्याग्निसंपर्काद्दाहकत्वं प्रत्यक्षसिद्धम् । तद्वदचेतनचक्षुःश्रोत्रादिष्वपि चेतनात्मनः सांनिध्येन दर्शनादिसामर्थ्यमागच्छति । अत एव चेतन आत्मा श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो ह वाचं स उ प्राणस्य प्राणश्चक्षुषश्चक्षुरित्यादिकं तस्य वैशिष्ट्यं वेदेन प्रदर्शितम् । परमेश्वरः स्वीयाचिन्त्येन दिव्येन च सामर्थ्येन शरीरं निर्माय कण्ठताल्वादिव्यापारेण स्थूलोच्चारणतः ( वैखर्या वाण्या ) अथवाऽन्तर्यामिस्वरूपेण ब्रह्मदेवादिप्रजापतिचित्तेषु वेदस्योपदेशं कर्तुं शक्नोति । तस्मिन हि दिव्यशक्तेः सदा सत्त्वाद्देहादिकं विनाऽपि ज्ञानेच्छादीनां संभवे न कोऽपि प्रतिबन्धः । अत एव देहाधीनेच्छा । इच्छाधीनश्च देह इ अन्योन्याश्रयदोषस्यात्र नैव प्रसक्तिरस्ति ।

अथेश्वरस्य शरीरमस्मदादीनां शरीरवदेवोत्पद्यते किंवोत्पन्नैव तेन भाव्यम्—इत्याग्रहश्चेत्तस्येश्वरशरीरस्य क उत्पादकः । विनैवोत्पादकमीशशरीरं जायत इत्युक्तं चेदिदं जगदपि कर्तारमन्तरेण जातमिति वदनं प्रसज्येत । तत्त्वनुभवविरुद्धम् । यद्यपि जगत्कार्यं, तथाऽपि तस्य प्रातिस्विकघटपटादिकार्यापेक्षया विलक्षणत्वात् । यथा क्षित्यङ्कुरादिकं कार्यमकर्तृकं मन्यतेऽस्माभिस्तथा जगत्कार्यमप्यकर्तृकमित्युक्तौ का क्षतिरित्यादिः केषांचित्प्रलापो भृशमुपेक्ष्य एव ।

किंचेश्वरो देहवान्मतश्चेत्स तस्य देहो नित्यमेवानादिः सादिर्वा । यद्यस्मदादिदेहसदृश एवेश्वरस्य देहः स्यात्तर्हि तस्य सावयवत्वान्नित्यमेवानादिरिति वक्तुं न शक्यते । यतो यत्सावयवं वस्तु तदनित्यमादिमच्चेति निरपवादो नियमः सर्वत्र प्रसिद्धोऽस्ति । स सादिरङ्गीकृतश्चेत्तस्योत्पत्तेः प्रागीश्वरोऽशरीर एवाऽऽसीदित्यगत्या वाच्यम् । देह्यन्तरस्य सांनिध्येनेश्वरो देहीत्युक्तं चेत् । स देह्यन्तरस्य देहो नित्यो वाऽनित्यः । सावयवो निरवयवो वा । सोऽपि तदितरदेहिनः सांनिध्येन देहवान्यदि तर्ह्यप्रामाणिकानन्तवस्तुकल्पनात्मकादनवस्थादोषान्नैवोद्धारो भविष्यतीति ज्ञेयम् । तस्मात्स्थावरजङ्गमात्मकस्याशेषजगतः स्रष्टा परमेश्वरः स्वीयाचिन्त्यानन्तशक्त्याऽऽत्मनः शरीरं निर्मातुं शक्नोतीत्येव वक्तव्यम् । सा च तस्य दिव्या शक्तिरनादिरिति तत्प्रयुक्तं तस्य शरीरमपि नित्यमेवानादि तथा सादीति च द्विविधं भवितुमर्हति । कादाचित्कस्य शरीरस्य सादित्वेऽपि वृषाकप्यादीनामम्बिकालक्ष्म्यादीनां च शरीराण्यनादीनि सन्ति । यथा मनुष्यकृतिसाध्यघटपटादिपदार्थानां सादित्वेऽपि कार्यभूता आकाशादयः स्थिराः सन्त्येव तद्वच्छरीरत्वेन साधर्म्येऽपि जीवशरीरापेक्षयेशशरीरमत्यन्तं पृथगेव विद्यते । यत्र प्राकृतत्वमस्ति तत्र सावयत्वानित्यत्वे स्तः । भगवच्छरीरं न प्राकृतमतस्तस्य सावयवत्वादेर्नैव संपर्कः । तस्याप्राकृतत्वनिर्णयस्तु—"जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः" इत्यादिभगवद्वचसैव सिध्यति । वृक्षादिषु पदार्थेषु प्राकृतत्वं विद्यते । अतोऽनित्यत्वादिकमपि तेष्वस्ति ।

अथ सादिशरीरपक्षे शरीरोत्पत्तेः प्राक् परमेश्वरोऽशरीर एव स्थास्यतीत्यापत्तिर्नाऽऽगच्छति । यतः शरीरोत्पत्त्यनन्तरमपि परमेश्वरः शरीररहित एवास्ति । "अकायमव्रणमस्नाविरम् । अशरीरं वाव सन्तं प्रियाप्रिये न स्पृशतः" इत्यादिश्रुतिभिः परमेश्वरः सर्वदाऽशरीर एवास्तीति तस्य वास्तवं स्वरूपमुपदिष्टम् । सशरीरस्य तस्येदं वेदोपदिष्टमशरीरत्वं यद्यप्यापाततो विरुद्धं प्रतिभासते तथाऽपि सत्त्वभेदतो नैवात्र विरोधस्य गन्धोऽपि । यथा प्रातिभासिकसर्पयुक्तायां रज्ज्वां सत्यसर्पस्य राहित्यं सर्वदैव विद्यते तथा व्यावहारिकसत्त्वविशिष्टदेहवतीश्वरे पारमार्थिकदेहस्य त्रैकालिकसंसर्गावच्छिन्नप्रतियोगिताकाभावो वर्तत एव । यथा वा मूलकारणस्यामूलत्वं, अन्तिमाधारस्य चानाधारत्वं मन्यते तद्वत्समस्तशरीरकर्तुरशरीरत्वाङ्गीकारे न काऽपि क्षतिः ।

किंच तच्छरीरमनाद्यचिन्त्यशक्तिमूलकमस्तीत्यनाद्युत्पन्नं चेत्युक्तावपि नैव प्रत्यवायः । आविर्भावतिरोभावदृष्ट्या तत्सादि सान्तं चेत्यभिहितमपि न नो हानिः ।

एतावता महर्षिजैमिन्युपदिष्टवैदिकसिद्धान्तोपरि यद्यत्कुचोद्यं कृतमासी— त्तत्सर्वं तुच्छतरं वागाडम्बरम् । निर्दिष्टरीत्या सम्यङ्निराकृतं भूत्वा वर्णपदवाक्यानां नित्यत्वमुक्तविधया संसिद्धमिति बोध्यम् ।

यस्य वाक्यस्य तत्समूहस्य वाऽऽद्योच्चारणकर्ता कोऽप्यनुपलब्धस्तस्या- नादित्वमपि कथितमेव । पौर्वापर्यात्मिकाया आनुपूर्व्या अप्यनादित्वाद्वेदराशे- रनाद्यनन्तत्वं सुनिश्चितं ज्ञेयम् । अत एवाऽऽनुपूर्व्या अनादित्वाभावाद्वर्ण- तद्घटितपदानां नित्यत्वेऽपि वेदेतरवाक्यसमूहस्यानादित्वं नित्यत्वं वा नैव सिध्यति । " अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत " इत्यादिवाक्यस्यानादित्वे न कोऽप्यन्त- रायः । यथा ' एक एवाऽऽसीत् ' क्रियायाः समाधानं विधेयम् । " सूर्या- चन्द्रमसौ धाता यथा पूर्वमकल्पयत् " अस्य वेदवचनस्य समन्वयो वा येन प्रकारेण कर्तव्यस्तेनैव प्रकारेणोपरिनिर्दिष्टवचनस्य लापनिका ज्ञेया ।

ननु यमुपजीव्य महताऽऽवेशेन वेदराशेरपौरुषेयत्वमापाद्यते भवद्भिः स एव युष्माकं वेदतत्त्ववेत्ता ऋषिर्जैमिनिः शब्दानित्यत्वप्रतिपादनद्वारा तत्समूहात्मकस्य वेदस्या- नित्यत्वमर्थात्पौरुषेयत्वं व्यक्तं कथयति । तथा हि—" कर्मैके तत्र दर्शनात् । अस्थानात् । करोतिशब्दात् । सत्त्वान्तरे च यौगपद्यात् । प्रकृतिविकृत्योश्च । वृद्धिश्च कर्तृ- भूम्नाऽस्य " इति । अस्याः षट्सूत्र्याः क्रमशोऽर्थः । अकारादिः स्वरात्मकः । ककारादिर्व्यञ्जनात्मकश्च शब्दः । कर्म—क्रियते इति कर्म कार्यम् । अनित्य इत्यर्थः । कुतः । तत्र शब्दे । कण्ठताल्वादिव्यापारे सत्येव दर्शनात् । उपलम्भात् । तज्जन्यत्वं ज्ञेयम् । यस्य हि यदनन्तरं नियमेनोपलब्धिस्तस्य तज्जन्यत्वमिति नियमादिति भावः । ननूच्चारणेनाभिव्यज्यते शब्दः । नोत्पद्यत इति चेन्न । नह्यभिव्यञ्जनात्प्राक् तस्यास्तित्वे किमपि प्रमाणमस्ति । स्याच्चेद- भिव्यज्यात् । नासन्नप्यभिव्यज्यत इति वक्तुं युक्तम् । अतः प्रागभावप्रति- योगित्वादनित्यः शब्दः । उच्चरितस्य शब्दस्य क्षणान्तरे स्थित्यदर्शनात्कृतकः शब्द इति ।

नन्वस्थानादिति हेतुर्विनाशाख्यानित्यत्वस्य यद्यपि साधकोऽस्त्यपि सूत्र- कारोक्तकर्मपदाभिहितकृतकत्वस्य साधकः कथं भवितुमर्हति । नह्यनित्यत्वं कृतक- त्वरूपम् । ध्वंसप्रतियोगित्वकृतिजन्यत्वयोः पार्थक्यादिति चेन्न । पार्थक्येऽपि

तयोः समनियततयैकसाधकोऽपि हेतुरपरसाधको भवत्येव । समनियतत्वं तु ' जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च इति भगवद्वचनादेव सिद्धम् । यथा द्रव्यत्वसाधकेन गुणक्रियावत्त्वेन द्रव्यत्वसमनियतं गुणकर्मान्यत्वविशिष्टसत्तावत्त्वमपि सिध्यति सिषाधयिषितं तद्वदिति ।

शब्दं कुरु । अकार्षीत् । करोतीत्यादिव्यवहारविषयत्वादपि कृतकः शब्दः । नानास्थानस्थितैर्वक्तृभिरुच्चरितानां शब्दानां युगपन्नानादेशेषूपलब्धिः प्रत्यक्षासिद्धा । सा त्वेकस्य नित्यस्य शब्दस्य नोपपद्यते । अतोऽप्यनित्यः कृतकः शब्दः । अत्रेत्थं प्रयोगः । युगपदनेकवक्तृभिरुच्चारितो गकारः परस्परं भिन्नः । अविभुत्वे सति नानादेशेऽवगमात् । घटवदिति दृष्टान्तः । गोत्व आकाशे वा हेतोः साधारणानैकान्तिकत्ववारणायाविभुत्वे सतीति विशेषणं ज्ञेयम् । घटादिवच्छब्दस्यैकैकत्र कात्स्न्येनावगमादविभुत्वं बोध्यमिति ।

दध्यत्रेत्यत्र इकारः प्रकृतिः । यकारो विकृतिरिति स्मृतिसादृश्याभ्यां गम्यते । इको यणचीति स्मृतिः । सादृश्यं च तालुस्थानकत्वेनोभयोर्बोध्यम् । इत्थं स्मृतिसादृश्याभ्यां विकारित्वदर्शनाद्विकारिणश्चानित्यत्वनियमाद्वकारादिवर्णोऽनित्यो नाम कृतकः । दध्यादिवदिति भावः ।

कर्तृभूम्ना । उच्चारयितृबाहुल्येन । अस्य शब्दस्य वृद्धिर्महत्त्वं दृश्यते । अतो हेतुवृद्ध्यनुसारित्वाच्छब्दः कृतकः । मृत्पिण्डादिकारणमहत्त्वानुसारिघटादिवदिति । अत्रोच्यते नूनं भ्रान्तोऽसि त्वम् । यतः शब्दानित्यत्ववादिभिस्तार्किकादैः श्रुतिविरुद्धाप्रमाणमतनिरासार्थं तन्मतमुपन्यस्तं महर्षिणा प्रसक्तं प्रतिषिध्यत इति न्यायमनुसरता । अत एव त्वदनूदितषट्सूत्र्याः प्रथमसूत्रे तार्किकादय इत्थं वदन्तीत्येतदर्थसूचकमेके इति पदं भगवता तेन तत्र प्रयुक्तम् । तदज्ञानतो मतिपूर्वकं वोपेक्ष्यास्थाने तवेयं रुशती वागुपलभ्यते । आस्तां नामेदम् ।

अथ महर्षेस्तत्तार्किकमतप्रत्याख्यानपराणि सूत्राण्येवानूद्य तदर्थकथनसहितानि त्वत्पुरतः संस्थाप्यन्ते । शृणु सावधानेन मनसा तानि—

" समं तु तत्र दर्शनम् । सतः परमदर्शनं विषयानागमात् । प्रयोगस्य परम् । आदित्यवद्यौगपद्यम् । वर्णान्तरमविकारः । नादवृद्धिपरा " इति ।

क्रमशोऽर्थः । तत्र पूर्वपक्ष्यभिमतहेतोरनैकान्तिकत्वप्रदर्शनपरमिदं सूत्रम् । तुशब्देन पूर्वपक्षव्यावृत्तिः । तत्र दर्शनम् । प्रयत्नोत्तरसमये दर्शनमिति पूर्ववाद्यभिमतो हेतुः । समम् । नित्यत्वानित्यत्वपक्षयोः साधारणः । अप्रयोजकोऽनै-

कान्तिकश्चेत्यर्थः । प्रयत्नानन्तरकाले दर्शनं नैकान्तेन कृतकत्वस्य साधकं भवति। प्रयत्नानन्तरकाले दर्शनं हि तत्र सत्तां गमयति । न कालान्तरे तां निषेधति । अतः सप्रत्यभिज्ञानेन प्रत्यक्षेण दृश्यमानस्य तस्य कालान्तरेऽप्यास्तित्वं शक्यते वक्तुमिति कालान्तरेऽपि संभावितसत्त्वे विपक्षे शब्दे हेतुरनैकान्तिक इति रहस्यम्।

पूर्वपक्ष्यभितस्यास्थानादिति हेतोरनैकान्तिकत्वासिद्धिप्रदर्शनार्थमिदं सूत्रम्—सतः परमित्यादि । तस्यार्थः । अस्थानादित्यनेन यद्युच्चारणपूर्वापरकालयोरसत्त्वं विवक्षितं तदा स हेतुरासिद्धः । पूर्वापरकालयोः सतोऽपि शब्दस्यादर्शनं भवितुं शक्यम् । कस्मात् । विषयानागमात् । विषयं शब्दं प्रत्यनागमावुच्चारयितृमुखोद्गतवायवीयसंयोगविभागानां स्तिमितसमीरणापसारणेन शब्दाभिव्यञ्जकानामभावात् । अतोऽसिद्धमसत्त्वम् । यदि चास्थानादित्यनेनोच्चारणपूर्वापरकालयोरनुपलम्भो-विवक्षितस्तदाऽऽकाशाद्यन्तर्भावेन व्यभिचारः । आकाशो हि कदाचित्केन-चित्कूपपूरणयत्ने कृते न प्रत्यक्षो भवति न तु नश्यति । अतो नित्येऽप्याकाशे कदाचिदनुपलम्भसत्त्वादनैकान्तिको हेतुरिति ।

यत्तु शब्दस्य कृतकत्वसिद्ध्ये करोतिशब्दादिति साधनं दत्तं पूर्ववादिना तद्दूष्यते—प्रयोगस्य परमित्यनेन सूत्रेण । अत्रायमभिप्रायः । करोतिशब्दादित्यनेन करोति-कर्मत्वरूपोऽर्थो विवक्षित उत करोतिकर्मत्वेन व्यवह्रियमाणत्वं वा । आद्येऽस्मान्प्र-त्यसिद्धिः । उत्तरत्र नित्यत्वस्य साधयिष्यमाणत्वात् । द्वितीये तत्क्रि-याजन्यत्वाभाववति गोमयादौ गोमयान् कुर्विति तद्व्यवहारदर्शनाद्व्यभिचारः । अतो यथा तत्र समाहाराभिप्रायेण तादृशव्यवहारस्तद्वत्प्रकृतेऽपि शब्दं कुर्वित्यादि-व्यवहारः शब्दप्रयोगविषयो भविष्यतीति ।

यच्चोक्तं युगपन्नानादेशोपलम्भादनेकत्वं नित्यत्वं चाङ्गीकरणीयं शब्द-स्येति । तत्र हेतोरनैकान्तिकत्वप्रदर्शनायेदं सूत्रमादित्यवद्यौगपद्यमिति । अनेकत्वा-भाववत्यप्यादित्ये नानादेशोपलम्भनहेतोः सत्त्वाद्व्यभिचारः । कथमेकस्याऽऽदित्यस्या-नेकदेशस्थितत्वावभास इति चेदित्थम्—ये तावद्विन्ध्यनिवासिनो मनुष्याः, ये च कामरूपादौ स्थितास्तैः सर्वैरपि स्वस्वात्मनः प्राग्भागे एवोद्यन्भास्करो निरीक्ष्यते । अस्तं गच्छन्प्रत्यग्भागे निरीक्ष्यते । मध्याह्ने च स्वस्वोपरिस्थितोऽवलोक्यते । तेषां च प्राग्भागादयो व्यक्तं भिन्ना एव सन्ति । अतस्तेषु दृश्य-मानस्यास्याऽऽदित्यस्य भिन्नदेशत्वं सुस्पष्टम् । तथा यस्मिन्यावद्दूरे कैश्चित्सूर्यो-दयो दृश्यते तद्देशवर्तिनोऽन्येऽपि ततः परस्तात्तावति दूरे पश्यन्ति । अतोऽप्यस्ति देशभेद इति ।

नन्वेक एवाऽऽदित्य इति कुतोऽवगम्यते। युगपदनेकदेशोपलम्भाद्भिन्ना एव स्युरिति चेन्न। यदि भिन्नाः सूर्या भवेयुस्तदा पूर्वाह्णे प्राङ्मुखतया पुरस्तादादित्यं बहुषु मनुष्येषु पश्यत्सु बहव आदित्या उपलभ्येरन्। उपलब्धिसाधनानामक्षतत्वात् । नतु तथा केऽप्युपलभन्ते । इति योग्यानुपलब्धिबाधितत्वान्न सूर्यनानात्वं स्वीकर्तुमुचितम् । किं तर्ह्येकदेशस्थस्यैवाऽऽदित्यस्य नानादेशोपलम्भभ्रान्तित्वे प्रमाणमिति चेदित्थं तत् । अतिदूरवर्तिनोऽस्याऽऽदित्यस्य यथावद्देशमजानन्तः प्राणिनः स्वस्वसंनिधिमध्यस्यन्तो देशभेदं मन्यन्ते। अतो दूरत्वदोषेण जायमानत्वादस्याः प्रतीतेर्भ्रान्तित्वं ज्ञेयमिति । एवं शब्देऽपि नानादेशोपलम्भो दोषविशेषेण जायमानो भ्रम एवेति । तथा हि—यदि श्रोत्रं भिन्नभिन्नान्वक्तृप्रदेशानागत्य शब्दं गृह्णीयात्ततोऽनेकदेशत्वं गम्येत । न तु तत्तद्देशमागच्छति । किंतु स्वदेशस्थितमेव सच्छोत्रं यदा शब्दं गृह्णाति तदा तस्य देशस्यैकत्वादेकस्मिन्नेव देशे वस्तुतः शब्दः श्रूयते । तं देशं त्वनवधारयन्तो दोषविशेषेण वक्तृप्रदेश एव शब्दं मन्वानास्तेषां देशानां भेदाच्छब्दस्यापि भिन्नदेशत्वं भ्रान्त्या मन्यन्ते ।

ननु वक्तृप्रदेशं प्रति श्रोत्रानागमने यत्कारणमुक्तं प्रत्यक्षा हि कर्णशष्कुली तद्देशस्था गृह्यत इति । तदयुक्तम् । नहि श्रोत्रं तत्स्वरूपं येन गमनाभावो निश्चीयेत । किंतु तदवच्छिन्नो नभोभागः श्रोत्रम् । तस्य चाप्रत्यक्षत्वाद्गमनाभावः कथं निश्चीयत इति चेन्न । यतः कर्णशष्कुल्यवच्छिन्ननभसः श्रोत्रत्वेऽपि तादृशश्रोत्रेन्द्रियस्याधिष्ठानभूतकर्णशष्कुलीबहिर्भागे यत्र प्रदेशे शब्दो गृह्यते श्रोत्रेन्द्रियेण गमनं कृत्वा तत्र तदधिष्ठानभूतकर्णशष्कुल्योऽपि गृह्येरन् । नतु तथा गृह्यन्त इति ।

नन्वभिव्यञ्जकानां संयोगविभागानां श्रोत्रदेशेऽभावात्कथं तत्र शब्दग्रहणमिति चेत् । न तावत्संयोगविभागास्ताल्वादिदेशस्था एव । किंतु वायवीयाः सन्तः कर्णशष्कुलीदेशपर्यन्तं प्रादुर्भवन्ति । तेषां चाप्रत्यक्षवायवीयत्वादुपलब्धिः परं न जायते । वर्तन्त एव श्रोत्रदेश इति नानुपपत्तिः शब्दग्रहणस्येति तत्त्वम् । तस्मादुक्तरीत्या श्रोत्रदेश एवैकस्मिञ्शब्दो गृह्यते न त्वनेकेषु वक्तृप्रदेशेष्वित्यर्थः ।

ननु यत्र श्रोत्रैकत्वं वक्तृबहुत्वं च तत्र पूर्वोक्तरीत्या नानादेशेषूपलब्धिर्भवतु भ्रान्तिः । यत्र तु श्रोत्रबहुत्वं तत्र वस्तुत एव देशभेदाच्छब्दस्वरूपमपि भिद्येत । शब्दस्याऽऽकाशदेशत्वेऽपि चाऽऽकाशप्रदेशानां भेदान्नानुपपन्ना नानादेशता । अतश्च युगपन्नानादेशोपलम्भाच्छब्दस्य भेदः । भेदाच्च कृतकत्वं सिध्यतीति चेन्न । स एवायमित्यबाधितप्रत्यक्षप्रत्यभिज्ञयैकरूप्यावगमान्न देशभेदेन लिङ्गेन शब्दभेदानुमानं संभवति । प्रत्यक्षविरोधादिति भावः । साजात्योक्तिस्तु केषांचित्तुच्छैवेत्यवधार्यताम् ।

यत्तु स्मृतिसादृश्याभ्यामिकारयकारयोः प्रकृतिविकृतिभावस्य सिद्धत्वादनित्यत्वाभिकमुक्तं शब्दस्य तत्परिहारार्थमिदं सूत्रं ' वर्णान्तरमविकारः ' इति । अस्यार्थः— नहि दध्यत्रेत्यादाविकारयकारयोः प्रकृतिविकृतिभावः । किंतु इकाराद्वर्णान्तरं यकारः । नहि ' इको यणचि ' इति सूत्रेण तयोः । प्रकृतिविकृतित्वं सिध्यति । यतः ' सिद्धे शब्दार्थसंबन्धे नियमार्थं व्याकरणम् ' इति शास्त्रादावुक्तम् । प्रकृतिविकृतिभावकथने तु असिद्धस्यैव साधनप्रसक्तिः । अतोऽचि परतो न इक्प्रयोगः साधुः । किंतु यणप्रयोग एवेति तस्य सूत्रस्यार्थः । लोकप्रसिद्धव्यवहारदृष्ट्याऽपीकारयकारयोः प्रकृतिविकृतिभावो न सिध्यति । यथा कटं चिकीर्षन्तो वीरणाख्यं तृणविशेषमुपाददाना दृश्यन्ते । तृणविशेषकटयोः प्रकृतिविकृतिभावस्य प्रसिद्धत्वात् । न तथा यकारप्रयोगं कुर्वाणा इकारं स्वीकुर्वते । तस्मान्न तयोः प्रकृतिविकृतित्वमित्यर्थः । सादृश्यमात्रेण स्यात्प्रकृतिविकृतिभाव इति चेन्न । सत्यपि दधिपिटककुन्दापिटकयोर्धावल्यादिना सादृश्ये न तयोः प्रकृतिविकृतित्वं दृष्टमिति तत्र व्यभिचारादिति भावः ।

यच्च वृद्धिश्च कर्तृभूम्नाऽस्येति सूत्रेणोच्चारयितृबहुत्वाल्पत्वाभ्यां शब्दे महत्त्वाल्पत्वप्रतीत्या सावयवत्वेन कृतकत्वं तस्येति तन्निरासाय हेतोः स्वरूपासिद्धत्वप्रदर्शनपरमिदं सूत्रं नादवृद्धिपरेति । अस्यार्थः— बहुषूच्चारयत्सूत्पद्यमाना वायवीयसंयोगविभागा नादशब्दवाच्याः पृथक्पृथक्शब्दमभिव्यञ्जयन्तः स्वगतमुपचयं शब्दे समारोपयन्ते महत्त्वादिबुद्धिं जनयन्ति । न स्वतः शब्दे वृद्धिरुपपद्यते । तस्य वक्ष्यमाणरीत्या नित्यत्वेन निरवयवत्वादिति भावः । अर्थान्नादस्यैवेयं वृद्धिः । न शब्दस्येति ।

इत्थं कर्मैके तत्र दर्शनादित्यारभ्य वृद्धिश्च कर्तृभूम्नाऽस्येत्येतदन्तेन सूत्रसमूहेन शब्दस्य कृतकत्वावेदकं परपक्षं " समं तु तत्र दर्शनम् " इत्यादिभिः ' नादवृद्धिपरा ' इत्यन्तैः षड्भिः सूत्रैः सुदूरं निरस्य ' नित्यस्तु स्याद्दर्शनस्य परार्थत्वादित्यादिना लिङ्गदर्शनाच्चेत्यन्तेन सूत्रषट्केन शब्दनित्यत्वसिद्धान्तं प्रतिपादयामासाधिगतवेदतात्पर्यार्थो भगवान् जैमिनिर्मुनिः । तस्याः षट्सूत्र्याः समासतोऽर्थः सूत्रभाष्यकाराभिमतः प्रागुक्त एवेति नेहोच्यते ।

नन्वेवं संसिद्धेऽपि शब्दनित्यत्वे विशिष्टार्थबोधकानुपूर्वीविशेषविशेषितस्य शब्दसमूहात्मकवाक्यस्य तन्निचयात्मकवेदस्य चानित्यत्वं दुर्वारम् ।

तथा हि—" उत्पत्तौ वाऽवचनाः स्युरर्थस्यातन्निमित्तत्वात् " ( सू० २४ ) अस्यार्थः—पदपदार्थसंबन्धस्य च नित्यत्वेऽपि वाक्यापरनाम्न्यश्चोदना अवचना अप्रमाणं स्युः । अर्थस्य वाक्यार्थज्ञानस्यातन्निमित्तत्वात् । पदपदार्थसंबन्धाः

तिरिक्तवाक्यवाक्यार्थसंबन्धनिमित्तकत्वात् । तादृशसंबन्धस्य शक्तिरूपत्वे तात्पर्यरूपत्वे वा पुरुषसंबन्धापेक्षाया वारयितुमशक्यत्वादिति चेदत्रोच्यते । लोके येष्वर्थेषु प्रसिद्धानि पदानि तानि सति संभवे तदर्थान्येव सूत्रादिष्विति भाष्यात् ' य एव लौकिकास्त एव वैदिकाः ' इति नियमाच्च लोकसिद्धेषु पदार्थेषु वर्तमानानामेव पदानां विशिष्टक्रियारूपवाक्यार्थज्ञानोपायत्वान्न पृथग्वाक्यस्य वाचकत्वम् । अत एव न वाक्यार्थो निर्मूलः । तदुक्तं महर्षिणा—तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात् ॥ २५ ॥ लोके सन्नियमात्प्रयोगसंनिकर्षः स्यात् ॥ २६ ॥ इति । अर्थः—तद्भूतानां तेषु पदार्थेषु भूतानां वर्तमानानां पदानां क्रियार्थेन क्रियावाचकेन पदेन सह समाम्नायः सम्यक्परस्परान्वितस्वार्थबोधकत्वेनोच्चारणं भवति । अर्थस्य वाक्यार्थप्रतिपत्तेः । तन्निमित्तत्वात्पदार्थप्रतिपत्तिनिमित्तकत्वात् । लोके सन्नियमात् । सतो वर्तमानात् ' प्रसिद्धार्थकपदसमवधानमप्रसिद्धपदार्थमपूर्वमपि बोधयति ' इति नियमाद्वेदेऽपि प्रयोगसंनिकर्षः । अप्रसिद्धस्वर्गाद्यर्थवाचिपदघटितस्य वाक्यस्याऽऽधुनिकानामप्यर्थावबोधसंबन्धः सुकरः स्यात् । भविष्यतीति यावदिति ।

अथ यः केवलं न पूर्वमीमांसादर्शनस्यापि तु भारतवर्षीयसनातनधर्मस्यापि जीवनौषधभूतो वेदराशेरपौरुषेयत्ववादः स्वतःप्रामाण्यवादश्च स स्थूणानिखननन्यायमनुसृत्येदानीं यथामति विमृश्यते ।

तत्र पूर्वपक्षः—" वेदांश्चैके संनिकर्षं पुरुषाख्याः । अनित्यदर्शनाच्च " इति । अत्रैके तार्किकादयो दार्शनिका इत्थमाहुः—' उत्पन्नः को विनष्टः क इति बुद्धेरनित्यता ' । उत्पन्नो गकारादिर्विनष्टश्चेत्यापामरप्रतीतेर्वर्णानामनित्यत्वं सिद्धमेव । अथ कथंचित्तेषां नित्यत्वाङ्गीकारेऽपि तदानुपूर्वीविशेषात्मकवेदराशेर्नित्यत्वं नैव संभवति । काठक—कालापक—काण्व—बाष्कलाद्याश्च समाख्या वेदस्य सकर्तृकत्वमेव द्रढयन्ति । सति चैवं पुरुषसंबन्धप्रयुक्तदोषसंभावनया प्रामाण्यमेव तस्य संदिग्धम् । अत्रायं प्रयोगः—वेदः प्रागभावप्रतियोगितावच्छेदकधर्मवान् । वाक्यकदम्बकत्वात् । भारतादिवत् । इत्यनुमानेन तस्य पौरुषेयत्वम् ।

ननु सामान्यधर्मस्य प्रतियोगितानवच्छेदकत्वनियमेन वेदत्वस्य तादृशप्रतियोगितानवच्छेदकत्वात्साध्याप्रसिद्धिरिति चेन्न । वेदत्वस्य तथात्वेऽपीदानींतनवेदत्वादेस्तत्प्रागभावीयप्रतियोगितावच्छेदकतया नासिद्धिः । अन्यथा घटादेरप्यपौरुषेयत्वप्रसङ्गः । किंच वेदत्वं प्रागभावप्रतियोगितावच्छेदकम् । कार्यवृत्तिधर्मत्वात्तद्घटत्ववत् । इत्यनुमानेन वेदत्वस्यापि तथात्वात् । अतो वेदराशेः पौरुषेयत्वम् । पुरुषाश्च कठादयः ।

एते च काठकाद्याः समाख्याः, बबरः प्रावाहणिरकामयतेत्याद्यनित्यसंयोगोऽप्युपपद्यते । कठादीनां सर्वज्ञत्वसंदेहे त्वीश्वर एव कर्ता स्यात् । श्रुतिरपि—त्रयो वेदा अजायन्त । अग्नेर्ऋग्वेदो वायोर्यजुर्वेद आदित्यात्सामवेद इति तदुत्पत्तिं स्पष्टमाचष्टे । इति समासतः पूर्वपक्षः ।

अथ सिद्धान्तसूत्राणि—उक्तं तु शब्दपूर्वत्वम् । आख्या प्रवचनात् । परं तु श्रुतिसामान्यम् । कृते वा विनियोगः स्यात्कर्मणः संबन्धात् । इति ।

भाष्यम्—उक्तमस्माभिः शब्दपूर्वत्वमध्येतॄणाम् । केवलमाक्षेपपरिहारो वक्तव्यः सोऽभिधीयत इति । अत्रायं भावः । पूर्वकालीनं वेदाध्ययनं गुर्वध्ययनपूर्वकम् । अध्ययनत्वात् । इदानींतनवेदाध्ययनवत् । इत्यादिना औत्पत्तिकसूत्रे सर्वेषां वेदाध्येतॄणामध्ययनं गुर्वध्ययनपूर्वकमिति वेदस्यापौरुषेयत्वमुक्तमेव । आक्षेपपरिहारः परमिदानीं क्रियत इति ।

अत्रायमभिसंधिः । अलौकिकोऽपूर्वात्माऽभ्युदयनिःश्रेयसकरश्च वेदार्थो नैव कथंचिदपि पुरुषैः स्वातन्त्र्येण बुद्धावारोपयितुं पार्यते । सत्येवं कथं वाक्यानि विशिष्टार्थानि ते रचयेयुः । अर्थं बुद्ध्वा वाक्यं रचयतीति नियमस्य जागरूकत्वात् । काठककालापकादिसमाख्यास्तु प्रवचनातिशयेनाप्युपपद्यन्ते । स्मर्यते हि—वैशंपायनः सर्वशाखाध्यायी । कठस्तु केवलमिमां शाखामध्यापयांबभूवेत्यादि । नन्वनेकपुरुषसाधारणं प्रवचनं कथं काठकत्वादिनैव समाख्यातं स्यात् । कर्तृत्वे तु कर्तुरेकत्वात्समुपपद्यते सा सा समाख्येति चेन्न । अतिशययोगेनासाधारण्यं कठादेरेवोपपद्यते । यो हि परम्परयाऽविच्छेदेनाध्यापनतत्परो बभूवेति ।

यत्तु वेदस्य पौरुषेयत्वसाधकानुमाने साध्यसिद्ध्यर्थं वेदत्वं प्रागभावप्रतियोगितावच्छेदकं कार्यवृत्तिधर्मत्वात्तद्घटत्ववदित्यनुमानं प्रदर्शितं पूर्वपक्षिणा । तदनुमानं वेदत्वं न प्रागभावप्रतियोगितावच्छेदकं सामान्यधर्मत्वान्नित्यनुमानेन सत्प्रतिपक्षितम् । सामान्यधर्मस्य प्रागभावप्रतियोगितावच्छेदकत्वस्वीकारे तु प्रतियोगितावच्छेदकभेदाभावेन लाघवाच्च सकलघटप्रागभावैक्यं सिद्धे तत्प्रतियोग्युत्पत्तिनाशत्वासंभवेन तस्य नित्यत्वप्रसङ्गः । इष्टापत्तौ तूत्पन्नस्य पुनः पुनरुत्पत्तिप्रसङ्गः । प्रागभावनाशस्वीकारे घटानुत्पत्तिप्रसङ्गः । कारणकलापप्रविष्टस्य तस्याभावात् । अवयवशस्तन्नाशस्वीकारो निरवयवत्वादेवायुक्तः । प्रतियोगिभेदेनाभावनानात्वकल्पने संसर्गाभावान्योन्याभावयोरैक्यप्रसङ्गः । अतो न सामान्यधर्मस्य प्रागभावप्रतियोगितावच्छेदकत्वमिति ध्येयम् । अत एव न्यायसिद्धान्तमुक्तावलीटीकादिनकरीव्याख्यायां रामरुद्र्यां “ ध्वंसप्रागभा-

बयोश्च " सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वाभावादिति रामरुद्रभट्टोक्तिः संगच्छते । तथैव—तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकत्रैकालिकसंसर्गावच्छिन्नप्रतियोगिताक इत्यन्योन्यात्यन्ताभावयोर्लक्षणमुक्त्वा विनाश्यभावत्वं प्रागभावत्वं, जन्याभावत्वं ध्वंसत्वमिति धर्मेण संसर्गेण वाऽनवच्छिन्नप्रतियोगिताकयोः प्रागभावध्वंसयोः केवलं लक्षणं मूलकारविश्वनाथपञ्चाननभट्टाचार्योपदिष्टमुपपद्यत इत्यलं प्रसङ्गागतेनेति ।

तस्माद्वेदः प्रागभावप्रतियोगितावच्छेदधर्माभाववान् । अस्मर्यमाणकर्तृकत्वात् । आत्मवत् । इत्यन्वयिनाऽस्मर्यमाणकर्तृकवाक्यत्वादिति व्यतिरेकिणा चानुमानेन सत्प्रतिपक्षोद्भावकेन पूर्वपक्ष्युक्तं वेदः प्रागभावप्रतियोगितावच्छेदकधर्मवान् वाक्यनिचयत्वाद्भारतादिवदित्यनुमानं दुष्टमिति न तेन दुष्टेनानुमानेन पौरुषेयत्वं वेदस्य सिध्यति ।

१ किंच भूतकालो न वेदशून्यः कालत्वाद्वर्तमानकालवत् । २ प्राक्कालिकं वेदाध्ययनं गुर्वध्ययनपूर्वकम् । अध्ययनत्वात् । अद्यतनाध्ययनवत् । ३ वेदो न पौरुषेयः संप्रदायाविच्छेदे सत्यस्मर्यमाणकर्तृकत्वादित्यादिभिरनुमानैः पौरुषेयत्वं समूलमुन्मूलितं जायते ।

ननु जीर्णतरकूपादावस्मर्यमाणकर्तृकत्वं व्यभिचरतीति चेन्न । तत्रापि सामान्यतः कर्तृस्मरणात् । आदराभावाच्च विशेषतोऽस्मरणम् । वेदे तु सर्वजनसमाद्रियमाणत्वेऽपि कर्तुरस्मरणं पौरुषेयत्वाभावमेव सुव्यक्तं द्योतयति । यदि हि वेदराशेः कर्ता कोऽप्यभविष्यत्तर्ह्यध्येतृपरम्परया व्यासादिवदवश्यमस्मरिष्यत् । नहि तस्य कदाऽपि विस्मरणं शक्यकोटावागच्छति । यागादेर्हि फलसाधनत्वस्य प्रमाणान्तरागोचरत्वात् कर्तरि विश्वासादेव सर्वे वेदार्थानुष्ठाने प्रवृत्ता भवेयुः । तत्कथं नाम कर्ता विस्मर्येत । अवश्यमेव स्मर्तव्यः । न च स्मर्यते । तेन स्मर्तव्यत्वे सत्यस्मर्यमाणः कर्ता शशविषाणवदात्मनोऽभावमेव सुनिश्चितं ज्ञापयेत् ।

येऽपि साटोपं पौरुषेयत्वं समर्थयितुं बद्धपरिकरास्तेऽपि नैव परम्परया कर्तृविशेषस्मरणमभिधातुं शक्नुवन्ति । केवलं सामान्यतो दृष्टेन कर्तारं परिकल्प्य स्वाभिमतं यं कंचन तत्र निक्षिपन्ति । तद्यथा—केचिदीश्वरम् । अन्ये हिरण्यगर्भम् । अपरे प्रजापतिम् । इतरे त्वनेकान् । न चेयमनेकविधा विप्रतिपत्तिः परम्परया वेदकर्तरि मनुयाज्ञवल्क्यादिवत्स्मर्यमाणे कथंचिदवकल्पते । नहि मानवयाज्ञवल्कीयादौ भारते शाक्यादिग्रन्थे वा कर्तृविशेषं प्रति कोऽपि विवदते । तस्मात्स्मर्तव्यत्वे सत्यस्मरणात्कर्तुरभाव एवाध्यवसातुं समुचित इति ।

यच्चोक्तं—त्रयो वेदा अजायन्त । अग्नेर्ऋग्वेद इत्यादि । तन्न मनोहारि । वाचा विरूपनित्यया । यस्य निःश्वसितमित्यादिश्रुतिविरोधेन 'अग्नेर्ऋग्वेदः' इत्यादिश्रुतीनामग्निना ज्ञापित ऋग्वेद इत्यर्थपरत्वावगतेः । स्मृतिरप्यत्रोदाह्रियते—

अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा ।
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः ॥
स्वयंभूरेष भगवान् वेदो गीतः स्वयंभुवा ।
शिवाद्या ऋषिपर्यन्ताः स्मर्तारोऽस्य न कारकाः ॥ इत्यादि ।

किंचात्र पौरुषेयत्ववादीत्थं प्रष्टव्योऽस्ति । किमिदं पौरुषेयत्वं नाम विवक्ष्यते भवता किं पुरुषाधीनोत्पत्तिकत्वं किंवा मानान्तरेणार्थमुपलभ्य रचितत्वम् । नाऽऽद्यः । मादिष्टत्वात् । आकाशवद्धि नित्यानां सर्वगतानां कालतो देशतश्च क्रमशून्यानां वर्णानामनित्योच्चारणक्रमविशिष्टानां पूर्वपूर्वक्रमानुस्मरणनिमित्तकतत्सदृशोत्तरोत्तरक्रमवतां वेदशब्दवाच्यानां पुरुषाधीनोत्पत्तिकत्वस्य ममापि संप्रतिपत्तेः । न द्वितीयः । कालिदासादिकृतरघुवंशादिग्रन्थसाधारण्यप्रसक्त्या लोकोत्तरत्वाभावेन सर्वजनसमादरणीयत्वाभावप्रसङ्गः ।

किंच को वाऽयं पुरुषोऽभिप्रेतो भवतः । किं कश्चिन्मनुष्य उत योगी । आहोस्विदीश्वरः । नाऽऽद्यः कल्पो विमर्शसहः । मनुष्ये धर्मादिज्ञानस्य वेदैकजन्यत्वात्तस्य तत्कर्तृत्वानुपपत्तेः । न द्वितीयः । तत्रापि योगिनो धर्माधर्मादिप्रमापकं किं बाह्यमिन्द्रियमुताऽऽन्तरम् । नाऽऽद्यः । धर्मादेर्बाह्येन्द्रियाग्राह्यत्वात् । न द्वितीयः । आत्मयोग्यतद्गुणातिरिक्तज्ञानजनने मनसोऽसामर्थ्यात् । धर्माधर्मयोश्चाऽऽत्मगुणत्वेऽप्ययोग्यत्वात् । एतेनानेककर्तृकत्वपक्षोऽपि प्रत्याख्यातो ज्ञेयः । नापि तृतीयः । वेदादीश्वरसिद्धिः । ईश्वरश्च वेदानां प्रणेता । इत्यन्योन्याश्रयदोषप्रसक्तेः । स्वप्रणीतग्रन्थे स्वस्यैव ध्यानादिकथनानुपपत्तेश्च । तस्मात्कर्त्रस्मरणान्निराबाधमपौरुषेयत्वं वेदराशेः । अपौरुषेयत्वादेव च स्वतःप्रामाण्यमपि चन्द्ररश्मिवत्समुल्लसतीत्यधिगन्तव्यम् ।

स्वतःप्रामाण्यं च शब्दनिष्ठं ज्ञप्तिनिष्ठं चेति द्विविधम् । तत्र शब्दनिष्ठं स्वतःप्रामाण्यं—अनधिगताबाधितार्थबोधकत्वम् । ज्ञप्तिनिष्ठं त्वनधिगताबाधितार्थविषयकज्ञानत्वम् । अपौरुषेयत्वं नाम पूर्वकालत्वव्यापकसमानानुपूर्विकाध्ययनविषयत्वे सति सर्वजनसमादरणीयत्वे सत्यस्मर्यमाणकर्तृकत्वम् । नियत्वं प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वम् ।

एतद्वर्णत्वावच्छिन्नस्याऽऽनुपूर्वीविशेषविशिष्टतत्समूहात्मकवेदराशेस्तु नित्यत्वमपौरुषेयत्वेनैव गतार्थमिति नेह पुनर्विमृश्यते ।

सोऽयमपौरुषेयो वेदराशिर्विधिमन्त्रनामधेयनिषेधार्थवादभेदात्पञ्चविधः । अस्यैव पञ्चविधस्य भगवतो वेदस्यार्थनिर्णायकं पूर्वमीमांसाशास्त्रमिति सर्वं शिवम् ॥

---

## ( अथ संध्योपासनविमर्शः ) ।

संध्यामुपासते ये तु सततं संशितव्रताः ।
विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम् ॥

अथेदानीं केषुचिद्ब्रह्मवृन्देषु 'कुतोऽस्माभिः संध्योपासनं विधेयम्' इति प्रोत्थितं प्रश्नमाकर्ण्य साश्चर्यं खिद्यते नश्चेतः । शास्त्रेण द्विरुत्पन्नांस्त्रीन् वर्णानुद्दिश्य प्रत्यहं सायंप्रातरनुष्ठेयतया संध्योपासनं विहितम् । परं तत्र द्वाभ्यां वर्णाभ्यां स्वीयवैदिकाः संस्कारा आचाराश्च चिरकालादारभ्येत्थं विसृष्टा दृश्यन्ते । यद्व्रात्यताप्रायश्चित्तेनापि तेषां पुनरुज्जीवनमशक्यप्रायं संवृत्तम् । आत्मानं क्षत्रियंमन्यैः कैश्चित् सत्तादिना बलेन वेदाधिकारः साधितोऽपि यथासंभवं वेदाध्ययनं स्वीयनित्यनैमित्तिकानि धर्मकार्याणि यथाशास्त्रं नैवानुष्ठीयन्ते । 'कलावाद्यन्तयोः स्थितिः' इत्यार्षं वचनं श्रुत्वा मात्सर्यतः केनापि कर्मणा वाचा वा प्रकामं संतापः प्रदर्शितोऽपि तेन संतापेन यश्चिराय वैदिकसंस्कारस्याऽऽचारस्य च विलोपः संवृत्तस्तस्य परिवर्तनं जायमानं नैवोपलभ्यते । वेदानधिकृते तुरीयवर्णे संस्कारदृष्ट्या यत्पार्थक्यमस्ति तत्तयोर्न दृश्यते । द्वयोर्वर्णयोर्योऽयं धार्मिको विपर्यासो जातः स प्रथमवर्णेऽपि नास्तिक्यवादस्य तीव्रतरया वात्यया बाहुल्येनाऽऽगतप्राय एव । अत एव संध्या किमर्थं कर्तव्येति प्रश्नं सांप्रतिकी स्वात्मानं धीमन्तं विचिकित्सकं च मन्वाना पाश्चात्यशिक्षणशिक्षिता जनता निस्त्रपं कुरुते । वस्तुतः संध्योपासनस्य धर्मदृष्ट्या सामाजिकदृष्ट्या च कीदृङ् महत्त्वमस्तीत्यस्य किंचिदप्याकलनं तस्या जनताया न भाव्यमेतन्नास्तिक्यमूलकबुद्धिदौर्बल्यस्य नूनं गमकमस्ति । गतानुगतिकोर्णायुवद्वनतिगर्तमनुलक्ष्य धावतामेषां स्वैरं प्रधावनं प्रतिबध्य यः पुमान् योग्ये पथि तान् प्रवर्तयेत्स न केवलं ब्रह्मवृन्दस्यापि तु भारतीयार्यसंस्कृतेः समुद्धर्ता स्यादित्यत्र न कोऽपि संदेहः । संध्यावन्दनं कुतः कार्यमिति यतः प्रश्नः क्रियते ततस्तमुत्पादयित्री संध्यावन्दनविषयिणी जिज्ञासा चित्ते कथंचिज्जागर्तीत्यनुमीयते । तस्या अपि लोपयिता स्वीयाचारलोपो यत्र कुले संवृत्तस्तस्य कुलस्यावस्था तु वैदिकसंस्कारावधिकृतवर्णापेक्षयाऽपि निकृष्टा जातेति वक्तुं न कोऽपि प्रत्यवायः । आस्तां नामेदम् ।

" संध्यावन्दनं कुतः कार्यम् " इति प्रश्नस्य सामाजिकदृष्ट्या प्रथमं सामान्यमुत्तरमिदं बोध्यम् । वाडवानामितरेभ्यो वैशिष्ट्यप्रदर्शकं प्रमुखं साधनं संध्योपासनमेवेति तत्कर्तव्यं तैः । तदितरे विशिष्टं संध्यानुष्ठानं न कुर्वन्ति । द्विजा एव परं तत्कर्तुमधिकारिण इत्यस्यायमर्थो यद्विप्राणां संस्कारा आचाराश्च पृथग्विद्यन्ते । उच्चैः सन्ति । संशोधिता वर्तन्ते । इतरैरप्राप्यमिदं विशिष्टं धनं पूर्वसुकृतेनास्माभिर्लब्धमिति भावना संध्योपासनेनामृता स्यादिति संध्या कर्तव्या ।

प्रकृतस्यास्य प्रश्नस्य द्वितीयमुत्तरं शृणुत समासतः । श्रीपरमेश्वरस्य परावाग्रूपो योऽपौरुषेयो वेदस्तेन " अहरहः संध्यामुपासीत " इत्युपनयनदीक्षादीक्षितं प्रत्याज्ञा कृता । सा वेदपुरुषस्याऽऽज्ञाऽस्माकं वंशप्रवर्तकैर्वसिष्ठविश्वामित्रकश्यपभरद्वाजात्रिप्रभृतिभिर्महर्षिभिः सादरमङ्गीकृता । श्रीरामश्रीकृष्णश्रीमच्छंकराचार्यसदृशैरीश्वरावतारभूतैर्महात्मभिः परिपालिता । सत्पुरुषैः शिरसा वन्दिता । तथाऽऽधिकृतैरितरैरपि श्रेयोर्थिभिः सा वेदस्याऽऽज्ञा सम्यक् परिपालनीयेत्युपदेशश्च कृतः । तस्मादधिकृतैः संध्योपासनमवश्यं कार्यम् ।

बाबावाक्यं प्रमाणमित्येवं केनापि कियदप्यवहेलनं कृतमप्यज्ञैर्बालकैस्तज्ज्ञस्य पितुर्वचनं प्रमाणत्वेनाङ्गीकर्तव्यमेव । यतस्तस्यां शैशवावस्थायां तदेव तेषां हितकरमस्ति । कालान्तरेणाज्ञत्वनिवृत्त्या तज्ज्ञत्वसिद्धौ सत्यां तादृशपितृवाक्यस्य हितकरं रहस्यं तैः सलीलं बोद्धुं शक्यम् । सर्वथाऽज्ञाते विषये तज्ज्ञस्योपदेशोऽङ्गीकृतश्चेद्बौद्धिकदृष्ट्या न काऽपि क्षतिः । प्रत्युत बुद्धिवादस्य गौरवमेव तत् । स्वेन किमपि न ज्ञायते ' तनयकुशलयोगे तातपादा यतन्ते ' इत्युक्त्यनुसारेणाऽऽत्मनो हितार्थं यतमानस्य च तज्ज्ञस्य वचनं नाऽऽद्रियते च । किमिदं तर्कानुस्यूतं बुद्धिवादरहस्यम् । स्वस्य मौढ्यप्रदर्शको दुराग्रहोऽयम् । तज्ज्ञस्याधिकारिणो मतस्वीकृतिरेव प्रकृता चक्षुष्मत्ता । एतदनुसारेणैव जागतिकाः सर्वे सम्यग्व्यवहाराः प्रचलन्ति । यथा वयं रुग्णावस्थायामगदंकारस्य वचः प्रमाणं मन्यामहे तदनुसारं च वर्तामहे यथा वा व्यवहारपदे तज्ज्ञस्य राजकीयनियमाभिज्ञस्य पुंसो ( वकील ) मतमनुसरामः, हर्म्यनिर्मितौ तत्कलाभिज्ञं विचारयामः, भौतिकशास्त्रे भौतिकशास्त्रज्ञमन्वेषयामस्तथा धर्माधर्मजिज्ञासायां सत्यां यैर्महात्मभिर्धर्माधर्मरहस्यं दिव्यदृष्ट्याऽनुभूतं तेषां मतं वचश्च प्रमाणतया स्वीकर्तव्यम् । तैः कृतो निर्णयः पारमार्थिकः कुशलोदर्कश्चेति विभावनं बुद्धिमतो मानवस्याऽऽद्यं कर्तव्यम् । " सर्वस्य लोचनं शास्त्रं यस्य नास्त्यन्ध

एव सः " । तस्माद्भगवता वेदेनाधिकारिभ्यो मानवेभ्यः संध्योपासनस्य यस्मा-दाज्ञा दत्ता, या च वेदाज्ञा महात्मभिः सादरं परिपालिता यस्याश्चाधिकारिभ्यः प्रतिपालनस्य तैर्नियतमुपदेशः कृतः सा वेदपुरुषस्याऽऽज्ञा श्रेयोर्थिभिः पुंभिरवश्यं परिपालनीयेति युक्ततरम् ।

संध्या कुतः कार्येति प्रश्नस्य तार्तीयीकमुत्तरं शृणुत । निष्कामकर्म-योगस्य प्रथमः पाठः ( पहिला धडा ) इति संध्या कर्तव्या । निष्कामकर्म-योग इति शब्दः सांप्रतमेतावान्सुलभः संवृत्तो दृश्यते । नूनं तस्य तत्त्वतोऽर्थं ज्ञात्वेव तदुद्देशेनास्मिन्भारते वर्षे सर्वत्र कोलाहलः संप्रवृत्त उपलभ्यते । परमत्रेदं विमृ-श्यम्—कर्मयोगशब्दोदितं यत्कर्म तत्स्वच्छन्दतः क्रियमाणं किमपीति न तस्यार्थः किंतु श्रुतिस्मृतिविहितं यत्कर्म तदर्थकः स शब्द इति ज्ञेयम् । तदेव निष्कामतयाऽनुष्ठेयम् । तदुक्तं भगवता—

यज्ञो दानं तपश्चैव न त्याज्यं कार्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥
एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलान्यपि ।
कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥ इति ।

प्रत्यहं यद्यद्वयं लौकिकं व्यावहारिकं वा कर्म कुर्मस्तत्सर्वं सकाममेव । सत्येवं निष्कामकर्मयोगस्य पाठः कथमभ्यस्यते । तुण्डेन निष्कामकर्मयोग इत्युच्चैरु-द्घोषः कृतोऽपि तेन चिराय चित्ते बद्धमूलः फलाभिनिवेशो न दूरं गच्छति । यस्य कर्मणः फलं न श्रूयते शास्त्रविहितमपि तन्नैवानुष्ठीयते । निष्कामकर्मयोग-स्यायं प्रकाममुपहास एव । तस्मात्परमेश्वरानुग्रहमात्रसंपिपादयिषया चित्तशुद्ध्यर्थं विहितं निष्कामकर्माचरणमावश्यकम् । तस्य प्राथमिकः पाठ इति संध्योपासनं कर्तव्यमेव ।

संध्यावन्दनं कुतः कर्तव्यमित्यस्य चतुर्थमुत्तरं श्रूयताम् । विना संध्योपासनं कस्यापि शास्त्रीयकर्माचरणस्याधिकार एव न प्राप्नोतीति संध्योपासनमादौ कर्तव्य-मेव । तदुक्तम्—

नानुतिष्ठति यः पूर्वां नोपास्ते यस्तु पश्चिमाम् ।
स शूद्रवद्बहिष्कार्यः सर्वेषु द्विजकर्मसु ॥ इति ।

सांप्रतमयमप्येकश्चमत्कारः परिदृश्यते । यत्केचन महाशयाः संध्यावन्दनमुपे-क्ष्यैव व्रतोद्यापनश्राद्धादीनि शास्त्रीयकर्माणि कुर्वन्ति । विवाहोपनयनादींश्च संस्कारा-

नर्नुतिष्ठन्ति । किंत्वादौ संध्यावन्दनमन्तरेण कस्यापि शास्त्रीयकर्मणोऽधिकारो नाऽऽगच्छतीति क्रियमाणं तत्कर्म विगुणम् । तत एव च भस्मनि हुतवन्निष्फलं तद्भवतीति तैर्न ज्ञायते ।

राजकीयव्यवहारसभायां प्राड्विवाकादप्याधिकज्ञेन राजकीयनियमशास्त्रपारंगतेन ( कायदेपंडित ) विदुषा स्वीयं निःशेषं वैदुष्यं व्यर्थीकृत्य कोऽपि निर्णयः प्रकटीकृतोऽपि तन्निर्णयं नाङ्गी कुर्वन्ति केऽपि यतस्तस्याधिकारस्य पार्थिवं बलं नास्ति। राजनियुक्तः प्राड्विवाकस्तदपेक्षयाऽविद्वानपि तेन दत्तं निर्णयं शिरसा स्वी कुर्वन्तीत्यधिकारस्य महत्त्वं सर्वजनप्रसिद्धम् । प्रकृतेयं संध्यानुष्ठितिरपि वेदविहितस्य कस्यापि कर्मणोऽधिकारोत्पादिकेत्यवश्यं कर्तव्या । तुल्याचारः सामाजिकैक्यस्य प्रमुखं साधनमिति सर्वप्रसिद्धम् । तेनाऽऽसेतुहिमाचलं वर्तमानानां बाडबानां प्रत्यहं सायंप्रातःसमये क्रियमाणस्यैकस्य सदाचारस्य बन्धनमावश्यकमित्यस्य तैः सर्वैरनुदिनं दिनरजन्योः संधिकाले शुचिर्भूत्वा गायत्रीमन्त्रेणाऽऽदित्यमण्डलान्तर्गतं देवं नारायणं ध्यात्वा तन्निकटे सद्बुद्धिं देहीति प्रार्थनायाश्च कियन्महत्त्वमस्तीत्यस्याऽऽकलनं सांप्रतिकानां विद्वन्मन्यानां न भाव्यमेतदपेक्षयाऽन्यत् किं सखेदाश्चर्यास्पदं तन्न जानीमः ।

भारतीयानामस्माकमयं वैदिकः सनातनो धर्मः सर्वोत्तमं धनमस्ति । अविनश्वरं तद्धनं स्वयमुपभुज्य संवर्ध्य चोत्तरसंततये तत्प्रदानमधुनातनानां भारतीयपुंसां प्रमुखं कर्तव्यमस्ति । अस्य धनस्य वृद्धिरास्तां नाम । अथापि स्वहस्ते यथा तत्समागतं तथोत्तरसंतत्याः करे तत्समर्पणस्य भारः कृतज्ञतया तैर्लघुः कर्तव्य एव । अत उत्तरसंततेर्भव्याय सांप्रतिकैः शीलवद्भिः पारम्परिकाः सदाचारा नियतं संरक्षितव्याः । सर्वेष्वाचारेष्वयं संध्यावन्दनात्मक आचारोऽत्यन्तं श्रेष्ठोऽस्तीवश्यं परिपालनीयो विवेकिभिः प्रथमवर्णाभिमानिभिः ।

संध्यावन्दनं किमर्थं कार्यमित्यस्यापरामिदं गमकं विद्यते तत्सावधानेन श्रूयताम् । इदं संध्यावन्दनं वेदविहितं प्रधानं पुण्यकर्म बोध्यम् । पुण्ये कर्मणि चेत्थमेको विशेषो विद्यते यत्समाकर्षणकर्त्री भव्या शक्तिस्तस्मिन्विराजते । तस्याः फलतः परिणतिरित्थं जायते । ये पुण्यवन्तो जीवाः स्वीयोत्कर्षसिद्ध्यर्थं विशुद्धे कुले जनिं ग्रहीतुं प्रतीक्षन्ते तान्पुण्यवतो जीवान् सा शक्तिः संध्यावन्दनादिपुण्यकर्मकर्तॄणां कुले समाकर्षति । संध्यावन्दनादिः प्राथमिकाचारोऽपि यस्मिन्कुले

विलसत्तस्मिन्भ्रष्टकुले पुण्यवन्तो महात्मानः कुतो जन्म गृह्णीयुः । भक्तशिरोमणे-स्तुकोबागायसदृक्षस्य साधोरुद्भवो यस्मिन्कुलेऽष्टावधिपुरुषैः श्रीपाण्डुरङ्गभक्त्या पुण्यं संगृहीतं तस्मिन्नेव कुले जातः । समर्थरामदासस्वामिनो जन्म द्वादशावधिकपुरुषैरनुष्ठितायाः श्रीरामचन्द्रोपासनायाः परिपक्वं फलं वर्तते ।

तस्मात्स्वीयकुले पुण्यवतामुत्पत्तिर्भाव्या समुत्पन्नैश्च तैः कुलस्य शरच्चन्द्रचन्द्रिकावदुज्ज्वलं यशो वर्धयितव्यं तथा तेषां सुकृतं च जायमानोत्कर्षस्योपकारकं भाव्यमिति दृढा मनीषा स्याच्चेद्धार्मिकाः प्रशस्याः संध्योपासनप्रमुखा आचाराः स्वकुलेऽप्रमादेन परिपालनीयाः । तेषां मध्ये संध्योपासनमग्रगण्य आचारोऽस्तीति न विस्मर्तव्यं कदाऽपि । यद्यप्यकरणे प्रत्यवायोत्पादकमित्येवं नित्यस्य कर्मणो लक्षणं कुत्रचिद्दृश्यतेऽथापि संध्योपासनप्रमुखेणाभीष्टसिद्धिहेतुना मङ्गलाचारेण दुरितनिबर्हणपूर्वकेष्टसिद्धिर्जायत इति धर्मशास्त्रसिद्धान्तः । तदुक्तम्—

आचाराल्लभते ह्यायुराचारादीप्सिताः प्रजाः ।
आचाराद्धनमक्षय्यमाचारो हन्त्यलक्षणम् ॥ इति ।

अत्रेदं बोध्यम्—सदाचारेण वर्तनं मानवमनस्यङ्कुरितायाः दैव्याः संपत्तेः परिणामः । महात्मनामित्थं स्वभावोऽस्ति यत्कृतान्यपि तैः प्रशस्तानि कर्माणि तदुत्पन्नपुण्यस्याहंकारस्तान्नैव स्पृशति । विनाऽहंकारं सत्कर्माचरणमुदात्तचित्तस्य द्योतकमित्यनुष्ठितेऽपि प्रशस्ते कर्मणि लेशतोऽप्यहंकारस्याभावो महापुरुषत्वं प्रख्यापयति । वयं सत्यवदनेन कमप्युपकृतं कुर्मः किंवा महत्पुण्यं कर्म कुर्मोऽथवा स्वार्थं त्यजाम इति न प्रकारः, अपि तु मनुष्यमात्रस्य यथा कर्तव्यपरिपालनं तत्सत्यवदनं धूर्तसमाजे पुण्यपरिणामि भवति । तथा संध्यावन्दनेन सदाचरणेन पुण्यसंपत्तिर्जायत इति शास्त्रस्य निष्कृष्टोऽर्थः ।

किंच संध्यावन्दनस्यैहिकमपि फलं शास्त्रेण व्यक्तं प्रतिपादितम् । तद्यथा—

ऋषयो दीर्घसंध्यात्वाद्दीर्घमायुरवाप्नुयुः ।
प्रज्ञां यशश्च कीर्तिं च ब्रह्मवर्चसमेव च ॥ इति ।

तस्मान्निर्दिष्टन्यायस्यास्य दीर्घायुष्ट्वादेर्लाभो भाव्य इतीहा चेत्संध्योपासनमवश्यं विधेयमिति सिध्यति ।

इत्येवमयं संध्योपासनस्य बहिरङ्गविमर्शः समासतः कृतः । इतः परं तस्यान्तरङ्गविमर्शः कर्तव्योऽस्ति । स तु नितान्तं रमणीयो विवेकिनं पुमांसं प्रमोदस्योपवनं प्रापयिता च विद्यते । तथा हि–संध्योपासनस्य विधिः, तदन्तर्गता प्रार्थना, जपः, आसनप्राणायामादियोजना, मार्जनं, अघमर्षणं, अर्घ्यप्रदानं, उपस्थानं,

दिग्देवतावन्दनं, गोत्रनामोच्चारः, गुरुवन्दनमित्येवमाद्यनुष्ठेयाविषयाणां सुयोजना, इयती शास्त्रशुद्धा मङ्गलदात्री च विद्यते यदेकाग्रेण मनसा विचार्यमाणे वेदविहितमिदं संध्योपासनं भारतीयसंस्कृतेः सौभाग्यं समुज्जृम्भत इति वक्तुं न कोऽपि प्रत्यवायः। एतादृशी परमपवित्राऽत्युदात्ता च योजनाऽन्यस्यां कस्यामपि प्रार्थनायां न स्यादेवेति निश्चयः।

यद्यप्यस्य संध्योपासनस्य श्रेष्ठतमा गुणाः साकल्येन वक्तुमशक्यास्तथाऽपि तेषां दिङ्मात्रं निदर्शनं श्रीभगवन्तं नमस्कृत्य यथामति विदध्मः—

अथ संध्योपासनस्यान्तरङ्गमैश्वर्यं स्तुवतां श्रुतिपुराणानामानन्दोदधिरनुक्षणं समुल्लसति। यतः संध्योपासनं तेषां हृदयं वर्तते। समस्तस्यास्य जगतः संस्कृतेरत्युत्तमं परिपक्वं फलं ब्राह्मण्यमेव। तस्य ब्राह्मण्यस्य मौलिकः सदाचारः संध्योपासनम्। इदं संध्योपासनं भारतीयसंस्कृतेः स्वतेजसा देदीप्यमानः सर्वोत्तमो रत्नमयः किरीटो विराजते। अस्मिन् संध्योपासने त्रयाणामपि वेदानां सारः संगृहीतोऽस्ति। इदं संध्योपासनं भूदेवेभ्यो विश्वस्य स्थितिगती तत्त्वतो बोधयित्वा तेषामन्तःकरणे प्रशस्यां कर्तव्यभावनामादधाति। केवलं संध्योपासनस्य गूढतमं रहस्यमधिगतं चेद् वाडवो मोक्षश्रियाऽलंकृतो भवेत्। वयं यथासंभवं नैकदेवतानामुपासनं कुर्मः किंतु तासु देवतासु संध्योपासनस्य सारो विराजत इति न विस्मः। तथा हि—

ब्रह्मणोपासिता संध्या विष्णुना शंकरेण च।
कस्तां नोपासयेद्देवीं सिद्धिकामो द्विजोत्तमः॥

यो नोपासयेत्स द्विजाधम इत्यर्थः। तथा—

ब्रह्मणो हृदयं विष्णुर्विष्णोरपि शिवः स्मृतः।
शिवस्य हृदयं संध्या तेनोपास्या द्विजोत्तमैः॥ इति।

अत एवोपनयनसंस्कारेण द्विजत्वसिद्ध्यनन्तरं यावज्जीवं सायं प्रातः संध्योपासनं विधेयं विप्रैरिति सिध्यति। इदं नियतं धर्मकर्म ज्ञानपूर्वकं यथाविधि निर्वर्तितं चेज्जननमरणपरम्पराया मोचकं भूत्वा निश्चयेनामरत्वप्रापकं भवति। ये वेदविदो वाडवाः शान्तस्वान्तेन यथाविधि संध्योपासनमनुतिष्ठन्ति ते कायिकादिदुरितं विधूय पूताः सन्तः परमं पदं यान्ति। ये तु संध्यायास्तत्त्वमज्ञात्वा तां नानुतिष्ठन्ति ते जीवदवस्थायामेव ब्राह्मण्याद् भ्रष्टा जायन्त इति शास्त्रसिद्धान्तः। तदुक्तम्—

मौञ्जीबन्धनमारभ्य सायं प्रातश्च नित्यशः ।
संध्योपास्तिरनुष्ठेया यावत्प्राणविमोचनम् ॥
संध्यामुपासते ये तु सततं संशितव्रताः ।
विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम् ॥
तथा—संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ।
यदन्यत्कुरुते कर्म न तस्य फलभाग्भवेत् ॥
संध्या येन न विज्ञाता संध्या येनानुपासिता ।
जीवन्नेव भवेच्छूद्रो मृतः श्वा चाभिजायते ॥ इति ।

अत एवेदं संध्योपासनमा उपनीतबटोरा च वृद्धं सर्वेषामेव यावज्जीवं कर्तव्यं कर्म विद्यते प्रत्यहं सायं प्रातश्च ।

इदं संध्योपासनं तदुपासकानां मनसि विशुद्धसंस्काराधानेन तदीयं चित्तमुदात्तं ज्ञानग्रहणसमर्थं च कुरुते । चित्तोन्नत्या च संध्याया निगूढं तत्त्वं शनैः साक्षादनुभूयते । उपासकाश्च कृतकृत्या जायन्ते । परमिदं सर्वमन्ततः स्वानुभवगम्यमेव । मूकेन खण्डशर्करायां जग्धायां यद्यपि तस्या माधुर्यं तेन वर्णयितुं न शक्यते तथाऽपि तदास्वादजमानन्दं सोऽनुभवत्येव । तद्वत्संध्यावन्दनजं समाधानं तदनुष्ठातैव प्राप्नुयान्नान्यः । तस्मादिच्छा चेद्यथाविधि संध्यावन्दनं कृत्वैव तत्समाधानमनुभवतेत्येवोत्तरं संध्या कुतः कार्येति पृच्छकं प्रति ।

संध्या कुतः कार्येति पृच्छद्भिः संध्योपासनस्य संकल्पो ज्ञातश्चेत्तस्य तुच्छतरप्रश्नस्य यथार्थमुत्तरं तैर्लभ्येत । संकल्पे " ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं " संध्यावन्दनं कार्यमिति स्पष्टमेवोपदिष्टम् । अयं संकल्प एव आधुनिकानां स्वैराचाराणां मनांसि प्रकामं व्याकुली कुर्यात् । अस्मिन् संकल्पे हि भारतीयार्यसंस्कृते रहस्यं समासतः समनुस्यूतं दृश्यते । तद्यथा—जीवजातेनेदं मानुषं जन्म पुण्यपापयोर्व्यतिकराल्लभ्यते । नैकजन्मार्जितपापचयमादायैव जीवो मानुषयोनावागच्छति । तन्निकटे यदि केवलः काम्यकर्मोत्पन्नः पुण्यचयोऽभविष्यत्तर्हि स स्वर्गमगमिष्यत । तथा यदि केवलः पापचयोऽवर्तिष्यत तर्हि नारकीयं दुःखमेवाभोक्ष्यत । " उभाभ्यां पापपुण्याभ्यां मानुष्यं लभतेऽवशः " इति शास्त्रसिद्धान्तात्पुण्यमिवोपात्तं दुरितमादायैवायं जीवो मानुषयोनौ जनिं गृह्णातीति निश्चीयते । वेदाद्युपदिष्टं पन्थानं विहाय कुपथेन यद्वर्तनं तत्सर्वमधःपातयतो दुरितस्य नाम पापस्योत्पादकम् । तस्य पापस्य निष्कृतिर्नाम श्रद्धया शास्त्रविहित-

धर्माचरणेन निषिद्धाचरणोत्थितान् कुसंस्कारान् निःशेषं निरस्य चित्तस्य निर्मलीकरणम् । चित्तं च पापपुण्याभ्यामाविद्धमेव पारमेश्वरानुग्रहसंपादनसमर्थं भवति नान्यथा । चित्तमन्दिरे स ऐशानुग्रहाख्यः प्रकाशोऽस्त्येव । किंतूपात्तदुरितान्धतमसेन भृशमाच्छादितः सः । अतस्तस्यान्धतमसस्योच्छेदं प्रतीक्षते स प्रकाशः । चिराय शास्त्रितेन पौरुषेण समूलमुन्मूलितेऽन्धतमसे सच्चिदानन्दस्य भगवतोऽनुग्रहाख्यः स प्रकाशो जीवोपरि निष्प्रतिबन्धं प्रवर्तते । एतावता जीवस्य मानुषयोनौ जननं पुण्यपापयोः फलम् । तत्रोपात्तदुरितस्य निःशेषं निरसनं यथा स्यात्तथा वर्तनं तस्याऽऽद्यं कर्तव्यम् । उपात्तदुरितक्षयः श्रीभगवदनुग्रहस्य मुख्यं साधनम् । स च क्षयः संध्योपासनप्रमुखेण यथाविधिधर्माचरणेनैव भवतीति भगवदनुग्रहसंपादनमेव मनुष्यजन्मन इतिकर्तव्यम् । इत्येवमर्थजातं संध्योपासनसंकल्पः सूचयति ।

परकीयसंस्कृत्यपहृतमतयः केचनाऽऽधुनिका मर्त्याः पुनर्जन्म नाङ्गीकुर्वन्ति । पित्रोः कामवासनां विहायान्यत् किमप्येतज्जन्मनो बलवत्तरं कारणमस्तीति भावना स्वप्नेऽपि तेषां मनसि नोदेति । आचण्डालं सर्वेऽपि मनुष्या जन्मतस्तुल्या एव । तेषामवान्तरप्रकारा बाह्यपरिस्थित्या संवृत्ताः । तस्यां संशोधितायां मनुष्यमात्रं सुखि सद्गुणि च स्यात् । सुखस्य परा काष्ठा त्वेतज्जन्मावधिका, एतज्जगदवधिका च वर्तते । परमेश्वर इति न कोऽप्यस्मिन् जगति विद्यते । यतः प्रयोगशालीयनलिकायन्त्रे भौतिकशास्त्रनिष्णातानां नाद्यापि स उपलभ्यते । तस्माद्गगनकुसुमायमानस्य तस्य कीदृशोऽनुग्रहः संपादनीय इत्येवमन्धा तेषां विचारसरणिरुल्लसति । तेषां महाशयानां दिनचर्या तु—सूर्योदयानन्तरं कथंचिज्जागरितव्यम् । तल्पे स्थित्वैव प्रथमं किंचित्पयःशर्कराविमिश्रं पत्रकषायपानं कर्तव्यम् । ततः काष्ठासने ( आरामे ) उपविश्य दैनिकादिवृत्तपत्रेषु मुद्रिता जागतिका वादविवादाः, अपघाताः, अपमृत्यवः, इत्येवमाद्यश्चित्तक्षोभकर्तारो वृत्तान्ताः पठितव्याः । ततः पिपासायां पुनरप्येकवारं कषायपेयपानं कार्यम् । किंवा विक्रेतुः सकाशात् क्रीतानि तैलपाचिताः कंदर्पयुक्तास्तिक्तप्रधानाः पदार्थाः शाका उच्छलयो मिश्रणानि चेत्येवमादीन्यनार्यभक्ष्याणि निःशङ्कं भक्षितव्यानि । आपणे वा तद्वालये गत्वा तत्र खादितव्यानि । ततः क्षुरं गृहीत्वा स्वयमेव श्मश्रुः कर्तव्या । एवं यथेच्छमोष्ठोत्थितानां रोम्णां समग्रमर्धं वा कर्तनं विधेयम् । अवसरश्चेत्स्नानं कार्यम् । न चेत्तुण्डमात्रं प्रक्षाल्य शिरः संमार्ज्य च किमपि जग्ध्वा तूर्णं कार्यालये ( ऑफिस ) गन्तव्यम् । सायंसमये गृहमागत्य गृहे निर्मितं किंवा खाद्या-

त्यान्मूल्येनाऽऽनीतमद्यादिकं जग्ध्वा पीत्वा च क्रीडालये गन्तव्यम् । अथवा नीरुजि वातावरण आरोग्यार्थं हिण्डनं कार्यम् । किंवा कॅरम्ब्रीजप्रमुखया क्रीडया कालो यापनीयः । तदभावे सायंकालिकानि वृत्तपत्रादीनि धूम्रपानीयम-ग्निहोत्रमित्यादि नित्यं कर्म वर्तत एव । तत्राप्यन्तराऽन्तरा चित्रपटनाटकावव-लोकनं कर्तव्यम् । ततो यथाकालं स्वप्तव्यमित्येवमात्मानं सुशिक्षितं सुधारकं च मन्यमानानामाधुनिकानां पुंसां दैनंदिनो वर्तनक्रमः प्रायशो दरीदृश्यते । तत एवायं संध्योपासनसंकल्पस्तेषां मनःसु कुठारायिताऽऽस्ते । यावदयं सांप्रतिक उक्तविधः पुंपुञ्जस्तारुण्यादीनां मदेन विपर्यस्तबुद्धिमत्तया च प्रकामं ग्रस्तस्ताव-त्संध्योपासनस्य प्रकृतं रहस्यं तेनाधिगन्तुमशक्यम् । यदा तु प्रतिकूलपरिस्थितेः प्रहारोपरि प्रहारास्तेषामुपरि पतेयुस्तदानीं तेषां स उन्मादः किंचिदपगच्छेत् । तथा सति तैरनङ्गीकृतमपि प्रागभवीयं तेषां सुकृतं तेषूपकर्तुं केनापि धर्मशीलेन सह तेषां संगतिं साधयेत्तदैव तेषामनुततं चित्तं सनातनधर्मस्य भव्यं स्वरूपं ज्ञातुं शनैः समर्थं भवेत् । तावत्सिंहसूकरसंवादन्यायावलम्बनमेव सम्यक् ।

अस्य मानुषजीवनस्य प्राधान्येन निर्वर्तनीयं ध्येयं किमिति निर्णयात्प्राक् तस्य स्वरूपागम आवश्यकः । अहं कः । यत्र जगति मया जनिर्गृहीता तस्य जगतोऽन्तःस्वरूपं कीदृक् । तस्य मम च कोऽपि संबन्धोऽस्ति न वा । अस्ति चेत्स कीदृशः । इत्यादीनामधिगमेन स्वीयजीवनस्य प्रागुक्तं ध्येयं किमित्यस्य शान्तचित्तेन विमर्शं कर्तुं क्षमा भूमिका यदा तस्मिन्नुत्पद्येत तदानीमेव संध्योपा-सनस्य संकल्पः स्वीयज्ञानार्कस्य सुप्रकाशस्तस्मिन् पातयेत् । यस्य पुण्यवतः पुंसो जगदधिष्ठाता सर्वज्ञः परमेश्वरो जीवानां पुनर्जन्म प्रागुपात्तदुरितादिकमि-मानि शास्त्रोपदिष्टानि परमगभीराणि तत्त्वानि सद्गुरूपदेशतो बुद्धावारूढानि भवितुं शक्यानि तं भाग्यवन्तं नरं प्रति प्रकृतः संध्यावन्दनसंकल्पस्तस्याऽऽयुषो यदि-तिकर्तव्यं तच्च केन पथा निर्वर्तनीयमित्यस्य प्रत्यहं प्रतिबोधं ददाति । निय-तसमये प्रत्यहं ध्येयस्योच्चारणं ध्येयस्मरणदृष्ट्या कियदुपकारकमित्येतद्विवेकिना पुंसा प्रयासं विनाऽपि ज्ञातुं शक्यम् । चित्ते चिरायाऽऽबद्धमूलाः पापसंस्काराः कथमु-च्छेद्या इत्यस्य विमर्शोऽवश्यं कर्तव्यः । पापसंस्कारान्निर्मूलयितुं संध्योपासकेनान्त-र्मुखेण भूत्वाऽऽत्मनिरीक्षणं कार्यमित्युपदिष्टम् । रात्रावहनि वा मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना यद्यत्पापं कृतं स्यात्तत्सर्वं रात्रिदेवताया अह-र्देवतायाश्च कृपया विलयं यातु । तेभ्यः पाप्मभ्यः सूर्यादिभिर्देवताभिर्मम संरक्षणं कार्यमित्यर्थको मन्त्रो मन्त्राचमने विनियुक्तोऽस्ति । कायादिना यद्यत्पापं प्रमा-दतः क्रियते तदर्थमनुतापः परमेश्वरस्य प्रार्थना चेत्ययमेव तदुच्छेदस्य पुनरनुत्पत्तेश्च

प्रधानोपायः । श्रद्धया संध्योपासनं कुर्वतामास्तिकानां हृद्यैवमात्मानिरीक्षणं सहजत एव संभवति । तेन ते समुन्नतिपथस्य पथिका भवन्त्येवं मङ्गलप्रदेयं सरणिर्विद्यते । इत्थं पापनिवृत्तौ सत्यां " इदमहममृतयोनौ सूर्ये ज्योतिषि जुहोमि स्वाहा " इतिमन्त्रेण स संध्योपासकः पावने सौरे ज्योतिषि स्वस्य हवनं विदधाति । वास्तवं हौता( त्रा )त्म्यमात्माहुतिर्वेयमेव । इत्थमात्मनो हवने कृते स हवनकर्ता सवितृमण्डलवर्तिनो नारायणस्य तादात्म्यं न प्राप्नुयात्किम् । एवमात्मनो हवनानन्तरं तस्य पृथगस्तित्वं कथमिव संभवेत् । तस्य जीवनं सर्वथा धर्ममयं नाभूत्किम् । स्वीयापूर्णजीवनस्य तस्मिन् पूर्णे परमात्मनि यदाहुतिप्रदानं तत्पूर्णत्वसंपादनस्य प्रशस्तः पन्था न विद्यते किम् । अपि त्वेतत्सर्वं विद्यत एवेति निश्चप्रचम् ।

संध्योपासनप्रयोगस्य कोऽप्यंशो विमृष्टश्चेत्सोऽत्युदात्ततत्त्वैः परिपूर्णः शास्त्रपूतश्चास्तीति ज्ञायेत । आद्याचमनमारभ्य गुरुवन्दनं यावत्सर्वेष्वपि विधिषु समुदात्तभावनानामावापः प्राचुर्येणोपलभ्यते । मनुष्यमात्रे सद्गुणानां संवर्धनं नाल्पप्रयत्नलभ्यम् । मनसि निसर्गतो बद्धमूलं दुर्गुणैरापातरमणीयेन च कामादिना साकमनवरतं संयुध्य ताञ्जित्वैव सद्गुणानां संवर्धनं कर्तव्यम् । नेयं प्रक्रिया तूर्णं भवित्री । किंच सम्यग्वस्त्ववबोधे सत्यपि सद्वर्तनं भवत्येवेति नियमो लोकव्यवहारे नोपलभ्यते । ' वक्तुं सुकरं कर्तुं परं दुष्करम् ' इत्येतादृशी परिस्थितिरिदानीं प्रायशः सर्वत्रावलोक्यते । अथापि स्वात्मानं स्वकुलं स्वदेशं वा समुन्नेतुमिच्छाद्भिः पुरुषधुरीणैः पुंमनसो दौर्बल्यं दुर्गुणानां च रंहोऽवलोक्य गलितधैर्यैर्न भाव्यम् । प्रबलमपि तद्यत्नतो घातयितुं शक्यम् । तद्विघातकोपायः परमप्रमादेन सदा विधेयः । दुर्गुणान् फलतो ज्ञात्वा धीरतया तेषां निरसनयत्नाभ्यासः सद्गुणांश्च स्मृत्वा तत्संवर्धनाभ्यासश्चेत्येतत्कार्यद्वयं जागरूकतया नियमतः कर्तव्यम् । जात्वपि नोपेक्ष्यम् । अत एवाऽऽत्मनिरीक्षणात्मसमर्पणयोः सुमधुरं संमिश्रणं मन्त्राचमनविधौ कृतं दृश्यते । अत्रेदं बोध्यम्—संध्योपासनेन सर्वेषां समानैवोन्नतिर्भवेदिति न नियमः । यतः सर्वेषां प्रागुपात्तं सुकृतं दुरितं वा तुल्यमिति वक्तुमशक्यमेव । यस्य दुरितमेवाधिकं तस्योन्नतिर्विलम्बेन स्यात् । यस्य तदल्पं पुण्यं च प्रचुरं तस्य शीघ्रं भवेत् । यथा गुरुः सर्वानेव शिष्यान्प्रति समानमेव शिक्षणं ददाति । किंतु तस्य शिक्षणस्य परिपाको ग्राहकमत्यनुसारं पृथगेवोपलभ्यते । न्यूना समधिका वा शीघ्रं विलम्बेन वा भवतु परं शिक्षणे-

नोन्नतिर्भविष्यत्येवेति निःसंदिग्धम् । तथा संध्योपासनानुष्ठातुरप्युन्नतिः स्यादेव । किंतु यथाधिकारं तूर्णं विलम्बेन वा स्वल्पाऽधिका वा प्रतिबद्धा वा भवेदिति न विस्मर्तव्यम् । तथा फलेऽपि तारतम्यमपरिहार्यम् । वस्तुतः शास्त्रोपदिष्टे पुण्ये कर्मण्यविश्वासस्तत्र 'प्रवर्तकश्रद्धास्तिक्यबुद्ध्यादेरभाव एव च महत्पापम् । तदेव चोन्नतेः प्राधान्येन प्रतिबन्धकम् । तदुक्तम्—

अश्रद्धा परमं पापं श्रद्धा पापप्रमोचनी ।

जहाति पापं श्रद्धावान् सर्पो जीर्णामिव त्वचम् ॥ इति ।

अत एव सदाचारे सच्छास्त्रे च श्रद्धाऽत्यावश्यकी । यत्किंचिदपि विचारमकृत्वा मौढ्येन गतानुगतिकत्वमाश्रित्य निरर्थकमिदं संध्योपासनं कालापव्ययकारकमिति निरर्गलं प्रलपन्तोऽपि केचनोत्तमवर्णीया दृश्यन्ते । ते तथैव प्रावृट्कालीनदर्दुरवदाक्रोशं कुर्वन्तु नाम । किंतु सुविचारितेऽस्मिन्संध्योपासनविधौ तदन्तर्गतः कोऽपि विधिर्निरर्थक इति कथनं केनापि विवेकिना प्राज्ञेन कर्तुमशक्यमेव । आसनम्, आचमानं, प्राणायामः, संकल्पः, मार्जनम्, अघमर्षणं, मन्त्राचमनम्, अर्घ्यदानं, जपः, उपस्थानं, दिग्वन्दनं, गोत्रनामोच्चारणं, गुरुप्रणाम इत्येवमादिषु विधिषु कोऽपि विधिर्निरर्थक इति वक्तुं न केनापि पार्येत । प्रत्येकमपि विधिः सुविचारपूर्वकं संध्योपासनप्रयोगे समावेशितः प्रत्नैराचार्यैः । अस्मिन् संध्यावन्दनयज्ञे योगशासनमस्ति । मन्त्रशास्त्रं विद्यते । भगवतो भक्तिर्विराजते । पूर्वेषां स्मरणमुल्लसति । अन्तर्बाह्या शुद्धिः समुज्जृम्भते । वाङ्मनःकायान् संशोधयितुं बहव उपाया अस्मिन् संध्योपासनविधौ संयोजिताः सन्ति । एतदन्तर्गताननेकविधशास्त्रबीजभूतान् विधीनुद्दिश्य गभीरविचारसंबद्धा महान्तो ग्रन्थाः पूर्वाचार्यैः प्रणीताः । किं बहुना प्रणवसदृश एकाक्षरमन्त्रे श्रुतिस्मृतिपुराणेतिहासादीनां सर्वस्वं परमार्थतः समुल्लसति । अस्मिन् प्रणवे पिण्डब्रह्माण्डयोर्विमर्शः समाविष्टोऽस्ति । तथा मानुषकं कृतार्थयन्त्यमृता विद्युच्छक्तिरत्र प्रणवे प्रस्फुरति । परं समस्तस्यास्य संध्योपासनरहस्यस्याऽऽकलनं मन्दमतेः कथं स्यादित्यालोच्योच्चारणमात्रेण मनआदेर्वैशुद्ध्यं यथा स्यात्तथा सद्योजना संध्योपासन प्रयोगे प्रत्नैराचार्यैः कृताऽस्ति ।

तथा हि—इदं संध्यावन्दनं सुस्नातेनैव कर्तव्यमिति नियमः । तेन तत्कर्तुः प्रत्यहं स्नानं कुर्विति पृथगुपदेशो नाऽऽवश्यकः । आचमनेनान्तःशुद्धिर्जायते । तदुक्तम्—" हृद्गाभिः पूयते विप्रः " इति । तच्चाऽऽचमनं भगवन्नामोच्चारणपुरःसरं-

विधेयम् । भगवन्नाममाहात्म्यमभिधातुं सहस्रमुखः फणिराडप्यसमर्थः । तत्रेतरेषां का कथा । अथापि प्रत्नैर्महात्मभिः स्वानुभवेन दिङ्मात्रं तदित्थं प्रदर्शितम्—

कृष्णेति मङ्गलं नाम यस्य वाचि प्रवर्तते ।
भस्मी भवन्ति तस्याऽऽशु महापातककोटयः ॥
नारायणेति मन्त्रोऽस्ति वागस्ति वशवर्तिनी ।
तथाऽपि नरके घोरे पतन्तीत्येतदद्भुतम् ॥ इति ।

केशवादिचतुर्विंशतिनाम्नां परमार्थप्रकाशकानि भाष्याणि प्रत्नैराचार्यैः प्रणीतानि । तत्र नमःशब्दस्य विवेचनं सूतसंहितायामित्थं प्रदर्शितम्—

नमःशब्दो नमस्कारवाचकः परिकीर्तितः ।
प्रह्वतालक्षणः प्रोक्तो नमस्कारः पुरातनैः ॥
प्रह्वता नाम जीवस्य शिवात्सत्यादिलक्षणात् ।
भेदेन भासमानस्य मायया न स्वरूपतः ॥
संबन्ध एव तेनैव सोऽपि तादात्म्यलक्षणः ॥ इति ।

इत्थं संध्याप्रयोगान्तर्गतस्य प्रत्येकं शब्दस्यार्थदृष्ट्या विमर्शे कृते तेभ्यः शब्देभ्यः सामान्यबुद्धेरगम्यस्य परमोदात्तज्ञानस्य भव्या निर्झराः कथं प्रवहन्तीत्येतच्छास्त्रकृद्भिर्विविच्य संप्रदर्शितम् । तेषामनुभवपर्यवसायित्वं चोपदिष्टम् । अतः श्रद्धया ज्ञानपुरःसरां संध्योपास्तिं कुर्वतां तस्मिन् गूढानि रहस्यानि सुव्यक्तानि फलप्रदानि च भवेयुरिति निःशङ्कं वक्तुं शक्यम् ।

संध्यानुष्ठाने प्राणायामः कार्योऽस्ति । यद्यप्याधुनिकाः केचन शारीरबलदृष्ट्या प्राणायामस्य महत्त्वं वर्णयन्त्यथापि तस्य चित्तशुद्ध्या सह साक्षात्संबन्धः कथं विद्यत इत्येतज्जानन्ति न वेति संशेते नश्चेतः । अतस्तं शास्त्रानुसारं विशदी कुर्मः । प्राणायामस्य परमार्थत उपयोगस्तु चित्तशुद्धिरेव । चित्तप्राणयोरन्तरङ्गः संबन्धो वर्तते । तदुक्तम्—'प्राणैश्चित्तं सर्वमोतं प्रजानां तस्मिन् विशुद्धे विभवत्येष आत्मा । प्राणायामाद् भवति मनसो निश्चलत्वं प्रसादः'। तथा महामोहमयेनेन्द्रजालेन प्रकाशशीलं सत्त्वमावृत्य तदेवाकार्ये नियुज्यते । तदस्य प्रकाशावरण कर्मसंसारनिबन्धात्प्राणायामाद्दुर्बलं भवति । तपो न परं प्राणायामात् । ततो विशुद्धिर्मलानां दीप्तिश्च ज्ञानस्येति प्राणायामस्य महत्त्वं पातञ्जलयोगशास्त्रे समुपवर्णितम् । अत एवाष्टमवर्षमारभ्यैव द्विजबटुभ्यः प्राणायामस्य दीक्षा दीयते । सा निष्प्रयोजनेत्यमूढेन केनापि वक्तुं पार्येत किम् । यदि द्विजैः स्वीयवर्णाभिमानपुरःसरमुपनयनसंध्यावन्दनादिवैधकर्मानुष्ठानपरम्परा सम्यगरक्षिष्यत तर्हि विप्रसमाजस्येदानीमिवावनतिः कदाऽपि नाभविष्यत् ।

सोऽयं प्राणायामः कथं कार्यस्तत्तद्विज्ञेभ्य एव ज्ञेयम् । अस्मिन् प्राणायामे प्रणवस्य विनियोगो वर्तते । तस्य प्रणवस्य परं ब्रह्म ऋषिरस्ति । परमात्मा देवता विराजते । दैवी गायत्री छन्दः समुल्लसति । तथा सप्तव्याहृतीनां गायत्रीमन्त्रस्य गायत्रीशिरसश्चापि प्राणयामे विनियोगोऽस्ति । सप्तव्याहृतयो नाम सप्त लोका विद्यन्ते । अयं भूर्लोकस्तदन्तर्गत आद्यो लोकः । ते चोत्तरोत्तरं उन्नता वर्तन्ते । तत्र त्रिषु भूर्भुवःस्वर्लोकेष्वभ्युदयस्य परा काष्ठा मानुषैः संपादयितु शक्या । शास्त्रविहितकर्मानुष्ठातारः स्वीयकर्मानुसारं तेषु त्रिषु लोकेषु संचरन्ति । यथाधिकारं भोगं भुञ्जते च । अथापि पुण्यकर्मणा प्राप्यमाणस्तत्रत्यो भोगः सुखमयोऽपि विनश्वर एव । भोगेन कर्मणः क्षये सति पुनरप्यस्मिन्मर्त्यलोके जननमपरिहार्यम् । तस्माद्येन शाश्वतं सुखमपेक्ष्यते तेनेदं त्रिलोकीसुखं पश्चात्कृत्योपरितनेषु महर्जनस्तपःसत्येषु चतुर्षु लोकेषु दृष्टिक्षेपः कार्यः । एते क्रममुक्तेर्लोकाः सन्ति । शास्त्रविहितनिष्कामकर्मानुष्ठानेनैव तेषां द्वाराण्युद्घाट्यन्ते । यस्त्वात्मरतिः साधनचतुष्टयसंपन्नः पुमान् स इमानपि लोकान्नैव गणयति । किंतु तानुपेक्ष्य निरतिशयं शाश्वतं पौरुषं विधाय " न तस्य प्राणा उत्क्रामन्ति । इहैव सर्वे समवलीयन्ते । अत्र ब्रह्म समश्नुते " इति श्रुत्युपदिष्टं महाफलमाप्नोति । इत्येवं मानवोन्नतेरादर्शभूतो विश्वविस्तारोऽभ्युदयस्यान्तिमं फलं चोपनयनसंस्कारसंस्कृतस्य बटोः पुरतः संध्योपासनं संस्थापयति । एतच्चिन्तनेन तदनुकूलाचरणेन च येन कालो याप्यते तस्यान्तर्दृष्टिः कियती निर्मला स्यादिति विचार्यताम् । अयं पवित्रतमो ज्ञानस्येशानो यया भविष्यति तां प्रत्नैराहृतां भव्यां सरणिं पश्यत । तथैदानीतनं स्वैराचारस्योपबृंहकं पापमयमुदरंभराणां क्षुद्रं वाग्जालं चावलोकयत । तथा भूसुरैः प्रशान्तः प्रातःसमयः संध्योपास्तौ याप्य उत रथ्यासंमार्जयित्रा साकं स्पर्धायां याप्य इत्यस्य विमर्शं च कुरुत । आस्तां नामेदम् । प्रकृतं ब्रूमः । प्रस्तुतस्यास्य प्राणायामानुष्ठानस्य फलमपि महद्वर्तते । तथा हि—

दह्यन्ते ध्मायमानानां धातूनां हि यथा मलाः ।
तथेन्द्रियाणां दह्यन्ते दोषाः प्राणस्य निग्रहात् ॥
मानसं वाचिकं पापं कायेनैव तु यत्कृतम् ।
तत्सर्वं विलयं याति प्राणायामत्रये कृते ॥ इति ।

अथ मार्जनाघमर्षणगायत्रीजपानां विमर्शं कुर्मः । अत्युदात्ततत्त्वानामसकृदुच्चारणं तानि तत्त्वानि स्वीयविचारस्य यथा लक्ष्याणि भवेयुस्तथा प्रयतनं तेषां

निदिध्यासश्चेत्येवमयं स्वीयान्तःकरणे तेषां प्रतिफलनस्य मुख्योपायः। तेनोपायेन मनसि दृढमूलानि तानि क्रमशः कृताववतरन्ति। सदाचारो मनसि बद्धमूलानां शुभसंस्काराणां परिपाकोऽस्ति। आचारो विचाराणामुद्भूतं स्वरूपं विद्यते। तस्मादाचारबीजभूतस्य विचारस्याऽऽदौ संशोधनं विधेयम्। तदर्थं मनसि शुभाः संकल्पा निर्मातव्याः। "तन्मे मनः शिवसंकल्पमस्तु" इत्यस्या वैदिकप्रार्थनाया इदमेव रहस्यं ज्ञेयम्। एकतो मोहादिवशात्पापाचारमुद्दिश्य प्रधावतामिन्द्रियाणां महता प्रयत्नेन दमनं कर्तव्यम्। अन्यतश्च शुभान् संकल्पानुद्दिश्य स्वकीयविचाराणामोघः प्रवर्तितव्य इत्ययं मानवाभ्युदयस्य प्रशस्तः पन्थाः। "मननात् त्रायते" इति मन्त्रशब्दस्यार्थः सुप्रसिद्धः। मनस्यनवरतं शुभसंकल्पैः समागन्तव्यं कुसंकल्पानां किंचिदपि स्पर्शो न भाव्यः। इयमेव मनस उन्नतावस्था ज्ञेया। तत्सिद्ध्यर्थं प्रत्यहं स्वल्पोऽपि समयो न यापनीयः किं मनुष्याभिमानिना। सांसारिकं सर्वं व्यवहारजातं क्षणं विस्मृत्य शान्तचित्तेनैकान्ते प्रातः सायं श्रद्धापुरःसरं यथाविधि संध्योपास्तिः कृता चेत्समुन्नतिर्न स्यादिति कः समीक्ष्यकारी पुमान् वक्तुं शक्नुयात्।

दिनरजन्योः संधिरेव संध्यां कर्तुं योग्यः समयः। तस्मिन् काले चित्तं तूर्णमेकाग्रं भवितुमर्हति। एकाग्रावस्थायां कृतं ध्यानमेवेष्टफलदं भवितुमर्हति। ध्यानकरणमेव संध्योपासनशब्दस्यार्थः। तस्मादिमं सर्वथामङ्गलप्रदं विधिं ये नानुतिष्ठन्ति ते स्वात्मानं घातयन्तीत्यभिधातुं न कोऽपि प्रत्यवायः। उक्तं हि—

नोपतिष्ठन्ति ये संध्यां स्वस्थावस्थासु वै द्विजाः।
हिंसन्ति ते सदा पापा भगवन्तं दिवाकरम्॥
ये हिंसन्ति द्विजाः सूर्यं मोक्षद्वारमनुत्तमम्।
कथं मोक्षस्य संप्राप्तिर्भवेत्तेषां द्विजन्मनाम्॥ इति।

"असावादित्यो ब्रह्म" इति ध्याता स्वयं तत्तादात्म्यं प्राप्तुं प्रभवतीति श्रुतेस्तात्पर्यार्थः। इत्थमिदं संध्योपासनस्य माहात्म्यं विद्यते। अत एव संध्योपास्त्या जीवितसाफल्यं जायत इति सिध्यति। एतावता शुभसंकल्पमुत्पादयतां मन्त्राणां महत्त्वमप्यधिगतं भविष्यत्येव। दुर्वासनानां तन्मूलकदुराचाराणां च निरसनपूर्वकाभ्युन्नतेः संध्योपास्तिराद्योपायः। अतस्तत्र मन्त्राणामुच्चारणं जपो ध्यानमेवमादयः प्रकाराः कदाऽपि नोपेक्ष्याः। उच्चारणमननाभ्यां वाङ्मनसे संशोध्य मन्त्रस्तारयति। "तज्जपस्तदर्थभावनं च" इति पातञ्जलसूत्रान्मन्त्रप्रति-

पाद्यदेवतयास्तादात्म्ये जपस्योपयोगो बोद्धव्यः । विजातीयं प्रत्ययं निरस्य सजातीयप्रत्ययसातत्यं ध्यानात्सिध्यति । तेनोपासक उपास्यसारूप्यं ध्याता वा ध्येयसारूप्यमाप्नोति । इदं न केवलं परोक्षं किंत्वपरोक्षमित्यपि बोध्यम् । यद्यदिह सुखकरमपेक्ष्यते मानवेन तत्सिद्ध्यर्थमादौ देवतासंकीर्तनमावश्यकमेव । अन्नं, आरोग्यं, धनं, प्रज्ञां, तेजः, ज्ञानमित्यादि यथासंभवं मानवः प्रार्थयति । मार्जनमन्त्रे सर्वमिदं संप्रार्थितं दृश्यते । तथा हि–हे आपः, यतो यूयं सुखं प्रापयित्र्यः स्थ ततोऽस्मान् प्रत्यन्नादिदात्र्यो भवत । अस्मिन् जगति यत्पूज्यं रमणीयं च वर्तते तद्दर्शनेऽस्मान् समर्थान् कुरुत । युष्मासु यः कल्याणप्रदो रसो विद्यते तमस्मभ्यं समर्पयत । वयं पापक्षयार्थं युष्माञ्शिरसि सिञ्चामः । अस्मान् पुत्रपौत्रादिमतः कुरुत । तथा सर्वा ओषध्यो जगन्मङ्गलकरोऽग्निश्च यास्वप्सु तिष्ठति ताभिरद्भिरस्मच्छरीर उत्पन्नानुत्पत्स्यमानांश्च रोगान् प्रध्वंसयत । तेन वयं नीरोगाः सन्तश्चिराय भगवन्तं सूर्यं द्रक्ष्यामः । हे आपः, यत्किंच मयि दुरितं स्यात्तद्दूरं नयत । तथा येन केनापि साकं मया द्रोहो मिथ्यावर्तनं वा कृतं स्यात्तदप्यपनयत । भो जलस्थवह्ने त्वं मां तेजस्विनं कुरु । इत्याद्यर्थकानां मन्त्राणां समुच्चारणेनात्युत्कृष्टाः कियन्तः संस्काराः संध्योपासके स्युरिति सत्यां बुद्धौ विचार्यताम् । ततो " भद्रं नो अपि वातय मनः " अनेन मन्त्रेणास्मिन्मनसि शुभां प्रेरणां कुर्विति प्रार्थना क्रियते ।

मार्जनानन्तरमघमर्षणं कर्तव्यमस्ति । अघमर्षणं नाम स्वस्मिन् वर्तमानं पापपुरुषं वामनासापुटेन बहिर्निष्काश्य वामभागे शिलायां निक्षिप्य तस्य हननम् । स कथं हन्तव्यस्तदर्थमेवास्मिन्सूक्ते विश्वस्योत्पत्तेर्विचारः प्रस्तुतोऽस्ति । परमेश्वरादिदं जगत्कथमुत्पद्यते । तस्याऽऽविर्भावतिरोभावौ कथं भवतः । ऋतं सत्यं तद्भिन्नं च जगत्परमेश्वरस्य ज्ञानस्वरूपात्तपसः कथं जातमित्यस्यातिगभीरो विमर्शोऽस्मिन्सूक्ते वर्तते । जगतः साकल्येन विचारमन्तरा पापपुरुषस्य स्वरूपं कीदृशं कया विधया स नाशयितव्य इति नैव ज्ञायेत । जीवशिवयोर्वास्तवस्वरूपस्याऽऽच्छादयित्री नामरूपात्मकजगत्स्वरूपेणाऽऽविर्भूता भगवतोऽघटितघटनापटीयसी या माया तस्याः स्वरूपमेवास्मिन्सूक्ते विशदीकृतमित्यपि वक्तुं शक्यम् । अत एव तत्सूक्तं पापविघातकमिति बोध्यम् । अघमर्षणानन्तरं श्रीसूर्यनारायणायार्घ्यप्रदानं कर्तव्यं वर्तते । तच्चाऽऽदित्याभिमुखो भूत्वाऽञ्जलिस्थमर्घ्योदकमूर्ध्वं प्रक्षिपेदिति । गायत्रीमन्त्रेणाभिमन्त्रितत्वात्तज्जलं वज्रात्मना परिणतं भूत्वा सूर्यरथोपर्याक्रमणं कुर्वतां

त्रयस्त्रिंशत्कोटिसंख्याकानां मन्देहनाम्नां रक्षसां विध्वंसं कुरुत इति सामवेदीयच्छान्दोग्योपनिषदि श्रूयते । योगीश्वरो याज्ञवल्क्यो महर्षिरपीत्थं स्मरति—अर्घ्यप्रदाने निर्वृत्ते ' असावादित्यो ब्रह्मेति मन्त्रमुच्चार्याऽऽत्मानमभितः प्रदक्षिणा कार्येति । अनन्तरमासनविधिरागच्छति । तस्मिन्नासनविधौ हे जगद्धारिणि विष्णुधृते धरित्रि त्वं मां धृत्वा मदीयमासनं पवित्रं कुर्विति प्रार्थना क्रियते । तस्यां प्रार्थनायां संध्याविधिं प्रतिबध्नन्तोऽदृश्यशक्तिसंपन्ना भूतप्रेतपिशाचादय इतो दूरं गच्छन्तु । सर्वेषामविरोधेनेदं धर्म्यं कर्म समारभ इत्युक्तमस्ति । तेन सत्कर्मविघ्नकर्तारः केचनादृश्याः प्राणिनः सन्ति तेषां निराकरणमन्तरेण समारब्धं कर्मान्यूनं भवितुमशक्यमित्यपि संध्योपासकेन ज्ञातुं पार्यते । जगति दृश्यमानाः सर्वे भावा दृश्या एवेति न नियमः । भूतप्रेतपिशाचादयोऽदृश्यस्वरूपेण जगति संचरन्तीति शास्त्रतोऽवगम्यते । तदुक्तम्—

यक्षरक्षःपिशाचांश्च गन्धर्वाप्सरसोऽसुरान् ।
भूतप्रेतानदृश्यांश्च पितॄणां च पृथग्गणान् ॥ इति ।

लोके तथा प्रसिद्धिरप्यस्ति । यद्यपीयं भावना भारतीयेतराणां मनस्यधुना किंचिदङ्कुरिता वर्तत इति श्रूयते तथाऽपि तेषां पिशाचादिस्वरूपं कीदृक्ते स्वस्वकार्यसमर्थाः कदा भवन्ति, तेषां सम्यगसम्यग्वा परिणामो मनुष्यादिषु कथं भवति, तत्कृतदुष्परिणामः केनोपायेन निरसितव्य इत्यादिविशेषस्तैरद्यापि न ज्ञायते । अस्मच्छास्त्रे तस्य सप्रपञ्चं निरूपणं कृतं दिव्यदृष्टिभिः पूर्वाचार्यैः । तामसा जना वाममार्गेण पिशाचादीनां प्रसादं संपाद्य तेभ्यः कामपि क्षुद्रां सिद्धिं लभन्ते । तथा तेषां प्रसादं चिराय स्थिरीकर्तुं नियमितं किमप्यनाचारमपि कुर्वन्ति । किंत्वनाचारेण प्राप्यमाणां क्षुद्रां सिद्धिमिच्छतां तेषां तामसानां तस्मिन्नियमपालने किंचित्त्रुटिः संवृत्ता चेत्तैरुपासितास्ते पिशाचादयस्ताननर्थगर्ते पातयन्तीति प्रसिद्धम् । यद्यप्येतस्मिन् विषये वाचाऽश्रद्धां प्रदर्शयन्तो बहव उपलभ्यन्तेऽथापि तदन्तर्गताः केचन पिशाचादिना [ कृतं ] लोकविलक्षणं चमत्कारं श्रुत्वा कदाचित्स्वयमनुभूत्वा च तदन्वेषणे तन्निरसनोपाये च व्यग्रचित्ता अपि जायमाना दृश्यन्त इत्यपि नाप्रसिद्धम् ।

अदृश्यशक्तिमत्संसर्गवद्दृश्यमनुष्यादिसंसर्गोऽपि पावित्र्यविघातकः । अत एव धर्म्यकर्मविघ्नकर इति शास्त्रसिद्धान्तः । तदुक्तम्—

संलापस्पर्शनिःश्वाससहयानासनाशनात् ।
याजनाध्यापनाद्यौनात्पापं संक्रमते नृणाम् ॥ इति ।

अत एव पतितादिधास्पृश्यवर्णजातिबाह्यमनुष्यादिभिः सह धर्मानुष्ठानसमये भाषणमपि न कार्यमित्युपदिष्टं धर्मशास्त्रे । संभाषणस्पर्शसहासनाशनादिभिरुत्पत्स्यमानेयं पावित्र्यविघातिका शक्तिरदृश्येति तस्यां नास्तिकादयो न विश्वसन्ति । तत एवास्पृश्योद्धारदेवतामन्दिरप्रवेशसहाशनादीनां शास्त्रनिषिद्धानां नरकप्रदसंकरहेतूनां विषयाणां ते नास्तिकादयो मर्त्या दुराग्रहतया पुरस्कारं विदधति । इदं तेषां प्रयतनं "स्वयं नष्टः परान्नाशयति" इति नियमान्न बहिर्भूतमिति ज्ञेयं विवेकिभिः । तथा यद्यददृश्यं तन्नास्त्येवेति सृष्टिनियमस्याभावाददृश्यां शक्तिमुपेक्षयतां तेषामविवेकिनां तच्छक्तिकृतदुष्परिणामस्योपभोगं विना नान्या गतिरस्तीति ज्ञेयं विज्ञैः । एतावताऽस्मादासनविधेः पुण्यकर्मप्रतिबन्धकारिण्योऽदृश्याः शक्तयः किंस्वरूपास्तासां निरासः केनोपायेन कुतश्चाऽऽवश्यकः स इत्यधिगतं भविष्यति ।

आसनविधेरनन्तरं न्यासः कर्तव्योऽस्ति । न्यासो नामाऽऽत्मनोऽङ्गप्रत्यङ्गेषु मन्त्रदेवतासंस्थापनेनोपास्यदेवताऽहमेवेति भावनापादनम् । "शिवो भूत्वा शिवं यजेत्"

अविष्णुः पूजयन्विष्णुं न पूजाफलभाग्भवेत् ।
विष्णुर्भूत्वा यजेद्विष्णुमयं विष्णुरहं स्थितः ॥ इति ।

उपास्योपासकयोरभेदभावनाया इदमाद्यं सोपानमादावारुह्य देवतार्चनं विधेयम् । तदैव तदर्चनं देवता स्वी कुर्यात् । "योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुः" अज्ञेन नामाद्वैतभावनाशून्येन कामादिदोषदूषितचित्तेन च पुंसा यथाविधि देवताराधनं विधातुमशक्यमेव । तदर्थं चित्तमुदात्तं निर्दोषं चापेक्षितम् । तत्सिद्ध्ये देहादिष्वहंममाभिमानं क्षणं विस्मृत्य देवतातादात्म्यं परं चिन्तनीयम् । मानसशक्त्या समुत्पाद्यमानेयं तैजसी सृष्टिः । तस्मादयं न्यासविधिर्दृढभावनया विधातव्यः । सर्वपापप्रणाशकोऽयं वर्तते । आपादमस्तकं स्वशरीरं देवतामयमस्तीति भावना भृशमुदात्ताऽस्तीति किमु पृथग्वक्तव्यं सुधीभ्यः ।

अथ क्रमप्राप्तं गायत्रीजपं विमृशामः । जपो नाम मन्त्रार्थचिन्तनपूर्वकं मनसा वाण्या वा तदावर्तनम् । मनसि दृढं प्रतिबिम्बितेन सद्विचारेण कृतिरूपतया परिणतेन भाव्यमिति मनीषा चेत्तदर्थं स्वीयवाङ्मनःकायानां शक्तिरन्तराविच्छेदं विना दीर्घकालं यावत्तदनुकूलयत्नपूर्त्यै विनियोक्तव्या । तदैव सा भूमिका सुस्थिरा सिध्येत् । तदुक्तं योगशास्त्रे—"दीर्घकालनैरन्तर्यसत्कारासेवितो दृढभूमिः" इति । मननात्त्रायत इति मन्त्रशब्दस्यार्थः प्रसिद्धः । तथा—गायन्तं त्रायसे यस्माद्

गायत्री त्वं स्मृता बुधः " इति गायत्रीशब्दस्यार्थोऽपि सुप्रसिद्धः । " तज्जपस्तदर्थभावनं च " गायत्रीमन्त्रस्याऽऽवर्तनं तदर्थचिन्तनं चेत्येतद्द्वयमप्रमादतः कर्तव्यम् । उक्तं हि विष्णुपुराणे—

स्वाध्यायाद्योगमासीत योगात्स्वाध्यायमावसेत् ।
स्वाध्याययोगसंपत्त्या परमात्मा प्रकाशते ॥ [ इति ]

अस्यार्थस्तत्रैव टीकायां—

जपाच्छ्रान्तः पुनर्ध्यायेद्ध्यानाच्छ्रान्तः पुनर्जपेत् ।
जपध्यानादियोगेन पश्येदात्मानमात्मनि ॥ इति ।

नेदं सहजसाध्यमनुष्ठानम् । यस्य हि प्रशस्ततमं फलं विद्यते तदादरतश्चिराय निरन्तराभ्यासं विना कुतः साधयितुं शक्यम् । स्वभावतो बहिर्मुखं चित्तं प्रयत्नेनान्तर्मुखं, ध्येयवस्तुन्येकाग्रं च विधेयम् । ऐकाग्र्यान्तरायाणां दूरमपसारणं कर्तव्यम् । एतत्सर्वं तदर्थविभावनपूर्वकजपेनैव सिध्यति । परं स जपः श्रद्धयाऽप्रमादेन चानुष्ठेयः । मनो हि निसर्गतश्चञ्चलम् । जपसमयेऽन्यत्र कुत्रचिद्यायात् । आलस्येनाऽऽक्रान्तं वा भवेत् । किंवा—इदं सर्वं निरर्थकमेव, कालस्य शक्तेश्चापव्ययकारकमित्यपि भावयेत् । सत्कर्मणः प्रतिबन्धकर्त्री, अश्रद्धा वा स्वशिरः उन्नमयेत् । एवमादिकं सर्वं विघ्नजालं महता प्रयासेन निरस्य दृढभावनया सम्यगनुष्ठितो गायत्रीजपो निःसंशयं मङ्गलप्रदो भविष्यतीति प्रामाणिको विश्वासः । भगवन्नाम्नो जपं कुर्वतामनुभवोऽप्यत्र प्रमाणं बोध्यः । तदानीं साध्यापेक्षया साधने सर्वथा भरदानमेव श्रेयस्करमित्यवधेयम् । अयं गायत्रीजपो वाचिकोपांशुमानसेति भेदात्त्रिविधो ज्ञेयः । वैखर्या वर्णानुच्चार्य यो जपः क्रियते स वाचिकः । अन्येन यथा न श्रूयेत तथा मन्दं यः क्रियते स उपांशुजपः । मनस्यन्तः क्रियमाणो मानसः । तदुक्तम्—

यः शब्दो बोधजननः परेषां शृण्वतां स्फुटम् ।
स जपो वाचिकः प्रोक्त उपांशोरथ लक्षणम् ॥

ओष्ठयोः स्पन्दमात्रेण परस्याशब्दबोधकः ।
उपांशुरेष निर्दिष्टः साहस्रो वाचिकाज्जपात् ॥

यत्पादाक्षरसंगत्या परिस्पन्दनवर्जितम् ।
चिन्तनं सर्वशब्दानां मानसं तं जपं विदुः ॥ इति ।

तत्र वाचिकापेक्षयोपांशुजपः श्रेष्ठः । तदपेक्षया मानसिक उत्तमः । तथा सहस्र गायत्रीजपोऽयमुत्तमः पक्षः । अष्टोत्तरशतं मध्यमः । अष्टाविंशतिः कनिष्ठः । दशवारं जपः कनिष्ठतरः पक्षः । अकरणान्मन्दकरणं श्रेय इति न्यायेन सोऽप्यनुमतः । अस्य गायत्रीजपस्यातीव महत्फलं विद्यते । गायत्र्या महत्त्व-ख्यापनविषये श्रुतिस्मृत्यादीनामुत्तरोत्तरमानन्दस्योच्चैस्तरङ्गाः प्रादुर्भवन्ति । अस्याः प्रत्यक्षरं तत्त्वानि तेषां शक्तयो देवता उच्चारणकाले तासां ज्ञानानि तत्फलं चेत्यादीनां विषयाणामतिसूक्ष्मतया विचारः शास्त्रे कृतः । संध्योपासनस्येयं गायत्री परमं सर्वस्वं विद्यते । वेदत्रयस्यायं सारः । ब्रह्माधिगमस्येदमाद्यं प्रवेशद्वारम् । ब्राह्मण्यस्य मूलमधिष्ठानम् । आर्यसंस्कृतेर्हैमं शिखरम् । वेदानां हृदयम् । दिव्य-शक्तेरियं प्रसूः । जीवनं सुनिर्मलं विधाय तस्मिन्नखण्डानन्दस्याऽऽवापकर्त्री दयानि-धिर्माता विराजत इयं गायत्री । अस्या अवहेलनेनैव वर्णोत्तमस्येयं सांप्रतिकी दुरवस्था दरीदृश्यते । तदुपेक्षयैव क्षत्रविशोर्धर्मतो ह्रासः संवृत्तः । संस्कृतेर्लोपा-त्तावसंस्कृतौ जातौ । तेन वर्णाश्रमाणां तद्धर्माणां च विपर्यासः संवृत्तः । इतः परमप्येवमेव सामान्यजनताया व्यामोहोत्पादकैः—" सुधारणा, प्रगतिः, देशोद्धारः, राष्ट्रोन्नतिः, स्वदेशसेवा, तत्तज्जातीयोन्नतिसंस्थाः, लोकहितसंवर्धकमण्डलं, जीवदया-संघः, लोकाग्रणीः, देशभक्तः, धर्मभास्करः, महात्मा, महर्षिः, आचार्यः, स्वयंसे-वक इत्यादिकर्णमधुरनामभिर्विशृङ्खलं प्रसृमरः कालेयः स्वैराचारः प्रामुख्येण ब्राह्मणाभिमानिषु वर्धिष्यति चेत्कदाऽप्यपरावर्तनीया ब्राह्मण्यस्य हानिर्भविष्यतीति भीत्या कम्पते चेतः । तथा स्वस्येतरेषां चोद्धारकर्त्री तेषु गूढतया वर्तमाना सच्छक्तिः परिलुप्ता स्यात् । चतुर्थवर्णापेक्षयाऽपि ते द्विजा जघन्या भवेयुः । तस्मादवसर एव तैर्भूदेवैश्चक्षूंष्युन्मील्य सावधानतया स्वकीयधर्माख्य-धनस्य संरक्षणं विधेयम् । अन्ततः संध्याया उपनयनसंस्कारस्य च त्यागस्तैः कदाऽपि न कर्तव्यः । विना संध्यावन्दनं कृतमपि विहितं किंचन कर्म साङ्गं सफलं च नैव भवति । यैः संध्या विस्मृता वा नाधीता तैः पुनः साऽध्ये-तव्या । तल्लोपप्रयुक्तं च प्रायश्चित्तं गृहीत्वा नियमेन प्रत्यहं साऽनुष्ठेया । स्वीय-पुत्रादिभिश्च कारयितव्या । यतः संध्यालोपसदृशं नान्यत्किमपि पापं विद्यते । तल्लोपतुल्यं सामाजिकं वा राष्ट्रियं वा पृथग्दुरितं नास्ति । यतोऽस्य भारत-राष्ट्रस्य राष्ट्रियत्वं सर्वथा परिशुद्धायां वैदिकसंस्कृतौ भरमवलम्ब्यैव तिष्ठति ।

संध्यावन्दनं तु तस्याः संस्कृतेः प्राणो विद्यते । अतः संध्याविलोपं कुर्वद्भिर्ब्राह्मणैर्न केवलमात्मघातोऽपि तु राष्ट्रघातोऽपि क्रियते । तथैव स्थावरजङ्गमसृष्ट्यन्तर्गताः स्वीयोद्धारमाकाङ्क्षन्तः श्रौतकर्माधिकारसंपन्नेषु शुचिषु ब्राह्मणकुलेषु जनिमाप्तुमत्युत्सुकाः संख्यातीता जीवाः प्रभग्नाशाः क्रियन्ते । नेदं महद्दुरितं संपादनीयं ब्राह्मणाभिमानिभिः । अतोऽपि संध्योपासनं कुरुत । संध्यादेवतां गायत्रीं जपत । तस्याः परममङ्गलप्रदाऽयाः स्वमातुरसकृज्जयजयकारं कुरुतेति साग्रहमुपदिशामः ।

गायत्रीजपानन्तरं भगवतः सूर्यनारायणस्योपस्थानं कर्तव्यमस्ति । अयं भास्करो देव इत्थंप्रभावो वर्तते । यदस्य यथाविध्युपासनेनोपासको नियतं तेजःसंपन्नो भवेत् । समस्तविद्याधीशस्याष्टमूर्तेर्महेश्वरस्य ज्ञानप्रदात्री प्रत्यक्षा मूर्तिरयं सूर्यदेवः । निखिलविश्वस्य जाठरोऽग्निरयम् । हृद्रोगादिव्याधीनां निर्मूलयित्री दिव्यौषधिरयम् । हिरण्मयेन पात्रेणापावृतस्याऽऽत्मनः पारमार्थिकस्वरूपप्रकाशनार्थं भगवतः सूर्यनारायणस्य प्रार्थनाऽवश्यं विधेया भवति । तस्य कृपया सफलायां तस्यां व्यामोहकरं तदावरणं दूरं निरस्तं जायते । तदिदं सूर्यमण्डलं येन प्रकाश्यते तन्मङ्गलप्रदं परमपवित्रं पारमेश्वरं तेजस्तदुपासकस्य साक्षात्सिध्यति । ततो विद्युत्समुन्मेषवद्यश्चमत्कारो जायते स आनन्दघनश्चमत्कारः स्वानुभवगम्यत्वात्केन वक्तुं पार्यते । तेनोपास्योपासकभावः क्वापि विलीनो भवति । जीवस्य जीवत्वमेवास्तं गच्छति । जगदाभासः सर्वथा विलुम्पति । निःशेषं विश्वं शिवस्वरूपेणैव समुल्लसति । " योऽसावसौ पुरुषः सोऽहमस्मि " इत्यस्यानुभवः समागच्छति । अर्थान्नरो नारायणो विजायते । " धीमह्यहं स एवेति तेनैवाभेदसिद्धये " इति वचनानुसारं धीमहीति जपस्य सफलतां प्राप्नोति ध्याता । वैदिकसंस्कृतेः पवित्रतरमन्तिमं ध्येयमिदमेव यदीशेनात्यन्ततादात्म्यानुभवाप्तिर्जीवस्य । एषु सूर्योपस्थानमन्त्रेषु " शं नो अस्तु द्विपदे शं चतुष्पदे । स्वस्तिर्मानुषेभ्यः " इत्यपि प्रार्थना विद्यते । स्वीयेच्छाशक्तिर्जगत्कल्याणाय विनियोक्तव्येति सूचयत्ययमुपस्थानमन्त्रः । इत्येवं वेदोपदिष्टेषु तेषु तेषु धर्मकर्मस्वियं विश्वकल्याणभावना प्रामुख्येण वरीवर्ति । वेदविहितं धर्मकर्मानुष्ठातुमावश्यकं यच्छरीरादेः शुचित्वं तद्रिरक्षयाऽशुचिभिः साकं सर्वथा संसर्गं परिहरन्नपि ब्राह्मणः स्वान्ते सर्वेषां कल्याणमेव चिन्तयति । नाकल्याणमिति स्याच्चेत्सदसद्विवेकक्षमा मतिस्तयाऽवगन्तव्यं तद्बुद्धिः ।

उपस्थानानन्तरं क्रमशो गुरुवन्दनं समागच्छति । गुरोर्निरवधिकं माहात्म्यं वर्णयितुं कः समर्थः । यद्यपि शास्त्रं परमगभीरं तत्प्रतिपादितानि तत्त्वान्यतीवोदात्तानि तथाऽपि तेषां तत्त्वानां स्वयमनुभविता शिष्येभ्यश्चानुभावयिता यो महापुरुषः स एव नूनं सर्वोत्तमो गुरुस्तत्साहाय्यमन्तरेण साधकस्य मतिदौर्बल्यं नापगच्छति । तत्त्वसाक्षात्कारो ज्ञानस्य पर्यवसानम् । स एव कुकल्पनानां समूलमुच्छेदकरं रसायनम् । शास्त्रोपदिष्टमुदात्तं वस्तु सर्वसामान्यव्यवहारातीततया सहसाऽनुभवपथं नाऽऽयाति । अत एवास्मिन् वैदिके धर्मे गुरुभक्त्या अचलं द्वितीयं स्थानं प्रदत्तम् ।

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ इति ।

सद्गुरोः समागमः प्रागुपात्तपुण्यस्य फलं बोध्यम् । सद्गुरुरीश्वरस्य दृश्यं स्वरूपं वर्तते । तस्मै श्रद्धया प्रणामकरणं वैदिकसंस्कृतेः प्रथमो नियमः । गुरवे प्रणामं कुर्वता संध्योपासकेन स्वीयगोत्रप्रवरान्परम्परागतं वेदं तच्छाखां तथा नाक्षत्रं स्वनाम समुच्चार्य प्रणामः कार्यः । तेन यस्य मन्त्रद्रष्टुर्महर्षेः कुले स्वस्योत्पत्तिर्जाता तस्य संस्मरणेनाऽऽत्मनः कुलपरम्परा कियती दीर्घा परिपूता च वर्तते तस्य महर्षेर्विशुद्धशोणितानुवृत्तिः परम्परया स्वीयशरीरादौ कथं प्रस्फुरति तामप्रमादतस्तथैव परिपाल्योत्तरसंततेः स्वाधीनीकरणं स्वस्यावश्यं कर्तव्यमित्यादेः शास्त्रीयविषयजातस्य भावना तन्मनसि कृतास्पदा स्यात् । इत्थमियं मन्त्रद्रष्टृणामृषीणां पावनतमा स्मरणपद्धतिर्वर्णोत्तमान्विहायान्यस्मिन् कस्मिन्नपि समाजे देशे वा नोपलभ्यते । अनादिसिद्धेयं पद्धतिः । वासिष्ठविश्वामित्रभरद्वाजप्रभृतयोऽस्माकं पूर्वजा ऋषयो यथा वेदमन्त्रानस्मरन्नुदात्तानुदात्तादिस्वरोपेतांस्तानुच्चैरुपांशु वा यथा चान्तेवासिभ्योऽपाठयंस्तथैवानुच्छिन्नतयाऽनुवृत्ताऽध्ययनाध्यापनपद्धतिरस्मिञ्जगत्यपूर्वा समुज्जृम्भते । इत्थमयमद्भुतः परमरमणीयो मङ्गलप्रदश्च संध्योपासनविधिर्विराजते । अस्य विधेः साकल्येन यथार्थं महत्त्वं वर्णयितुं मादृशः कथं शक्नुयात् । ये केचन श्रद्धावन्त आस्तिकाः सन्ति तेषां कृत इदं यथामत्यल्पं विवेचनं कृतम् । श्रुतिमातुर्वचसि येषां नैव विश्वासस्तेषामस्य विवेचनस्य क इवोपयोगः स्यात् । तदर्थं नैवायं प्रयत्नः । किंत्वास्तिकानां मनसि केनापि हेतुना शङ्काजालमुत्तिष्ठेच्चेत्तस्य निरसनायायमल्पः प्रयत्नः कृतः । अन्ततः संध्योपासनमनुतिष्ठन्तु मा वा परं प्रागेकवारं तस्य विमर्शो विधातव्यस्तमुद्दिश्य शास्त्रे किं विवेचनं कृतं तदवलोकनीयमितीच्छेशकृपया शतेषु द्वित्राणां मनस्युद्भूता चेदपि सफलोऽयं प्रयत्न इति मंस्यामहे ।

उपसंहारे संध्योपास्तेः पारमार्थिकफलप्रतिपादिकां श्रुतिं व्यावहारिकफलनिदर्शिकां च स्मृतिमुदाहृत्यालं कुर्मः । " उद्यन्तमस्तं यन्तं चाऽऽदित्यमभिध्यायन् ब्राह्मणो विद्वान् सकलं भद्रमश्नुते । असावादित्यो ब्रह्मेति ब्रह्मैव सन् ब्रह्माप्येति य एवं वेद । ऋषयो दीर्घसंध्यात्वाद्दीर्घमायुरवाप्नुयुः । प्रज्ञां यशश्च कीर्तिं च ब्रह्मवर्चसमेव च " । इति । इयं संध्योपास्तिः पापिनां पापं क्षालयति पुण्यवतां च पुण्यं वर्धयति । तदप्युक्तम्—

यावन्तोऽस्यां पृथिव्यां तु विकर्मस्था द्विजातयः ।
तेषां हि पापनोदार्थं संध्या सृष्टा स्वयंभुवा ॥

सर्वावस्थोऽपि यो विप्रः संध्योपासनतत्परः ।
ब्राह्मण्याच्च न हीयेत अन्यजन्मगतोऽपि सः ॥ इति ।

एतावता श्रुतिस्मृत्यादिभिर्यत्फलमुपवर्णितं संध्योपासनस्य तदपेक्षयाऽन्यत्किं फलं प्रार्थ्यते ' संध्या किमर्थं कर्तव्येति पृच्छद्भिर्द्विजोत्तमब्रुवैस्तन्न जानीमः । इदं संध्यावन्दनं ज्ञानपूर्वकं कृतं चेद यैरत्युत्तम नैतिकमाध्यात्मिकं च सामर्थ्यं समुत्पद्यते ते सद्गुणा ब्राह्मणसमाजे प्रतिष्ठिता भवेयुः । तेषु व्यक्तेः समाजस्य किं बहुना प्राणिमात्रस्यापि. कल्याणकर्त्री दिव्या शक्तिरस्ति । तादृशशक्तिसंपन्नस्य पुरुषोत्तमस्य चरणारविन्दयोर्निखिलं जगन्मिलिन्दायमानं भवतीति सुप्रसिद्धम् । यः सर्वथा बलवांस्तदायत्तं सर्वमिति निर्विवादम् । ' धिग्बलं क्षत्त्रियबलं ब्रह्मतेजोबलं बलम् ' इति ब्रह्मतेजोहतशक्तिना विश्वामित्रेण वसिष्ठस्याग्रे स्वानुभवस्योद्गारः प्रकटीकृतः । अतो ब्रह्मकुलोत्पन्नान् प्रति ' संध्योपासनं कुरुत ' इति त्रिवारमुपदिश्य विरमाम इति शम् ।

---

## ( अथ संध्योपास्तिपरिशिष्टम् )।

ध्यायन्कृते यजन्यज्ञैस्त्रेतायां द्वापरेऽर्चयन् ।
यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम् ॥

किं तस्य बहुभिर्मन्त्रैर्भक्तिर्यस्य जनार्दने ।
नमो नारायणायेति मन्त्रः सर्वार्थसाधकः ॥

यद्यप्युपनयनकालादारभ्य यावज्जीवमहरहः कर्तव्यं संध्योपासनं द्विजानां वेदविहितं धर्म्यं कर्म तथाऽपि सांप्रतिके समये तद् यथाशास्त्रं भवितुमशक्यप्रायम् । अतस्तत्स्थाने—

हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः ।
अनिच्छयाऽपि संस्पृष्टो दहत्येव हि पावकः ॥

इत्यादिवचनप्रामाण्याद्रामकृष्णादिभगवन्नामोच्चारणस्यातिदेशो योग्यो न स्यात्किमित्यपि केचनाऽऽस्तिकाः पृच्छन्ति । तत्रोच्यते—संध्यावन्दनं ब्राह्मणस्याहरहः कर्तव्यं नित्यं कर्म । तदकरणे ब्राह्मण्यात् प्रच्युतो भवति सः । तदुक्तं मनुना—

नोपतिष्ठति यः पूर्वां नोपास्ते यस्तु पश्चिमाम् ।
स शूद्रवद्बहिष्कार्यः सर्वस्माद् द्विजकर्मणः ॥ इति ।

नूनं भगवन्नामस्मरणं सम्यगेव । परं संध्यावन्दनादि नित्यं कर्म कृत्वा तत्कर्तव्यम् । न तत्सम्यगिति नित्यकर्मणस्त्याग उचितः । अथवा यो नामस्मरणस्यैवाधिकारी तत्परं तद्वचनम् । " रमणीयचरणा रमणीयां योनिमापद्यन्ते ब्राह्मणयोनिं वा क्षत्रिययोनिं वा " इत्यादिश्रुतेः प्रागुपात्तपुण्यकर्मणा ब्राह्मणकुले समुत्पत्तौ जातायामपि यो वेदविहितं संध्योपासनं नित्यं कर्म नानुतिष्ठेत्तेन भगवदाज्ञाया भङ्गः कृत इति न भवेत्किम् । संध्यावन्दननामस्मरणयोरुभयोरप्युपदेशः शास्त्रेणैव कृतस्तत्र संध्यावन्दनमकृत्वा केवलं नामस्मरणानुष्ठानं तु प्रथमं भगवदाज्ञामुल्लङ्घ्य पश्चात्तत्कृपासंपादनार्थं यत्प्रयतनं तत्पूर्वं पादप्रहारं विधायानन्तरं नमस्करणतुल्यमित्यवगन्तव्यम् ।

संध्यावन्दनान्नामस्मरणं वरमिति वदद्भिरिदं मनसि कर्तव्यम् । यत्संध्यायामपि नामस्मरणमस्त्येव । " ऋचो अक्षरे परमे व्योमन्यस्मिन्देवा अधिविश्वे निषेदुः " इति श्रुतेर्यावन्ति वेदाक्षराणि तावन्ति भगवन्नामानीति संध्यां विहाय केवलनामस्मरणे न कोऽपि लाभः स्यात् । प्रत्युत संध्याया लोपेन नामस्मरणलोपो विहितकर्मत्यागश्चेति द्विविधं पापं सिध्येत् । किंचेदं संध्यावन्दनं द्विजानुद्दिश्य विहितो धर्मविशेषोऽस्ति । नामोच्चारणं तु सर्वेषां सामान्यधर्मः । तेन धर्मविशेषाननुष्ठानप्रयुक्तः प्रत्यवायः कथमपगच्छेत् । तस्माद्द्विजवर्णमुद्दिश्य विहितं संध्योपासनमादौ कृत्वैव नामस्मरणं कृतं चेत् ' अधिकस्याधिकं फलम् ' इति समधिका भगवत्कृपा सिध्येन्नान्यथेति ज्ञेयम् । अस्मिन्विषये भगवतो ज्ञानेश्वरस्य सन्तशिरोमणेरेकनाथस्वामिनश्च, ओवीनामकपद्यात्मकान्यर्थतः संस्कृतभाषायां परिणामितानि वचनानि प्रमाणत्वेनोपन्यस्यामः । तानि यथा—

आश्रयः को न इत्येवं प्रजाभिः प्रार्थितस्तदा ।
अवादीत्कमलोद्भूतो देवः श्रेयस्करं वचः ॥

विप्रत्ववर्णवैशेष्यात्स्वधर्म इति निश्चितः ।
संध्योपासनमस्माभिरनुष्ठेयं द्विजैः सदा ॥
स्वधर्मो मखरूपोऽयं कामानां परिपूरकः ।
स एवैको द्विजैः सेव्य इत्याह कमलासनः ॥
समग्रभोगभरिते स्वधर्मे निरताः सदा ।
वर्तध्वं यदि विप्रेन्द्रा नो द्रक्ष्यध्वममङ्गलम् ॥
आधारः स्वीयधर्मोऽयं मोहात्त्यक्तो द्विजैर्यदा ।
लुम्पेयुः सर्व आनन्दा दीपैः सह यथा प्रभा ॥
स्वधर्मत्यागिनं कालो दण्डयेदनिशं भृशम् ।
चोरोऽयमिति सर्वस्वं हरेदपि च तस्य वै ॥
तस्मात्पाण्डव केनापि स्वधर्मो नैव हीयताम् ।
किंतु सर्वात्मना सेव्योऽयमेको ह्येव तारकः ॥
विशेषेण कुले वैप्रे जन्मोत्तममिदं बुधाः ।
आहुस्तत्सहजं नित्यकर्म ब्रह्म परं स्मृतम् ॥
तत्र स्थितस्य विप्रस्य संध्योपासनमिष्यते ।
त्रिकालं तेन तस्य स्यादुपात्तदुरितक्षयः ॥
वेदत्रयीसारभूता गायत्री यस्य वक्त्रगा ।
देवानां दैवतं स स्यान्महत्तामियतीं लभेत् ॥
ब्राह्मणस्य हि हृद्पद्मे नूनं नारायणः स्वयम् ।
वेदरूपी स्थितस्तस्मात्त्रिलोक्यां धन्य एव सः ॥
यद्देहे नाण्वपि ह्यंहः संध्योपासनतः किल ।
तद्ब्राह्मणः पुण्यमूर्तिरित्याह भगवान्स्वयम् ॥
वेदोदितानि कर्माणि साधूनां पुरतो ह्यहम् ।
ब्रवीमि वर्मभूतानि संशृणुध्वं समाहिताः ॥
एकस्माद्ब्रह्मणो देहाज्जाताः सर्व इमे जनाः ।
भागिनः पुण्यपापानां चतुर्धा हि विभाजिताः ॥
तुकारामोऽब्रवीद्यावदुन्मनस्त्वं स्थिरं भवेत् ।
तावत्सर्वेऽपि विधयः पालनीयाः प्रयत्नतः ॥

इत्येवं द्विजोत्तमैः प्रत्यहमनुष्ठेयस्य संध्यावन्दनधर्मस्य जयजयकारः श्रीज्ञानदेवप्रमुखै-र्भगवद्भक्तोत्तमैरपि कृत इति संध्यामकृत्वा कृतेन नामस्मरणेनेष्टसिद्धिः कुतो न स्यादित्यस्याः शङ्कायास्तेषां महात्मनां वचनैर्निवृत्तिः स्यादिति दृढं विश्वासः । इति शम् ।

---

## ( अथ धर्मविमर्शः ) ।

विशुद्धज्ञानदेहाय त्रिवेदीदिव्यचक्षुषे ।
श्रेयःप्राप्तिनिमित्ताय नमः सोमार्धधारिणे ॥

गोष्पदीकृतसंसारागाधपाथोधिपादुकम् ।
वन्दे श्रीशंकराचार्यं सच्चिदानन्दविग्रहम् ॥

विद्यागुरून्नमस्कृत्य पितरौ कुलदेवताः ।
दर्शयाम्यहमार्येभ्यो योग्यं धर्मप्रदीपकम् ॥

### ॐ नमो भगवते धर्माय ।

ॐ चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य ।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आविवेश ॥ ( ऋ० सं अष्ट० ३ अ० ८ व० १० ) ।

अस्य—' वृषो हि भगवान्धर्मः ख्यातो लोकेषु भारत ' इति भगवद्व्यास-वचनोपबृंहितस्यैतन्मन्त्राभिधेयस्य वृषभात्मनो यज्ञदानतपोरूपस्य धर्मस्य चत्वारि शृङ्गाः—धर्मार्थकाममोक्षाः ' कुविन्मां गोपां करसे० ( ऋ० सं० अ० अ० व० ) इति श्रुतिसिद्धाः । अस्यां श्रुतौ—मामृषिं कुरु मां धनाढ्यं मां राजानं, माममृतं च कुर्विति देवेन्द्रः प्रार्थ्यते । तत्र ऋषिं कुर्वित्यनेन धर्माख्यः पुरुषार्थः सूचितः । एवं धनाढ्यराजामृतशब्दैः क्रमेणार्थकाममोक्षाः सूचिता इति बोध्यम् । त एते धर्मा-दयश्चत्वारः पुरुषार्था मानवमात्रेण श्रयणार्हत्वाच्छृङ्गाणीत्युपचर्यन्ते । त्रयः—श्रुति-स्मृतिशिष्टाचाराः । पादाः—गमनसाधनपादस्थानीयाः । धर्मज्ञानार्थत्वात्तेषामित्यर्थः । द्वे—प्रवृत्तिनिवृत्ती अभ्युदयनिःश्रेयसपदे । शीर्षे—सकलगात्रप्रधानशिरःस्थानीये । इत-रापेक्षयोत्तमत्वात्तयोः । उत्तमाङ्गं शिरः शीर्षमित्युक्तेः । सप्त हस्तासो अस्य—

व्याकरणादीनि षडङ्गानि न्यायादिदर्शनषट्कं च मिलित्वा सप्त हस्ता इव हस्ताः। तैर्निर्विचिकित्सतया ग्राह्यत्वाद्धर्मस्येत्यर्थः । त्रिधा—त्रिभिः प्रकारैः कर्मोपासनाज्ञानैः। बद्धः—मर्यादितः । अमर्यादितोऽप्यधिकारितारतम्येन कृपालुभिः प्रत्नैराचार्यैर्मर्यादित इवेति यावत् । वृषभः—सतां मनोरथान् वर्षिता । रोरवीति सत्यं वद, धर्मं चर, इत्याद्युपदेशं कुरुते । एवंरूपो महो—महान , श्रेष्ठतमो देवो धर्माख्यः । मर्त्यान्—मानुषान्प्रति । आविवेश प्रविष्टो बभूव । उत्पत्तिसमय एव । 'तत्सृष्ट्वा तदेवानुप्राविशत् । स धर्मं व्यसृजत'। सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः । अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥ इति श्रुतिस्मृतिभ्याम् । अनेन मन्त्रेण धर्मस्य पुरुषार्थचतुष्टयान्तर्गतत्वेऽपि स्वेतरत्रितयैकनिदानत्वं षडङ्गादिभिरेवानाहार्याप्रामाण्यज्ञानानास्कन्दितानिश्चयगम्यत्वं श्रुत्यादिप्रमाणकत्वं सकलकामदुघत्वं मानुषाधिकारित्वं सहजत्वेनानादित्वं च सूचितं भवति ।

अथेह निखिलोऽपि जीवनिवहः सुखं तत्साधनं चानुकूलतया गृह्णंस्तदाप्तये, दुःखं तत्साधनं च प्रतिकूलतया जानंस्तन्निवृत्तये चाहर्निशं प्रयतमानः समुपलभ्यते । तदुक्तं संक्षेपशारीरके—

इह जगति ह सर्व एव जन्तुर्निरतिशयं सुखमुत्तमं ममास्तु ।
उपरमतु तथोपघातरूपं विषयजदुःखमिति स्पृहां करोति ॥ इति ।

तच्च तच्च नर्ते धर्मादाप्यते निवर्तते चेति श्रुतिस्मृत्याद्यलौकिकप्रमाणोपदिष्टतपआद्यनुष्ठानोद्भूतदिव्यमतिवैभवानां सांप्रतिकानां च सुसूक्ष्मार्थावधारणपटूनां निर्मत्सराणां विदुषां घण्टाघोषः ।

तथा हि—हविर्भिरेके स्वरितः सचन्ते सुन्वन्त एके सवनेषु सोमान् ।
शचीर्मदन्त उत दक्षिणाभिर्नेजिह्मायन्त्यो नरकं पताम ॥ इति ।

अस्य मन्त्रस्यायं संक्षिप्तोऽर्थः—एके सत्पुरुषा हविर्भिः करुणापारावारं परमेश्वरमर्चन्तः, अपरे विद्वांसः प्रातरादिसवनेषु सोमरससाध्येन्द्रादिदेवताकयागं निर्वर्तयन्तः, अन्ये पुनर्दक्षिणाभिर्गवादिभिः क्रतून् हर्षेण कुर्वन्तोऽस्माल्लोकादुन्नततमं स्वर्गं सुखं च प्राप्नुवन्ति । उन्नतिभाजो भवन्तीति यावत् । जिह्मायन्त्यः पापमाचरन्त्यः प्रजा नरकं नीचैर्गतिं नास्मिन्रमणमल्पमप्यस्ति किंचिदिति निरुक्ताभिहितं दुःखबहुलमवनतिस्थानं गच्छन्तीति । अनेन मन्त्रेण विस्पष्टमेव धर्मानुष्ठानस्य सुखहेतुत्वमधर्माचरणस्य च दुःखैकनिदानत्वमभिहितम् । शतपथब्राह्मणे—पञ्चैव महायज्ञास्तान्येव महासत्राणि । भूतयज्ञो मनुष्ययज्ञः पितृयज्ञो देवयज्ञो ब्रह्मयज्ञ इति ।

ते वा एते अहरहरनुष्ठेया नैनसाऽऽश्लिष्यत इति । यजुर्वेदेऽपि—धर्मो विश्वस्य जगतः प्रतिष्ठा । लोके धर्मिष्ठं प्रजा उपसर्पन्ति । धर्मेण पापमपनुदति । धर्मे सर्वं प्रतिष्ठितम् । तस्माद्धर्मं परमं वदन्ति । इति ।

मनुस्मृतौ—एक एव सुहृद्धर्मो निधनेऽप्यनुयाति यः ।
शरीरेण समं नाशं सर्वमन्याद्धि गच्छति ॥
श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन्हि मानवः ।
इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम् ॥
धर्मस्थानमियं धात्री कृतमत्रोपभुज्यते ।
वैदिकः कर्मयोगश्च पावनः प्राणिनामिह ॥ इति ।

विष्णुपुराणे—

उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम् ।
वर्षं तद्भारतं नाम भारती यत्र संततिः ॥
कर्मभूमिरियं स्वर्गमपवर्गं च गच्छताम् ।
तिर्यक्त्वं नरकं चापि यान्तीतः पुरुषा मुने ॥ इति ।

अत्रिवसिष्ठव्यासस्मृतिषु—

ये व्यपेताः स्वधर्मेभ्यः परधर्मे व्यवस्थिताः ।
तेषां शास्तिकरो राजा स्वर्गलोके महीयते ।
आलोड्य सर्वशास्त्राणि विचार्यैवं पुनः पुनः ।
इदमेकं सुनिष्पन्नं नान्यद्धर्मात्सुमङ्गलम् ॥
ऊर्ध्वबाहुर्विरौम्येष न च कश्चिच्छृणोति मे ।
धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते ।
कृमयः किं न जीवन्ति भक्षयन्ति परस्परम् ।
परलोकाविरोधेन धर्मं कुर्वन् स जीवति ॥ इति ।

तथा महाभारते शान्तिपर्वणि पुत्रं शुकं प्रति पितुर्व्यासमहर्षेरुपदेशस्य संक्षेपतोऽनुवादः—

महापदानि कत्थसे न चाप्यवेक्षसे परम् ।
चिरस्य मृत्युकारिकामनागतां न बुध्यसे ॥
पुरा जरा कलेवरं विझर्झरी करोति ते ।
बलाङ्गरूपहारिणी निधत्स्व केवलं निधिम् ॥

पुरा शरीरमन्तको भिनत्ति रोगसायकैः ।
प्रसह्य जीवितक्षये तपो महत्समारभ ॥
पुरा कुसंगतानि ते सुहृन्मुखाश्च शत्रवः ।
विचालयन्ति दर्शनाद्घटस्व पुत्र यत्परम् ॥
धनस्य यस्य राजतो भयं न चास्ति चोरतः ।
मृतं च यन्न मुञ्चति समार्जयस्व तद्धनम् ॥
न पुत्रमातृबान्धवा न संस्तुतः प्रियो जनः ।
अनुव्रजन्ति संकटे व्रजन्तमेकपातिनम् ॥
यदेव कर्म केवलं पुरा कृतं शुभाशुभम् ।
तदेव पुत्र यौतकं भवत्यमुत्र गच्छतः ॥
हिरण्यरत्नसंचयाः शुभाशुभेन संचिताः ।
न तस्य देहसंक्षये भवन्ति कार्यसाधकाः ॥
न पुत्र शान्तिरस्ति ते शुभाशुभस्य कर्मणः ।
न साक्षिको+ऽत्मना समो नृणामिहास्ति कश्चन ॥
गता त्रिरष्टवर्षता ध्रुवोऽसि पञ्चविंशकः ।
कुरुष्व धर्मसंचयं वयो हि तेऽतिवर्तते ॥
इदं निदर्शनं मया तवेह पुत्र संमतम् ।
स्वदर्शनानुमानतः प्रवर्णितं कुरुष्व तत् ॥
धर्मं पुत्र निषेवस्व सह तीक्ष्णौ हिमातपौ ।
क्षुत्पिपासे च वायुं च जय नित्यं जितेन्द्रियः ॥
धर्माय येऽभ्यसूयन्ति बुद्धिमोहान्विता नराः ।
अपथा गच्छतस्तेषामनुयाताऽपि पीड्यते ॥
ये तु तुष्टाः श्रुतिपरा महात्मानो महाबलाः ।
धर्म्यं पन्थानमारूढास्तानुपास्स्वं पृच्छ च ॥
संपतन्देहजालानि कदाचिदिह भूमिषु ।
मानुष्यं लभते जन्तुस्तत्पुत्र परिपालय ॥
संचिन्तितश्चाप्युपसेवितश्च दृष्टः श्रुतः संकथितः स्तुतो वा ।
सर्वाणि पापान्यपहन्ति धर्मो निशातमांसीव सहस्ररश्मिः ॥

---

+ अत्राऽऽर्षत्वादाकारस्य ह्रस्व इति भाति ।

तस्मात्सर्वात्मना धर्मं नित्यं तात समाचर ।
मा धर्मविमुखः प्रेत्य तमस्यन्धे पतिष्यसि ॥ इति ।

वाल्मीकिरामायणे श्रीरामस्योक्तिर्धर्मविषये—

तेनैवमाज्ञाय यथावदर्थमेकोदयं संप्रतिपद्य विप्राः ।
धर्मे रताः सत्पुरुषैः समेतास्तेजस्विनो दानगुणप्रधानाः ॥
धर्मं चरन्तः सकलं यथावत्काङ्क्षन्ति लोकागममप्रमत्ताः ।
अहिंसका वीतमलाश्च लोके भवन्ति पूज्या मुनयः प्रधानाः ॥

सत्यं च धर्मं च पराक्रमं च भूतानुकम्पां प्रियवादितां च ।
द्विजातिदेवातिथिपूजनं च पन्थानमाहुस्त्रिदिवस्य सन्तः ॥
अकुहः श्रद्दधानः सन् कार्याकार्यविचक्षणः ।
कर्मभूमिमिमां प्राप्य कर्तव्यं कर्म यच्छुभम् ॥ इति ।

भगवद्गीतास्वपि—

क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ।
स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ॥
यज्ञो दानं तपश्चैव न त्याज्यं कार्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥ इति ।

तथा—

यद्वैरूप्यमनर्थता विकलता नीचे कुले जन्मता
दारिद्र्यं स्वजनाच्च यत्परिभवो मौर्ख्यं परप्रेष्यता ॥
तृष्णालौल्यमनिर्वृतिः कुशयनं कुस्त्री कुभोजं रुजः ।
सर्वाः पापमहीरुहस्य महतो व्यक्तं फलं दृश्यते ॥

तद्वैपरीत्ये तु—यन्नागा मदगण्डभिन्नकरटास्तिष्ठन्ति निद्रालसा
द्वारे हेमविभूषिताश्च तुरगा ह्रेषन्ति यद्दर्पिताः ।
वीणावेणुमृदङ्गशङ्खपटहैः सुप्तश्च यद्बोध्यते ।
तत्सर्वं सुरलोकराज्यसदृशं धर्मस्य विस्फूर्जितम् ।
धर्माज्जन्म कुले शरीरपटुता सौभाग्यमायुर्धनं
धर्मेणैव भवन्ति निर्मलयशोविद्यामहीसंपदः ।
आरण्येषु महाभयेषु सततं धर्मः परित्रायते
धर्मः सम्यगुपाश्रितो हि भवति स्वर्गापवर्गप्रदः ॥ इति ।

शुक्रनीतावपि—

धर्मतत्त्वं हि गहनमतः सत्सेवितं नरः ।
श्रुतिस्मृतिपुराणानां कर्म कुर्याद्विचक्षणः ॥
देशधर्मा जातिधर्माः कुलधर्माः सनातनाः ।
मुनिधर्माश्च ये धर्माः प्राचीना नूतनाश्च ये ॥

प्रत्यहं देशदृष्टैश्च शास्त्रदृष्टैश्च हेतुभिः ।
जातिजानपदान्धर्माञ्छ्रेणिधर्मांस्तथैव च ॥
समीक्ष्य कुलधर्मांश्च स्वधर्मं प्रतिपालयेत् ।
एवमेनः शमं याति पूज्यो भवति मानवः ॥

वाताभ्रविभ्रममिदं वसुधाधिपत्यमापातमात्रमधुरो विषयोपभोगः ।
प्राणास्तृणाग्रजलबिन्दुसमा नराणां धर्मः सखा परमहो परलोकयाने ॥ इति ।

इत्थमिष्टानिष्टप्राप्तिपरिहारोपायतया यतः श्रुत्यादिषु तत्र तत्र ससंस्तवो धर्मोपदेशो दरीदृश्यते ततो देशकालाद्यविरोधेन स्वस्वाधिकाराद्यनुसारतो मनुष्यमात्रं यथोक्तं धर्मं समाचरेदिति सर्वेषां श्रुत्यादिवचसां समुदितार्थो बोध्यः ।

अत्रेदमवधेयम्—एतावता प्रमाणनिचयेन यस्य हि संस्तव उपदर्शितः प्रेक्षावतां पुरतस्तस्यैव भगवतः सनातनवैदिकधर्मस्य शसनाय मधुच्छन्दःप्रभृतयो वैदिकऋषयः 'अग्निमीळे' इत्यादीनि गम्भीरार्थसन्दृब्धानि स्तोत्रशस्त्राणि जगुः । मातृस्थानीया 'सत्यं वद । धर्मं चर' इत्यादिश्रुतिरपि तमेवोपदिदेश । वेदोदितमहिमा भगवान्मनुरपि तमेव प्रागनुभूतं सस्मार । पराशरयाज्ञवल्क्यवसिष्ठव्यासमुख्या अन्वर्थब्रह्मर्षयस्तमेवास्मरन्स्मृतिवाक्यैः । मुनिप्रवरो वेदव्यासः कृपालुतया तस्यैव याथात्म्यावगतये महाभारतसदृक्षमितिहासं प्रणिनाय । पुराणेष्वस्यैव महत्त्वं सर्वथोपवर्णितं तत्र तत्र । सदाचारोऽप्येनमेव महाभागं धर्मं गोचरयति श्रद्दधानदृशाम् । अज्ञानेनाऽऽत्मसात्कृतानां जन्तूनां चक्षुरुन्मीलयितुं तत्त्वविद्भिः कपिलमुनिप्रमुखैर्महात्मभिः स्वीयसांख्यादिदर्शनेषु यदलौकिकं तत्त्वमाविष्कृत लोकोत्तरेण मतिवैभवेन तदप्यस्यैवान्ततः स्वरूपावबोधायेत्यवगन्तव्यम् ।

यदा त्वनीश्वरवादिनां चार्वाकप्रभृतीनां नास्तिकानां कर्णमधुरमतानुसारेणेदं धर्मप्राणं भारतं वर्षं नास्तिक्यनाधर्माचरणं नातिक्रामति स्म, विलुप्तप्रायचिन्मीमांसया निर्वाणमप्यश्मवदचेतनावस्थं शून्याकारं लोकोऽनुमन्यत, तदा खरतरनखरकोटिविदारितमत्तमतंगजगण्डभित्तिः केसरीवाऽऽबालसंन्यासी भगवाञ्छ्रीशंकरः

र्वीयदिव्यसरस्वतीप्रभावेण प्रमाणादिपरिपूतलोकोत्तरलेखपाटवेन च वादिदिग्गजान्कांदिशीकान्विधारयन्निममासेतुहिमाचलं भारतप्रदेशमान्दोलयामास तदप्यस्मिन्वैदिके धर्मे पञ्चजनपुञ्जं प्रवर्तयितुमेव । यच्चाविच्छिन्नपारम्पर्यिकाणि चतुर्दिक्षु चत्वारि धर्मपीठानि संस्थापयामासुः समस्तसुरवृन्दपूजितपादारविन्दाः श्रीमच्छंकरमस्करीन्द्रास्तदप्यस्यैव धर्मस्य क्षेमायेत्येतन्न मतिपथापेतं विधेयं धर्मपीठान्यनवकाशानि कुर्वद्भिरिदानीतनैराचार्यैः। सांप्रतमपि यत्समर्थरामदासप्रमुखं चिरं स्मर्तव्यं साधुवृन्दं भगवद्भजनमेवोत्तम ईशतुष्ट्युपाय इति दासबोधादिभिर्ग्रन्थरत्नैः प्रतिपादयामास तदप्यस्यैवाऽऽर्यधर्मस्य परित्राणायेति विज्ञेयं छत्रपतिपदमलंकुर्वद्भिर्भूपालैरिति ।

इत्थं चिराय सर्वैः सर्वथा संसेवितस्यैशस्वरूपान्नातिरिच्यमानस्य महाभागस्यैहिकामुष्मिकार्थसंदोहदोग्धुर्धर्मस्य दिङ्मात्रस्वरूपावगमार्थं प्रयतामहे—

परमेशसृष्टेऽस्मिन्सुरासुरर्षिमानवपशुपक्षिस्थावरादिभेदभिन्ने चेतनाचेतने जगति कश्चन सुखी कश्चन दुःखी कोऽप्युभयवान्नोभयवानपरः । कश्चन रागी कश्चिच्च विरागी कश्चिदुदासीनः । शाश्वतः कोऽप्यशाश्वतः कश्चित् । स्थिरः कोऽप्यस्थिरः कश्चित् । कश्चिदस्पष्टचैतन्यः कोऽपीषत्स्पष्टचैतन्यः सुस्पष्टचैतन्योऽपरः । श्रीमान् रङ्को धीमान्मूर्खो व्यङ्गोऽव्यङ्ग इत्यादयोऽसंख्याता विचित्राः प्रकाराः परिदृश्यन्ते । प्रतिपदमनुभूयमानमिदं वैचित्र्यं यस्मात्कार्यं तस्मात्सहेतुकं तदित्यवश्यं वाच्यम् । नहि विना कारणं कार्योत्पत्तिर्युक्ताऽनुभूता वा कुत्रचित् । अन्ततः कोऽप्यविज्ञातं कारणं पर्यवस्यतीति नाविज्ञातं विपश्चिताम् । तच्च कारणं विचित्रमेवाङ्गीकर्तव्यम् । इतरथा कार्यवैचित्र्यानुपपत्तेः । नहि शुक्लेभ्यस्तन्तुभ्यो विचित्रवर्णः पटः स्वभावत उत्पन्नो दृष्टचरः । तदुक्तं—'वैचित्र्यं च समस्य न ' इति । स्थिते चैवं किं तद्विचित्रं कारणं दृष्टमदृष्टं वेति विमर्शे दृष्टस्याऽऽशु विनाशित्वात्कालान्तरोत्पद्यमानसुखदुःखहेतुत्वासंभवेनादृष्टमेव धर्माधर्माख्यं पुण्यपापाख्यं वा श्रुत्यादिप्रमाणसिद्धं वैचित्र्यस्य निदानमिति वाच्यम् । ' रमणीयचरणा रमणीयां योनिमापद्यन्ते । कपूयचरणाः कपूयां योनिम् । पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन ' इति श्रुतेः । ' दृष्टश्चायं जन्मनैव प्रतिप्राण्युच्चावच उपभोगः प्रविभज्यमान आकस्मिकत्वासंभवादनुशयसद्भावं सूचयति यथा पर्जन्यात्साधारणकारणादुत्पन्नानां व्रीहियवादीनां वैषम्ये तत्तद्बीजगतान्येवासाधारणानि सामर्थ्यानि कारणानि भवन्ति । एवमीश्वरसृष्टानां देवतिर्यङ्मनुष्यादिप्राणिनां वैषम्ये तत्तज्जीवगतान्येवासाधारणानि कर्माणि कारणानि भवन्ति । अतः सृज्यमानप्राणिधर्मापेक्षा विषमा सृष्टिः ' इति शारीरकभाष्याच्च ।

ननु वस्तुस्वभावेनैवोपपत्तौ सुखदुःखादिवैचित्र्यस्यालं धर्माधर्माख्येन कर्मणेति चेन्न । विकल्पासहत्वात् । तथा हि—यं हि कार्यवैलक्षण्यहेतुं स्वभावं ब्रूषे स किमेकाकारोऽनेकाकारो वा । आद्ये कार्यवैचित्र्यानुपपत्तिः प्रागुक्ताऽनुसंधेया । द्वितीये तु कस्मादनेकाकारत्वं तस्येति वक्तव्यम् । सर्वेषु हि दृश्यमानपदार्थेषु कार्यकारणभावनियमदर्शनादाकस्मिकवादोऽनुभवविरुद्धस्तुच्छ एव । अतः सर्वानुभवसिद्धकार्यवैचित्र्येण कारणवैचित्र्यमकामेनाप्यङ्गीकर्तव्यम् । यथा क्षित्यङ्कुरादिभिरस्मत्कृत्यसाध्यैस्तत्कारणमीश्वरः सिध्यति तथाऽस्माभिरनुभूयमानैः सुखदुःखादिभिर्धर्माधर्मावपि सिध्यतः । अत एवोक्तं भारते—

सौवर्णं राजतं वाऽपि यथा भाण्डं निषिच्यते ।
तथा निषिच्यते जन्तुः पूर्वकर्मवशानुगः ।
नाबीजाज्जायते किंचिन्नाकृत्वा सुखमेधते ॥

सुकृतैर्विन्दते सौख्यं प्राप्य देहक्षयं नरः ।
चक्षुषा मनसा वाचा कर्मणा च चतुर्विधम् ॥

करोति यादृशं कर्म तादृशं प्रतिपद्यते ।

इत्यादिना पूर्वकृतकर्मानुसारमुत्तमाधमजन्मप्राप्तिर्वर्णिता । नाबीजादित्यनेन च कारणं विहाय कार्योत्पत्तिजल्पः सुतरां विध्वंसितः ।

अयमेवार्थो गौतमीदृष्टान्तेन निःसंदिग्धमुपदिष्टस्तत्रैव । तथा—गौतमीनाम्नी काचन ब्राह्मणी सर्पदष्टं स्वपुत्रं वीक्ष्य तत्कृते भृशं विलपन्ती केनचिल्लुब्धकेन बद्ध्वाऽऽनीतं तं सर्पं जहीति मुहुरुच्यमानाऽपि तस्य वधं नाङ्गी चकार । सर्पोऽपि नाहं वधकर्ता कुठार इव च्छिदिक्रियायामस्वतन्त्रोऽहं मृत्युरेवात्र कारणमित्यब्रवीत् । अथ मृत्युः प्रादुर्भूय कालपरतन्त्रोऽहमित्युवाच । ततः कालोऽप्यागत्य नाहं स्वातन्त्र्येण हेतुः किंत्वस्य कर्मैवेत्याह—

यदनेन कृतं कर्म तेनासौ निधनं गतः ।
विनाशहेतुः कर्मास्य सर्वे कर्मवशा वयम् ॥

यथा छायातपौ नित्यं सुसंबद्धौ निरन्तरम् ।
तथा कर्म च कर्ता च संबद्धावात्मकर्मभिः ॥ इत्यादिना ।

ननु यद्येवं प्राक्कृतकर्मणैव शुभमशुभं वा प्राप्यते मानुषेणालं तर्हि पुरुषप्रयत्नेनेति चेन्न । यतः प्रारब्धस्यापि तत्तद्बुद्ध्यादिचेष्टादिभिरेव फलनिष्पादकत्वं नेतरथेत्यनुभवः । नहीश्वरः सर्वेषां कारणमिति भास्करोदयमन्तरा सुप्रभातं तनोति ।

लोचनमन्तरेण वा रूपं दर्शयति तद्वदेवेदं द्रष्टव्यम् ।

पौरुषं हि द्विविधं प्राक्तनमैहिकं चेति । तत्र प्राक्तनं प्रारब्धमैहिकं च पुरुषकार इत्युच्यते । उक्तभास्करोदयादिदृष्टान्तेन प्राक्तनस्यैहिकापेक्षत्वादैहिकेन च प्राक्तनान्यथाभावस्य तत्र तत्र बाहुल्येनोपलम्भात्पुरुषकारः श्रेष्ठ इति निश्चीयते । तदुक्तं वासिष्ठे रामायणे—

प्राक्तनं चैहिकं चेति द्विविधं विद्धि पौरुषम् ।
प्राक्तनं चैहिकेनाऽऽशु पुरुषार्थेन जीयते ।
यत्नवद्भिर्दृढाभ्यासैः प्रज्ञोत्साहसमन्वितैः ।
मेरवोऽपि निगीर्यन्ते कैव प्राक्पौरुषे कथा ।
साधूपदिष्टमार्गेण यन्मनोऽङ्गविचेष्टितम् ।
तत्पौरुषं तत्सफलमन्यदुन्मत्तचेष्टितम् ।
शुभेन पौरुषेणाऽऽशु शुभमासाद्यते फलम् ।
अशुभेनाशुभं नित्यं दैवं नाम न किंचन ।
मूढैः प्रकल्पितं दैवं तत्परास्ते क्षयं गताः ॥
प्राज्ञास्तु पौरुषार्थेन पदमुत्तमतां गताः ॥ इत्यादिना ।

ततः सिद्धमिदं धर्माधर्माख्यं कर्मैव दृश्यमानवैचित्र्यस्य कारणम् । न स्वभावादिकं किमपीति ।

अत्रेदं बोध्यम्—सकलजगन्निर्माता हि भगवानीश्वरो लीलया सर्वं निर्माय सहैव धर्मेण मर्त्यं ससर्जेति श्रूयते । तेन मानुषविशेषसिद्ध्यर्थमत्र धर्मोऽवतीर्ण इति गम्यते । 'महो देवो मर्त्यां आविवेश' इत्यस्य हि मनुष्यान्प्रविष्टो बभूवेत्यर्थो निरुक्तकारैः प्रदर्शितः । युक्तमेवैतत् । सर्वेष्वपि हि भगवत्सृष्टेषु चेतनाचेतनभावेषु मनुष्यः श्रेष्ठतम इत्यविवादम् । यतो लोहपथे सुखमुपविष्टः क्षुद्रकीटकोऽपि घनगम्भीरं ध्वनिं कुर्वंश्चण्डतररंहसा सविधमापतन्तं धूमशकटं विज्ञाय झटिति ततोऽपसृत्य प्राणान्रक्षति । स कीटः क्षुद्रादपि क्षुद्रतरोऽत्यल्पतरोऽप्याघातस्तस्य विनाशायालम् । तद्धूमयानं त्वद्रिकल्पवपुर्महत्तरया च शक्त्या समन्वितम् । अथापि तत्र कीटकण्ठ एव विजयश्रिया माला समर्प्यते । तत्कुत इति चेत—महदपि तद्यानमचेतनं लघुतरोऽपि कीटकश्चेतन इत्येवोत्तरम् । लघुरप्ययमनन्तस्य सर्वगस्य चैतन्यस्यैव विस्फुलिङ्गः । तदेव चैतन्यं कीटदेहेंऽशत आविर्भूतमिति यावत् । यद्यपि तद्यानमितरततः स्पन्दतेऽथापि तन्निर्मात्रा तत्र या निर्जीवा शक्तिर्नियन्त्रिता तदनुसारमेव तद्गतागतं कुरुते न स्वातन्त्र्येण । नैव

तत्तदतिक्रमे किंचिदपि शक्तम् । चेतनो जन्तुस्तु तद्विलक्षणः । स च स्वास्मिन्नीशनिहितां ज्ञानशक्तिमुपयोक्तुं समर्थः । अतः कथं कियन्मात्रा च चेष्टा विधेयेति निश्चेतुं तथा यतितुं च स्वतन्त्रः सः । न त्वचेतनं धूमयानं तथेति परतन्त्रं तत् । ततः स्वप्राणविघातिन्या राक्षस्या शक्त्या समन्वितमपि धूमयानमपेक्ष्य कीटकोऽपि श्रेष्ठतरश्चेत्तर्हि समस्तज्ञानकरणोपेतः सुविस्पष्टचैतन्यो मानुषस्ततोऽपि श्रेष्ठतम इति किमु वक्तव्यम् । तदस्य मानुषस्य तदितरेभ्यः सर्वेभ्यः श्रेष्ठत्वं केनांशेनेत्यस्य मीमांसा सनातनधर्मग्रन्थेषु यथा कूलंकषा परिदृश्यते नैवेतरत्र तथोपलभ्यते । तत्त्वतस्तदधिगम एव धर्ममहातरोर्मुख्यं बीजम् । अस्य विमर्शो यस्मिन्धर्मे सप्रपञ्चमनुष्ठितस्तत्त्वविद्भिर्महात्मभिः स एव धर्मप्रासादो मूलतः पूतश्चिराय श्रेयसे जागर्तीत्यवधेयं विज्ञैः ।

'सहयज्ञाः प्रजाः सृष्ट्वा' इति भगवद्वचनात्प्रजनोत्पत्तिसमकालमेव धर्मो जनिमापेत्यवितथं यथा, तथा मानुषेष्टविशेषसिद्ध्यर्थमेव सोऽवतीर्ण इतीदमपि सत्यं विहाय न दूरं याति । प्रजोत्पत्तिकाल एव तासु प्रजासु धर्मप्रवृत्तिः सूक्ष्मतयाऽऽविर्भूतेति भगवद्वचनार्थः । यत्र हि मनुष्यास्तित्वं तत्र केनापि रूपेण धर्मसत्ता वर्तत एव । गर्भस्थः शिशुर्नवमे मासि सर्वाङ्गपरिपूर्णः सन्पूर्वजातिं तत्कालिकं शुभाशुभं कर्म च स्मृत्वा—

नानायोनिसहस्राणि दृष्ट्वा चैव ततो मया ।
आहारा विविधा भुक्ताः पीता नानाविधाः स्तनाः ।
मातरो विविधा दृष्टाः पितरः सुहृदस्तथा ।
मृतश्चाहं पुनर्जातो जातश्चाहं पुनर्मृतः ।
यन्मे परिजनस्यार्थे कृतं कर्म शुभाशुभम् ।
एकाकी तेन दह्येऽहं गतास्ते फलभोगिनः ॥
यदि योन्याः प्रमुच्येऽहं तत्प्रपद्ये महेश्वरम् ।
अशुभक्षयकर्तारं फलमुक्तिप्रदायकम् ॥
यदि योन्याः प्रमुच्येऽहं तत्सांख्यं योगमभ्यसे ।
अशुभक्षयकर्तारं फलमुक्तिप्रदायकम् ।
यदि योन्याः प्रमुच्येऽहं ध्याये ब्रह्म सनातनम् ।

इत्याद्यालोचयतीति श्रूयते । अतोऽपि धर्मवृत्तिरुत्पत्तिसमकालमेव सिद्ध्यतीति व्यक्तं विज्ञायते ।

सृष्टिसमये देवैर्यज्ञा अनुष्ठिताः । 'तानि धर्माणि प्रथमान्यासन्' इति

पौरुषे सूक्तेऽपि श्रूयते । अतः साकं मानुषोत्पत्त्याऽवतीर्णस्तस्मिन्प्रविष्टश्च धर्मः कस्मै प्रयोजनविशेषायावतीर्ण इति यद्यप्यादावालोचनीयं तथाऽपि तत्पूर्वं केनांशेनेतरेभ्यः प्राणिभ्यो मनुष्येषु वैलक्षण्यं तदेव विमृश्यम् । यतस्तस्य वैलक्षण्यस्य धर्मवृत्तेश्च दृढतरः संबन्धोऽस्तीत्युद्धृतप्रमाणेभ्योऽवगम्यत इति ।

यो हि पश्वादिप्राणिषु मनुष्येषु च स्पष्टं भेदो दृश्यते स तत्तदवयवसंस्थानप्रयुक्ताकारवैचित्र्यमात्रनिमित्तको नान्यहेतुक इत्यापाततो ज्ञायते । यतः पश्वादयः स्वैः स्वैरवयवैर्याः क्रियाः कुर्वन्ति ता एव मनुष्यस्तैरवयवैर्विदधाति । आहारनिद्राभयमैथुनादयो विकाराः समाना एवोभयेषाम् । सत्येवमीशसृष्टे प्राणिनिचये मनुष्य एव सर्वोत्तम इति प्रत्नैराधुनिकैश्च विज्ञैर्यदेकवाक्यतया जोघुष्यते तत्कस्मात् । उच्यते—बाल्यादीनामवस्थानामपि सर्वसमत्वे ‘ भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः । बुद्धिमत्सु नराः श्रेष्ठाः ’ इति भगवता मनुना संकथितस्य कोऽर्थ इत्यालोचिते विशिष्टबुद्धिशालित्वमेवेतरेभ्यो वैशिष्ट्यं मनुष्येष्विति ज्ञायते । पश्वादिषु तन्नोपलभ्यते । मनुष्येष्वेव तद्दरीदृश्यत इत्ययमेव तेषां महिमा विराजतेतराम् ।

ननु मनुजेतरेष्वपि जन्तुषु बुद्ध्या भाव्यमिति प्राणितत्त्वविदां वचसाऽवगम्यते । तथा ‘ प्राणिनां बुद्धिजीविनः ’ ‘ बुद्धिमत्सु नराः श्रेष्ठाः ’ इत्येवं मनुभाषितमपीममेवार्थं द्रढयतीति चेत् । बाढम् । अथापीष्टकार्यनिष्पत्त्यर्थं सहेतुके साधने विनियोजकशक्तिर्हि मानवबुद्धेर्विशेषः । इतरत्र प्रायः प्रयोजनानुसंधानरहिताया बुद्धेरुपलम्भः । मानुषाणां तु काऽपि क्रिया प्रयोजनशून्या नोपलभ्यते । ‘ प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते ’ इत्येतद्वचोऽप्येतमर्थमुपोद्बलयति । तस्मात्प्रयोजनविशेषमुद्दिश्य कार्यकरणप्रवृत्तिसामर्थ्यं मानवमतेर्वैजात्यम् । तथा हि——इन्द्रियैरिष्टं कार्यं साधयितुं प्रयत्नवदात्मसंयुक्ते मनसि प्रेरणा जायते । या ह्यध्यवसायात्प्राङ्मनस्यव्यक्ता चेष्टाऽनुभूयते तस्या एव प्रेरणेति वा संकल्प इति मनोव्यापार इति वाऽभिधानम् । अस्याश्चेष्टायास्तिस्रोऽवस्थाः सन्ति । आदावनुकूलप्रतिकूलविचाररूपेण सा मनस्याविर्भवति । ततोऽनुकूलत्ववेदनायुता चेतसा कार्याध्यवसायमुत्पादयति । ततः कार्योद्देश्यकप्रवृत्तिजनिकामिच्छां द्रढयति । तदुक्तम्—

संकल्पमूलः कामो वै यज्ञाः संकल्पसंभवाः ।
व्रतानि नियमाद्याश्च सर्वे संकल्पजाः स्मृताः ॥ इति ।

अत्र मेधातिथिभाष्यम्—“ अथ कोऽयं संकल्पो नाम यः सर्वक्रियामूलम् । उच्यते । यच्चेतःसंदर्शनं नाम यदनन्तरमध्यवसायप्रार्थने क्रमेण भवतः । एते

हि मानसव्यापाराः सर्वक्रियाप्रवृत्तिषु मूलतां प्रतिपद्यन्ते । नहि भौतिकव्यापारास्त-मन्तरेण संभवन्ति । तथा हि--प्रथमं पदार्थस्वरूपनिरूपणम् । अयं पदार्थ इमा-मर्थक्रियां साधयतीति यज्ज्ञानं स इह संकल्पोऽभिप्रेतः । अनन्तरं प्रार्थना भवति । सैव काम इच्छा वा । तस्यां सत्यामध्यवस्यति । करोमीति निश्चिनोति सोऽ-ध्यवसायः । ततः साधनोपादाने बाह्यव्यापारविषये प्रवर्तते । यथा बुभुक्षितः प्रथमं भुजिक्रियां पश्यति । तत इच्छति भुञ्जीयेति । ततोऽध्यवस्यति । व्यापा-रान्तरेभ्यो निवृत्त्य भोजनं करोमीति ।

इमाः संकल्पाध्यवसायेच्छा एव 'विचारः संवेदनेच्छेति' संज्ञाभिर्मनसस्ति-स्रोऽवस्था इति केचन ब्रुवन्ति । विहायेमास्तिस्रोऽवस्थाः काऽपि मानुषाणां कृतिर्न घटते । इतरेषां जीवनौपयिकव्यवहारापेक्षया मनुष्याणां तादृशव्यवहारेऽयमेव महा-न्विशेषोऽस्ति । स्थिते चैवं सहैव धर्मेण मर्त्यस्योत्पत्तिरिति वैदिकसिद्धान्तात्सना-तनधर्मस्य प्रधानोद्देश्येन समं घनिष्ठः संबन्धोऽस्तीत्येव केवलं न । अपि तूक्त-मनोव्यापारशून्यां कामपि क्रियां सनातनधर्मो नापेक्ष्यत इत्युक्तौ न काऽपि क्षतिः । 'मन एव मनुष्याणां कारणं बन्धमोक्षयोः' 'मनः कृतं कृतं राम न शरीरकृतं कृतम्' इति भगवद्व्यासवसिष्ठवचसोरपीदमेव तात्पर्यम् ।

मनस इमास्तिस्रोऽवस्थाः समुन्नेतुं मानुषोत्पत्तिसमकालमेव धर्ममुत्पादयामास जगन्नियन्तेश्वरः । पर्यालोचितायामस्यां धर्मस्याऽऽद्यक्षणसंबद्धसत्तायां सुव्यक्तमिद-मवगम्यते यन्मानवशक्त्यपेक्षया समधिका काऽपि दिव्या शक्तिश्चकास्ति यदधीनं सर्वथा मानुषकृतकर्मणां फलदातृत्वमिति । किन्त्वस्याः स्वरूपनिर्वचनं न सर्वत्र समं परिदृश्यते । एतस्मिन्धर्मे निरवधिकानन्दमूर्तिरीश्वर उपदिश्यते यदि तर्ह्यन्य-धर्मे ईश्वरो नाम प्रत्यहं संकुलसंग्रामेण शत्रूनुन्मूल्य तेषामाकण्ठं शोणितपानकर्ता चण्डतरविक्रमो योद्धेत्युपलभ्यते । केचनाऽऽखेटसमये सनीरनीरदनिर्घोषवद्गम्भीरग-र्जनेन सत्त्वान्वित्रासयत्सु सिंहशार्दूलप्रभृतिषु हिंस्रप्राणिष्वेवेशप्रतिमां प्रत्यक्षयेयुर्यदि तर्ह्यन्ये शान्तस्वभावाः कृषीवलाः कृषिं सफलयन्तो वारिवाहा एवेशस्य मूर्तं स्वरू-मित्यालोचयेयुः । केषांचिन्नीतिपारावार ईश्वर इति भासेच्चेदन्ये विज्ञाः समस्तवि-द्याधिपतिरीश्वर इति समधिगम्य तं स्तुयुः । इत्थं स्वस्वोच्चानुच्चबुद्ध्यनुसारमीश्वरं प्रकल्प्य स्वस्मादुच्चतमसामर्थ्यस्य तस्योपासनायां यथाधर्मं व्यापृतो भवति मर्त्य इति सर्वत्रोपलभ्यते । यदा खल्वयं वैदिकः सनातनो धर्मः प्रत्नैर्धर्मतत्त्वविद्भिः प्रतिपदमुपदेशतोऽनुष्ठानतश्च परिपूर्णतां गमितस्तदा तदेकशरणतया समुन्नतः परां कोटिमारूढो भारतीयविपश्चित्समूहश्चतुरशीतियोन्यन्तर्गततरप्राणिभ्यो मानुषेषु दरी-

दृश्यमानवैलक्षण्यमीमांसोपदर्शितसर्वाधिष्ठात्रीश्वरशक्तेर्याथात्म्यं सम्यक्प्रतिपादयामासेत्येत्र केवलं न, अपि तु महता पौरुषेयेणेशतादात्म्यं संपाद्य प्रतीयमानः काल्पनिको भेदः प्रज्ञानेन प्रविलापितश्चेदेव कृतकृत्यो भवति मर्त्य इतीदमेव सनातनधर्मस्य परमं प्रयोजनमिति त्रिकालाबाध्यं श्रुतिसिद्धान्तं सम्यगनुभूय स्वीयपूताचरणेन लोकोद्धाराय ख्यापयामास ।

कोऽपि धर्मः स्वमनुसरतां मानवानामीशप्राप्त्यर्थं तदनुग्रहयोग्यतासिद्ध्यर्थं वा केनापि स्वरूपेण तत्र तत्र सत्तां लभत इत्यविवादम् । देहपातादनन्तरं भगवन्निकटे वयं स्थास्यामस्तत्कृपाकटाक्षमनुभवन्तु तत्सेवकेष्वन्तर्भूता वा भविष्याम इति भावना वैदिकेतरधर्मेषु प्रायेण दृश्यते । सनातनधर्मिणां तु सतां विज्ञानां जीवन्मुक्तिद्वारा स्वस्मिन्प्रतीयमानमाविद्यकं वितथं भेदं प्रविलाप्य सच्चिदानन्दात्मना ब्रह्मस्वरूपेण चिरायावस्थास्याम इत्याकाङ्क्षा भृशमनुभूयते । इयमद्वैतस्थित्याकाङ्क्षाऽवैदिकेषु धर्मेषु क्वापि नोपलभ्यते । इमां स्वीयसत्कर्मोपबृंहितज्ञानेन संपाद्य जीवन्मुक्तः सन्विदेहावस्थयाऽपि संसारयात्रां जलान्तर्गतपद्मपत्रमिव कर्तुं क्षमते मानवः ।

इयं मानादबहिर्भूता प्रत्नतमानुभवपुनरुक्ता च कल्पनाऽन्येषां केषामपि विस्मयातिशयमुत्पादयेत् । परं वैदिकधर्मीयैर्मीमांसितमात्मनो याथात्म्यं सम्यगालोचितं चेदत्र किमप्यसामञ्जस्यं नान्या काऽप्येतत्तुल्या युक्तिगाढा तत्त्वस्पृक् कल्पनेति च व्यक्तं विज्ञायेत ।

तत्त्वविद्भिः प्रत्नैर्महात्मभिः सच्चिदानन्दस्वरूप ईश्वर इत्युक्तम् । अर्थात्सत्, चित्, आनन्द इति त्रिभिः शब्दैर्यत्सर्वथाऽविनाशि, अजडं दुःखास्पृष्टं च निखिलविश्वबीजमद्वितीयं वस्तु स एव परमेश्वरः, सैवानाद्यनन्ता शक्तिः, तदेव च परं ब्रह्म, तदेव च जीवमात्रस्य मौलिकं परिशुद्धं स्वरूपं, तदेव हि सनातनवैदिकधर्मस्य मुख्यमुद्देश्यमित्यभिहितमित्यवगन्तव्यम् ।

एताभिः सच्चिदानन्दाख्याभिस्तिसृभिरवस्थाभिः साकं प्रागुक्तानां विचाराध्यवसायप्रार्थनानां तिसृणां मनोवृत्तीनां यः संबन्धः सोऽपि विचारणीयः । तत्राऽऽद्या विचारावस्था विमृश्यते–शाश्वताशाश्वतयोर्निर्णयो हि सुविचारशक्तेः कार्यम् । संदिग्धस्य वस्तुनः सुविचारनिकषोपलेन संघर्षः सत्यान्वेषणमुद्दिश्यानुष्ठीयते । सेयं विचारशक्तिर्यथा विकसिष्यति तथाऽस्य सत्यान्वेषणशक्तिर्विवर्धते । अनया च नैकविधाः प्राकृतीश्चमत्कृतीरवलोक्य किमासां कारणमिति जिज्ञासते मनुष्यः । अद्य दृष्टं वस्तु श्वोऽन्यथापरिणतं वीक्ष्य प्रागनभूताऽस्य स्थितिरनित्येत्ययनमाय कालेन कियताऽपि

विनष्टं तदशाश्वतमेवेति निश्चिनोत्यनया शक्त्या । इत्थं चिराय निरीक्षणेन चराचरमिदमखिलं विनश्वरमेवेति निश्चिते दृश्यानुभवसहकृतेन विजातीयलिङ्गेन जगद्बीजमेव शाश्वतिकं तदन्यत्सर्वं तस्यैवाशाश्वतं रूपान्तरमिति निर्धारयति । अनयैव दिङ्मात्रोदाहृतया विचारसरण्या बह्वर्थगर्भितेन ' जन्माद्यस्य यतः ' इति सूत्रेण ब्रह्मणो लक्षणं बबन्ध व्यासमुनीन्द्रः ।

यन्नित्यं तत्सत्यम् । यदनित्यं तदसत्यम् । अत्र नित्यानित्यशब्दौ सत्यासत्यवचनौ । अखिलब्रह्माण्डस्य कदाऽप्यशुष्यदङ्कुरो यस्तत्सत्यम् । ततः परमात्मा सत्स्वरूप इति श्रुतिसिद्धान्तस्तर्कानुगृहीतः समुज्जृम्भते ।

इमां विचारशक्तिमुपजीव्य सुखवर्त्मनि चक्षुर्व्यापारितं चेद्दीप्राः परःसहस्रास्तारा स्वीयतेजोभिर्दृष्टिमुज्ज्वलयन्तीरवलोक्यानन्तकोटिब्रह्माण्डबीजमात्मनाऽनन्तं चिद्रूपमेवेति संवित्स्फारं हृद्दर्पणे प्रतिबिम्बते । ' सत्यं ज्ञानमनन्तं ब्रह्म ' इति श्रुतिसिद्धान्तः स्फुरति । इत्थं सुविचारदिशा सत्स्वरूपमाकलयितुं पार्यते विवेकिना मानवेनेति बोध्यम् ।

संवेदनाशक्तिः सुखदुःखाद्यनुभवमुत्पादयति । जगत्यस्मिन्यस्मात्तद्विषयस्तेन आनन्दः संजायते तस्य महान्तमंशमहमनुभवेयमित्यभिनिवेशेनाविरतं प्रयतते मर्त्यसार्थः । अनुकूलसंवेदनाया उत्पादयितॄणि वस्तूनि चित्तं लालुपं भवति । परं क्षणमात्रमनुभूत आनन्दस्तत्रास्ते यातीत्यनुभवः । यदेकस्माद्वस्तुनः स्थास्न्वानन्दो न प्राप्यते तदाऽऽनन्दानुभवेऽलंभावो भवतीति न । अपि तु तत्प्रकारे वैरस्यं जायत इत्येव । कुसुमामोदज आनन्दः क्षणं तिष्ठति यदा तदा तस्यान्यावलोकनजन्य आनन्दो दिनमेकमवतिष्ठेत । एवमुच्चैरानन्दस्य क्रमेणान्वेषणे कृते यस्मिन् साक्षात्कृते कदाऽप्यानन्दस्य विच्छित्तिर्न जायते तादृशमेकं भूमाख्यं तत्त्वमनुभूयेत । पारमेश्वरं तत्त्वमानन्दमयमेवेति च ज्ञायेतेति ।

आब्रह्मस्तम्बं सर्वेषां प्राणिनामविश्रान्ता प्रवृत्तिः, सूर्यचन्द्रादितेजोगोलकानामन्तरिक्षे नैरन्तर्येण परिभ्रमणं, चक्रनेमिक्रमेण प्राणिसमूहे प्रभविष्यः सुखदुःखावस्थाः, जगति न्यूनाधिकभावश्चेत्येवमादीनां दर्शनेन जिज्ञासोर्मनसि संततप्रवाहेण प्रवहतश्चैतन्यस्य कुत्रोद्गमस्थानं स्यादिति विचारः समुदेति । निखिलाण्डकटाहमव्याहतं लीलया परिभ्रमयन्ती शक्तिश्चेतनैवेति दृढा वृत्तिराविर्भवति स्म । अत एव सा जगद्बीजशक्तिश्चिन्मयेति निर्धारयति सुविचारवान्पुरुषः ।

' कारणगुणाः कार्यगुणानारभन्ते ' इति न्यायविदां सिद्धान्तात्परिदृश्यमानस्य समस्तस्यापि जगतः कार्यत्वात्तत्कर्तुः परमेश्वरस्य कारणत्वाच्च कार्ये जगति

तत्र तत्र यथायथं सच्चिदानन्दान्गुणानुपलभ्य कारणेऽपि तैर्गुणैरवश्यं भाव्यमेवेति तर्किते दृढविश्वासे वा देवानांप्रियं विहाय कोऽन्यः पुमानयुक्तं तदिति ब्रूयात् । श्रुतिष्वपि सच्चिदानन्दं ब्रह्मेत्युपदिष्टं तत्र तत्र विस्तरभयान्नेह ता उदाह्रियन्ते ।

तेन तेनेन्द्रियेण यद्यद्गृह्णात्ययं मानवस्तत्सर्वमुक्तासु तिसृष्ववस्थास्वेकया द्वाभ्यां तिसृभिर्वा गृह्णाति । यत्सत्यं सुरुचिरमुपयोगि च तदनर्घं भवति व्यवहारे । वस्तुन उत्कृष्टत्वनिकृष्टत्वे तदनुस्यूतसच्चिदानन्दांशानां न्यूनाधिकभावापेक्षे विचारितेऽप्यनेकशो नान्यनिमित्तके इत्यनुभूयते विज्ञैः । जडानुगत एवायं नियम इति न किंतु निःशेषमपि चेतनाचेतनं जगत्क्रोडी करोत्यसौ नियमः । या हि कल्पना सत्यं न जहाति मनोज्ञा संवादिनी च सा विनैव यत्नं मानवमनः स्वाधीनं कुरुते । पुरुषर्षभाणां श्रेष्ठत्वमप्येवंविधकल्पनाधिनाथत्वेनैव । यैरेतादृशकल्पनानां निधिर्मानवहितायात्र निहितो ग्रन्थरूपेण तेषामानृण्यार्थमुपायवैविध्यमनुष्ठीयते कृतज्ञेन नरेण । श्रद्धया तान्स्तौति पूजयति तदुक्तमभ्यस्यतीत्यादि । इत्थं विचारसंवेदनेच्छास्तिस्रः शक्तयः श्रैष्ठ्यपरीक्षानिकषोपलाः सन्ति मानवसंनिधौ । अतस्तासां वृत्तीनां यदखण्डमनन्तं चाधिष्ठानं चैतन्यं स एव परमेश्वर इति वैदिकधर्मीयैस्तत्त्वविद्भिर्यत्परब्रह्मणः स्वरूपनिरूपणं कृतं तद्याथार्थ्येनैव समुज्जृम्भत इति ज्ञेयम् ।

यासां हि तिसृणां शक्तीनां श्रेष्ठतमं निधानमीश्वरस्ताः सुसूक्ष्मतया मनुष्यमात्रे जन्मसिद्धा अपि प्रयत्नेनोच्चैः कर्तुं पार्यन्त इति कल्पना मनसि सम्यगारूढा चेन्नरः स्वीयपौरुषेण नारायणो भवितुमर्हेदिति कल्पनाऽप्याविर्भवेत्तच्चेतसि क्रमेण । अद्वैतस्थित्युत्पत्तावुक्तमनःस्थितिः परं दृढाऽपेक्षिता । सनातनधर्मेण हि मानवमनोवस्थाः संविविच्य तासां मूलं चान्विष्येह सुप्रकाशितम् । अतस्तदधिष्ठानकः पारमेश्वरीयमीमांसात्मकः प्रशस्ततमः प्रासादोऽस्मिन्भारते वर्षे विजयतेतराम् । सरूपतां सलोकतां समीपतां च संप्राप्यानन्तरं यत्सायुज्यता संपाद्यते समर्थेन पुरुषश्रेष्ठेनेतीदमेव मानवजन्मनः परमं ध्येयं कर्तव्यं चेति निःसंदेहमुच्चैरुपादिशति वैदिकः सनातनो धर्म इति न विस्मर्तव्यं केनापि ।

ननु ब्रह्मसायुज्यमेव मनुष्यजन्मनः परमं ध्येयमिति कुतो निश्चीयत इति चेदेतद्रहस्यं सनातनधर्मोपदिष्टं पुनर्जन्मनस्तत्त्वं सम्यगालोचितं चेदेव ज्ञातुं शक्यम् । यद्यपि वैदिकेतरधर्मनामसु पथिषु पुनर्जन्मवादोऽयं प्रायशो नोपलभ्यते तथाऽपि प्राचामाधुनिकानां च प्रेक्षावतां तत्त्वविदामैकमत्येन संमतं तत्त्वं तु सनातनधर्मो-

पदिष्टः पुनर्जन्मवाद एव । अयं पुनर्जन्मवाद एव वैदिकधर्मस्येतरेभ्यो वैशिष्ट्यं ज्ञापयति तस्मिंश्चाऽऽदरभावमुत्पादयति ।

यदेकस्यामेव परिस्थितावुत्पन्नानां व्यक्तीनां जीवनक्रमे दृश्यमानं वैचित्र्यं तथा कौमार एवैकस्मिन्ननुभूयमाना कुशाग्रा बुद्धिरन्यस्मिंश्चासकृद्बोधेनाप्यनिवर्तमानं मतिमान्द्यमित्यादिवैषम्याणीं मनसः समाधानकरं सुव्यक्तं किमुत्तरमिति चेत्कर्मवादः पुनर्जन्मवादश्चेत्येवमेव नान्यत् ।

योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ।
स्थाणुमन्येऽनुसंयान्ति यथाकर्म यथाश्रुतम् ।

इत्यादिश्रुतिरपि प्रतिपदमनुभूयमानवैषम्याशङ्कोत्तरत्वेनेदमेव तत्त्वं व्यक्तमुपदिशति ।

स्वकामनानुरूपाणि दुःखानि नरके पुनः ।
अनुभूयाथ योनीषु जायन्ते भूतलेऽचिरात् ।
शरीरजैः कर्मदोषैर्याति स्थावरतां नरः ।

इत्यादिस्मृतिरपि तदेव श्रौतं तत्त्वमनुस्मरति च ।

यत्तु कश्चिदस्य वैषम्यस्योत्तरमित्थं ददाति । प्रत्येकं जन्तोः प्रगत्यैवोन्नतिर्जायते । एकस्यां जातौ निरुपयोग्यंशः कालेनास्तं गच्छति । मानुषस्याऽऽद्यः पूर्वजो मर्कटोऽभूत् । अग्रेऽप्ययं मर्त्यः क्रमेणोन्नतिं गच्छन्देवाकृतिं प्राप्नुयात् । इत्यद्भुतं स्वैरं मतं प्रतिपादयंस्तेन तेन मानुषेण याऽऽकृतिर्यानि चक्षुरादीनीन्द्रियाणि गुणदोषाश्च जन्मत एव प्राप्यन्ते तस्य कारणं मातापितरौ पूर्वजाश्च भवन्तीति ।

अन्ततो गत्वा विचार्यमाणे त्विदं तदुत्तरमुत्तराभासान्न बहिर्भूतम् । तथा हि—यद्यस्मिन्नेव जन्मनि मानुषाकृतिं प्राप्तोऽयं मर्त्यस्तर्हि तस्य चिपिटनासाया अवयवानां न्यूनाधिकभावस्य नैकविधरोगाक्रान्तताया दारिद्र्यादिप्रयुक्तदुःखस्य च किं कारणमिति पृष्टेऽङ्गुल्या तत्पूर्वजान्निर्दिशेत्सः । अस्मत्पूर्वजैर्यच्छुभाशुभं कर्म कृतं तस्य फलमहमनुभवामीत्युत्तरयेच्च । तत्रान्यकृतकर्मणः फलभोक्ताऽन्य इत्यायाति । तथा सति सर्वप्रसिद्धस्य कर्तृत्वभोक्तृत्वयोः सामानाधिकरण्येन कार्यकारणभावस्य भङ्गप्रसङ्गोऽकृताभ्यागमकृतविप्रणाशदोषौ च प्राप्नुवन्ति ।

किंचास्योच्छृङ्खलमतस्य जगति विपरीतः परिणामो दृश्यते । तथा हि—नीतिर्बाहुल्येनास्तं याता । तस्याः स्थानमनीत्या समाक्रान्तम् । लोको भौतिकैश्वर्याय नितरां स्पृहयन्संवृत्तः । सत्यं पराङ्मुखं जातम् । अनृतं प्रवृद्धम् ।

आर्जवं लुप्तप्रायमनार्जवं च काममन्नतशिरस्कं दरीदृश्यते । सदाचारोऽस्तं गतः । अनाचारेण ताण्डवमारब्धम् । एवमेवेहोच्छास्त्रपौरुषेणाभ्युदयलिप्सा सर्वत्रोपलभ्यत इत्यादिः । तथा मत्पूर्वजराचरितस्य कर्मणः फलं यदि मया भुज्यते तर्हि मद्नुष्ठितस्यापि सम्यगसम्यक्कर्मणः फलं मद्वंशज उत्तरस्मिन्समन्वीयान्न तस्योपभोगो मत्समवेत इति यथा मत्सुखमनपेक्ष्यैव पूर्वजाः स्वैरं विहारमकुर्वन् । येनाहं दुःखेन भृशं तप्ये । नाहं तदानी तैर्जात्वपि स्मृतः । मयाऽपि तर्हि भविष्याः संततेः सुखदुःखयोर्विचारः किमर्थं विधेयः । यत्स्वसुखायालं तदेवानुष्ठास्यामि । तस्य विषतुल्यः परिणामश्चेत्स उपभुज्येतोत्तरसंतत्या । तदर्थं मया सुखपराङ्मुखेण किमिति भाव्यम् । पर्याप्ता हि निधिर्वर्तते मत्संनिधौ धनस्य । ततो यथेष्टं स्वैरं विहृत्य निःशेषयामि तं निधिम् । भैक्ष्येणान्येन केनापि वाऽप्युपायेनोपजीवयेयुस्ते मद्वंशे भविष्यन्तो जीवाः । एवमादिर्निर्गलः प्रलापः कृतिरूपेण परिणतः समाजे । इत्थं वैषम्यहेतोराशङ्कायां यदुत्तरितं क्रमोन्नतिवादमाविष्कुर्वता केनचित्तत् ' विनायकं प्रकुर्वाणो रचयामास वानरम् ' इतिवदेवावगन्तव्यम् ।

सनातनार्यधर्मोपदिष्टायां तु संचितप्रारब्धक्रियमाणेतिकर्मविभजनायां तदनुसारिण्यां च जन्मपरम्परायां प्रामाणिक्यामङ्गीकृतायां क्वापि विलीयते वैषम्यहेत्वाशङ्कया मनसा च निर्मलीभूयत इति समीक्ष्यकारिणामनुभवः । मानवबुद्धेः सहसाऽगम्यमेतत्पुनर्जन्मतत्त्वं येराविष्कृतं जगति ते साक्षात्कृतजगन्मूलतत्त्वा महर्षयो निरस्तसमस्ततमःप्रसारा आधिकारिका महात्मान आसन्नित्यवधेयम् ।

प्रौढावस्थां गमितस्य भौतिकशास्त्रस्येदमेकं मुख्यं तत्त्वमस्ति यद्वस्तुनः शक्तिर्जात्वपि विनाशं न याति । सा केनापि रूपेण स्वीयास्तित्वमाविष्करोत्येवेति न तस्याः क्षयः कदाऽपि जायत इति । सत्यवं जनिमापन्नोऽयं मनुष्यो जन्मप्रभृत्यादेहपातं या याः काश्चन क्रियाः करोति ताभ्यः सर्वाभ्यः समुत्पन्नैका शक्तिः पञ्चभूतोत्पन्नैतद्देहविलयसमकालमेवास्तं यातीति कल्पना तेषां भूततत्त्वाविदां परं विस्मयातिशयमुत्पादयति स्म । उपरिनिर्दिष्टभौतिकशास्त्रनियमानुसारेण तद्युक्तमेव । किंतु तस्या शक्तेः कथं कीदृशं च रूपान्तरं जायत इत्यस्य सोपपत्तिकमुत्तरं नाऽऽसादितं तैः । यदा तु परेतो जन्तुः स्वकर्मानुसारं जगति पुनर्जायत इति वेदादिशास्त्रतः समुपलब्धं तैस्तदा समुन्मीलितनेत्राणां तेषां विनिर्भिन्नश्चिरायाऽऽरूढः स संशयग्रन्थिः । बद्धादराश्चाभूवंस्ते भौतिका अस्मिन् वैदिके धर्मे ।

नन्वेवं चेत्कर्मायत्तमिदं पुनर्जन्म महता यत्नेन परिहार्यं पुंसेति कस्मादुपदिशति वैदिको धर्म इति चेत् । सच्चिदानन्दात्मनः परमेश्वरस्य यत्समासतो विवरणमधस्तात्प्रदर्शितं तदनुस्मृतं चेदनायासेन ज्ञातुं शक्यमिदं पुनर्जन्मपरिहार्यत्वरहस्यम् । तथा हि—अस्मिन्मानुषदेहे स्थित्वा प्रकाममैहिक्यभ्युन्नतिः संपादिताऽपि जीवेन तथाऽप्यात्मनः सच्चिदानन्दादयो गुणाः शरीराद्युपाध्यनुवृत्तिं यावत्परिच्छिन्नमिमं भूभागं विहायान्यत्र पौरुषं प्रकटयितुमक्षमा एव । अस्माद्भूगोलात्परतो विद्यमाने प्रत्यहं चक्षुरादिविषये खगोलादावपि यत्तेषां निराबाधं स्वाराज्यं स एव तेषां परितः पूर्णो विकासः । तदेव चेश्वरेण समं स्वस्यैक्यापादनम् । उपाधिकृतभेदनिरासोऽपि स एव निसर्गसिद्धः । शरीराद्युपाधिस्तु तस्य विकासस्य बलवत्तरः प्रत्यूहः । शरीरपातादूर्ध्वमपि निरुपाधिकायां स्थितावस्थितिश्चेदेव नैजपुरुषकारसमासादितापरिच्छिन्नशक्त्यात्मना व्यक्तीभावः संपद्यत इति शरीराद्युपाधिना समं तस्याः शक्तेस्तादात्म्यं पुनर्यथा न संभवेत्तथाऽवस्थितिरक्षय्या संपादनीया । तदेतत्सर्वमुपाधिनिरासैकसाध्यम् । सत्येवं विपुलं संगृहीतेऽपि शुभकर्मणा पुण्यसंचये समासादितेऽपि च मृत्योरूर्ध्वं देवादियोनिषु जन्मनि शरीराद्युपाधेः सद्भावाद्यावदुपाधि च सदादिशक्तीनां प्रसरस्य परिच्छिन्नाधार एवावस्थानेनैव ताः शक्तयः पूर्णतया विकसयेयुर्नापि परिच्छिन्नाधारं त्यजेयुर्नैव वाऽपरिच्छिन्नशक्त्यात्मना व्यक्तीभावं भजेयुरित्यालोच्य कास्वपि योनिष्विदं कर्मायत्तं जीवस्य पुनर्जन्म माऽस्त्वित्युपदिशति वेदराशिः । अत एवोर्ध्वबाहुः सन्नयं सनातनो धर्मः सर्वानेव मानवानुद्दिश्यास्माज्जननमरणचक्रान्मुक्ता भवत महता प्रयत्नेनेति निरन्तरमुपदिशति । निखिलं विश्वमभिव्याप्यावतिष्ठमानैः सच्चिदानन्दैस्ताद्रूप्यापादनमेवेतरेभ्यः प्राणिभ्यो मानवनिष्ठविशिष्टबुद्धिशालित्वरूपवैजात्यस्य पूर्णो विकास इति यस्य परमं प्रतिपाद्यं सोऽयं सकलजनजीवातुर्निःश्वसितवद्भगवन्मुखारविन्दविनिःसृतशाश्वतसरस्वतीसंस्तुतो विश्वपूज्यो महाभागः सनातनो धर्मो ब्रह्मसायुज्यमेव परमः पुरुषार्थ इति समस्तं विश्वं ज्ञापयतीत्यत्र न किमपि विस्मयास्पदम् ।

समन्ततश्चक्षुर्व्यापारितं चेदिदमेव वस्तुतत्त्वं तत्र तत्र व्यक्तं दृग्गोचरी भवेत् । यद्बीजादुत्पन्नो वृक्षः पुनर्बीजावस्थां प्राप्नोति सा तस्य बीजात्मनाऽवस्थितिर्यदि तद्बीजमङ्कुरोत्पत्तिक्षमायां भूमौ न पतेत्तर्ह्येव चिरं तिष्ठत्यन्यथा पुनर्वृक्षात्मना परिणमतीति । तद्वदयं जीवो ब्रह्मसायुज्यमन्तरा दृश्याद्दृश्यजगदनुस्यूतस-

च्चिदानन्दांशैस्तादात्म्यं नैव प्राप्नोति । तथा सशरीरावस्थायां कृतैः प्रयत्नैः समासादिताऽपि क्षमता स्वस्मिन्विद्यमानस्य तत्तदुपाधिसंश्लेषस्य प्रविलापनं विना व्यक्तीभावं नाऽऽयाति च । अत एवेदं पुनर्जन्म यत्नतः परिहार्यं मानवेनेत्यसकृत्सूचयति वैदिकं धर्मशास्त्रम् ।

पुनर्जन्मनिवृत्तिरेवाऽऽत्मनो मोक्षः । तदेव च ब्रह्मसायुज्यम् । सैवेशप्राप्तिः । स एवाऽऽत्यन्तिको दुःखध्वंसः । तदेव चास्य वैदिकधर्मस्योच्चतमं ध्येयम् । धर्म एव हि तस्याऽऽद्यं साधनमिति वैदिकप्रमाणशरणानां मन्वादिस्मृतिकाराणां व्यासजैमिनिमुनिप्रभृतीनां दार्शनिकानां भगवत्पूज्यपादश्रीमच्छंकरमस्करीन्द्रप्रभृतीनां भाष्यकाराणामन्येषां च धर्मब्रह्मगोचरप्रबन्धान्ग्रथ्नतां विद्वच्छिरोरत्नानामभिमतम् ।

यथेदं सिध्येत्तथाऽस्य धर्मस्य प्रक्रियाऽस्तीति वेदादिग्रन्थतः सद्गुरूपदेशतः स्वीयानुभवतश्च ज्ञायते । तथा हि—प्रागुक्तानां तिसृणां वृत्तीनां सर्वात्मना विकास एव मनुष्यजन्मनः फलमिति सिद्धान्तात्तत्साधनभूतस्यास्य धर्मस्यापि कर्मोपासनाज्ञानेति मार्गत्रैविध्यं ज्ञेयम् । अत एव च तस्य कर्मादेः प्रतिपादको वेदभागः कर्मकाण्डोपासनाकाण्डज्ञानकाण्डेतिशब्दैर्व्यवह्रियते । त एते मार्गास्तिसृणां शक्तीनां परिपोषकाः । तत्र ज्ञानेन विचारशक्तेरुपासनया संवेदनाशक्तेः कर्मणा चेच्छाशक्तेर्विकासो जायते । तत्र प्रकृतत्वादशेषभव्यजनकत्वाच्च कर्तृत्वशक्त्यपरनामिकाया इच्छाशक्तेर्विकासहेतुभूतस्य महर्षिप्रतिष्ठापितकर्ममार्गस्य स्वरूपं किंचिद्विवोपन्यस्यामः । तत्र कश्चिदेवं सावेगमाह धर्मो ज्ञेय एव नानुष्ठेय इति । कश्चित्त्वयं कर्ममार्गो येऽलसा मन्दा निष्पौरुषाश्च तेषामुपजीविकासाधनम् । अनेनैवास्य भारतवर्षस्य महती हानिर्जातेति परमगम्भीरं विचारं देशहितभरितस्वान्तः समाजे निर्गलं प्रकटयति । कैश्चिद्विद्वन्मन्यैः सनातनधर्मावहेलनबद्धादरैः स्वाभ्यूहितं नूतनं धर्मं प्रवर्तयितुं कीलोत्पाटिना वानरेणेव प्रयत्यत इति नाविज्ञातं विपश्चिताम् । सदाचारमुद्दिश्य ये सूक्ष्मा नियमाः प्रदर्शिता धर्मग्रन्थेषु तानवलोक्याद्भुतमतिमन्तः केचनाऽऽधुनिकाः सर्वथाह्रासकारिसांप्रतिकशिक्षणशालासु पाठ्यमानह्रीलादिपुस्तकैः सह साम्यं कल्पयन्ति तादृशधर्मग्रन्थानाम् । दिगियं प्रदर्शिताऽऽधुनिकानां प्रागतिकतत्त्वावलम्बनव्याजेन राष्ट्रोद्धारमिषेण वा चक्रीवद्ध्वनिन्यायमनुसृत्य प्रासिद्धिमिच्छतां शिश्नोदरपरायणानां वाचाटानाम् । एतेषां मनसि कुतश्चित्कारणादित्थमेका कल्पना दृढं प्रविष्टेत्यनुमीयते । 'यद्धर्मो नाम जगत्संबन्धिगूढरहस्यानामाविष्कारकं गणितरसायनादि-

वदेकं शास्त्रम् । तत्त्वज्ञानमेवास्य प्रमेयम् । द्वित्रेषु धर्मग्रन्थेषु सकृद्दृष्टेषु भवत्येवास्य स्थालीपुलाकन्यायेन ज्ञानम् । किमधिकेनामूल्यवेलापहारिणा प्रयत्नेनेति । अतः परमाधिकोऽस्य मर्त्यस्य धर्मेण साकं संबन्धो नास्तीति मन्यते तैरद्भुतविवेकशालिभिः । इत्थमेतद्धर्मोत्पन्नैरपि तैः कटाक्ष्यतेऽयं कर्ममार्गः प्रमत्ततया । केचन तु कतिपयान्यौपनिषद्वचांस्यवलम्ब्य कर्ममार्गमुपेक्षयन्ति । किंत्वेतैर्येषां वचांस्युदाहृत्य किमपि ज्ञानं प्रशस्यते ते सर्वेऽप्यृषिप्रमुखास्तात्त्विकाः सन्तोऽनुष्ठेयधर्ममार्गानुसारिण इति वेदादिभ्यः सिध्यतीति न विस्मर्तव्यं तैः ।

धर्मं चर, कुर्वन्नेवेह कर्माणि जिजीविषेच्छत॰ समाः, ईजे यज्ञेभिः शशमे शमीभिर्ऋधद्वारायाग्नये ददाशः, हविर्भिरेके स्वरितः सचन्ते सुन्वन्त एके सवनेषु सोमान्, अपाम सोममृता अभूम । न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते । कर्मणैव हि संसिद्धिमास्थिता जनकादयः। यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् । यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् । आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः । ऊर्ध्वबाहुर्विरौम्येष न च कश्चिच्छृणोति मे । धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते । विहितस्याननुष्ठानान्निषिद्धस्य च सेवनात । अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति । भव्यश्च धर्मो जिज्ञास्यः । स चानुष्ठानापेक्षः । नहि यत्नेन कर्तुं शक्यते स धर्मो भवति, अपि तु यं प्रति यः शास्त्रेण कर्तव्यतया विहितः स एव तस्य धर्मः । चोदनालक्षणत्वाद्धर्मस्य । इत्यादिशास्त्रकारवचननिचये पर्यालोचिते कृतिविषयो धर्मो मनुष्यमात्रेण यथाधिकारमनुष्ठेयो भव्याय, न केवलं जिज्ञास्य इति निश्चीयते ।

धर्मानुष्ठानेन चित्तशुद्धिर्जायत इति वेदादिशास्त्रस्य मुख्यः सिद्धान्तः । दुष्कर्मणः पराङ्मुखता सत्कर्मणि चौन्मुख्यमित्येतादृशमनोवस्थायाश्चित्तशुद्धिरिति संज्ञा । सा च धर्मानुष्ठानतो येन प्रकारेण भवति तथाऽत्र विमृश्यते—

विहितं निषिद्धं चेति द्विविधं कर्म वर्तते । तत्र येष्वाचरितेषु मनुष्यस्य शाश्वतिकाभ्युन्नतेः प्रतिबन्धो जायते तानि निषिद्धकर्माणि तात्कालिकमधुरफलान्यपि मानुष्ठेयानीति प्रतिपदमुपदिशति शास्त्रं स्वैरवृत्तीन्मानवान् । 'न सुरां पिबेत् । मानृतं ब्रूयात् । न जिह्ममाचरेत् । न साहसं प्रतिपद्येत । न स्तैन्यमाचरेत् । न पूज्यमतिक्रामेत् । न ब्रह्मचर्यमधः कुर्यात् । न कर्तव्यं लङ्घयेत् । नाऽऽलस्यं गच्छेत् । न प्रमादं कुर्यात् । नैष्ठिकीं हिंसां कुर्यात् । इत्यादिनिषेधा मानवहितायैव निर्दिष्टा वेदादिशास्त्रेषु । यो हि निषिद्धकर्मनिरतः स चिराय धर्मा-

द्विच्युतो भवति । नीतिशास्त्रमपि निषिद्धकर्मणां निषेधं परिपुष्णाति । प्रत्येकं नीतिवाक्यं स्वैरं विहरतः पुंसो यथेष्टाचरणं कयाऽपि बिभीषिकया नियमयदन्ततो निषेधे पर्यवस्यति । धर्मशास्त्रदृष्ट्या नीतिधर्मयोः संबन्धो हर्म्यतन्मूलपादबन्धवज्ज्ञेयः । यद्यपि नीतिमन्तरा धार्मिको भवितुं नार्हति तथाऽपि नीतिमान धार्मिक एवेति न नियमः । धार्मिकत्वं नीतिमत्त्वापेक्षया परमेव । उच्चैर्नीतिमत्यप्यधार्मिकत्वमूलं नास्तित्वयं नानुभवागोचरम् । धर्मशून्या नीतिरनर्थावहेत्याधुनिके जगति निरीक्षिते व्यक्तं विज्ञायेत विवेकिभिः । अतो धर्मस्य मूलबन्ध इति बुद्ध्वा सर्वाणि नीतिवचनानि धर्मग्रन्थेषु संगृह्य तेषामध्ययनाध्यापनादौ यद्दूरदर्शित्वमाविष्कृतं शास्त्रकृद्भिस्तत्सर्वथाऽऽशंसनीयमेव । अत एव धर्मं चरेत्युपदेशात्प्रागेव सत्यं वदेत्युपदिशति श्रुतिः । यतो धर्मस्य प्रयोजनं मोक्षः । ततस्तत्प्रतिकूलानाचारान् विचारांश्च निषेधति धर्मः । तं निषेधमपरिपालयता मानवेन पुनरावृत्तिचक्रं दूरीकर्तुमशक्यमित्यूर्ध्वबाहुः सन् कथयति च ।

तस्मात् दूरं समुत्सार्य निषिद्धानि कर्माणि तद्व्यतिरिक्तान्यनेकानि कर्माणि यथाधिकारमनुष्ठेयानि मानवेनेत्युपदेशो धर्मस्येति सिध्यति । विना कर्म नैव किमपि फलं प्राप्यते मानवेन । कर्तृत्वशक्तिमतः पुंसः किमप्यसाध्यं नास्त्येव । परमियं कर्तृत्वशक्तिर्मोक्षानुकूला चेदेव क्रमशः प्रविकासेन चिच्छक्त्या तादात्म्यं भजते नान्यथा । अत एवायं कर्ममार्गः सम्यङ्मर्यादितो धर्मतत्त्वविद्भिः प्रत्नैर्मुनिभिः ।

ईश्वरो ह्यनन्तरूपेणेदं जगदभिव्याप्य यया स्वीयाचिन्त्यानन्तशक्त्या तत्सव्यक्प्रचारयति तया मत्समवेतया भाव्यं नाम मयि तस्याः संचारो भवत्विति हेतोर्दिव्यशक्तियुतानां तेजोमयीनां देवतानां यज्ञादिना सत्कर्मणाऽऽराधनं कार्यम् । सुवृष्ट्याभिवर्षिणि देवेन्द्रे स्वीयामृतसमरसेनौषधीर्जीवयन्तीषु शिवतमास्वप्सु, स्वीयशिवंकरतेजसा जगदुद्बोधयितरि सवितरि चैवमादिष्वनुभूयमाना शक्तिः पारमेश्वर्येव । यज्ञदानतपःप्रभृतिषु सत्कर्मसु यथायथामनुष्ठितेषु सा चिच्छक्तिर्मनुष्येष्वपि क्रमशो विवर्धत इति प्राचां तत्त्वविदां शास्त्रानुसारी दृढोऽनुभवः । भौमं देदीप्यमानमग्नितत्त्वं सर्वेषां देवानां मुखम् । अतोऽग्न्युपासनमेवाऽऽद्यं धार्मिकं कर्तव्यम् । तद्द्वारैवेतरेषां देवानां मन्त्रैराह्वाने कृते तदीयं तेज उपासके संचरति नान्यथेति । ततो वयमितरेऽपि द्विजाः प्रकृष्टचैतन्ययुता भवेयुरिति संप्रधार्य यज्ञादिसंस्था आविष्कृताः प्रत्नैराचार्यैरिह भारते वर्षे । अग्निमुखेन देवानां यजनमेव सनातनधर्मस्य वेदानुसार्यार्याणां संस्कृतेश्च वैशिष्ट्यं ज्ञेयम् ।

अग्निशालायामाहवनीयकुण्डे प्रज्वलता हुतवहस्याभिमुखं स्थित्वा तां तां देवतामुद्दिश्य श्रद्धया तत्स्वरूपध्यानपूर्वकं मन्त्रोच्चारपूर्वकं च स्वीयाज्यादिद्रव्याणि प्रददानो यजमानः ' स मे ददातु मेधां प्रजां पुष्टिं पशून् ' इत्यादिफलं प्रार्थयमानो नूनं तदासादयितुं समर्थो भवतीति विज्ञायते । जायमानः पुमान्देवर्षिपितृसंबन्धिनां त्रयाणामृणानां भारं मूर्ध्न्यादाय जायते । तत्र देवतानामृणमाद्यम् । शरीरान्तर्गताः शक्तयस्तु तत्तद्देवतानामंशेनैवाऽऽदानविसर्गादिकार्यक्षमाः संवृत्ताः । उत्तरत्र च तासामेवानुग्रहेण ताभिः शक्तिभिः समाधिकोन्नताभिर्भाव्यमिति यज्ञाद्यनुष्ठानेन तासां देवतानामानृण्यं संपादितं चेद्व ताः शक्तयः समाधिकोन्नताः सत्यः क्रमेण परमेश्वरचैतन्येन ताद्रूप्यं गच्छेयुर्नान्यथेत्यसंदिग्धम् ।

स्वयं कर्तृत्वशक्तिसंपन्नश्चेदवसितं मनुष्यजन्मनः कर्तव्यमिति न भ्रमितव्यम् । किंतु पूर्वजैर्याः सत्क्रिया उपक्रान्तास्ताः स्वयं यथापूर्वं यथासामर्थ्यं च श्रद्धयाऽनुष्ठायानन्तरमपि तासामव्याहतप्रचाराय सत्पुत्र उत्पादयितव्यः । तमन्तरा हि नान्यः पन्थाः पितृऋणापाकरणायेति श्रूयते श्रुतिषु । पूर्वपरम्परां चिराय स्थिरयितुं दक्षा आसन्नार्या इति सूचयतीयं पितृऋणापाकरणकल्पना । तामविच्छिन्नतया प्रवर्तयितुं सुशिक्षणादिना पुत्रे क्षमतापादनं विना नैव गच्छेयुः सद्गतिं स्वपितर इत्येवं भावना तदानींतने भारते प्रामुख्येण समवर्तत । अत एव तदानीमिच्छायामसत्यामपीदानीमिव कुतोऽप्याग्रहातिशयेन ' देयमेव कुमारकुमारीभ्यः सम शिक्षणम् ' इति समव्यवसायिभिः स्थानविशेषे संघीभूय ,काष्ठपीठादौ कराघात-पुरःसरमुच्चैर्घोषस्यावसर एव नाऽऽसीत । अनिमारभ्य येन केनाप्युपायेन स्वोदरपूरणं न तदतिरिक्तः कोऽपि व्यापारो येषामुपलभ्यते तेषामनुकरणीयं किमपि शस्यं कृत्यमस्ति यस्याग्रेऽपि सप्रचाराय समुत्कण्ठा स्यात्तादृशः, स्वेनार्जितं द्रव्यं नान्यस्य कस्याप्युपयोगाय भवत्विति स्वैरमन्यायेन तन्निःशेषयन्तः, किंवा कामप्यनाथां बालां विवाहपाशनिगडितां कुर्वन्तो विधवां वा क्षणिकदुःखपङ्कात्दुद्धरन्तश्च नरमूर्खास्तत्र तत्र बाहुल्येनोपलभ्यन्ते । परंतु धर्मादनपेतं कृत्यमनुतिष्ठन्तस्तदर्थं धर्म्यं पुत्रमुत्पादयन्तश्च विरला एव पुरुषश्रेष्ठाः ।

यथेदमृणद्वयं संशोधनीयं तथा तृतीयमप्येकमपाकरणीयमृषिऋणं वर्तते । करुणार्णवैर्ऋषिभिरविश्रान्तपरिश्रमैर्लोकोत्तरबुद्धिमत्तया च यः संग्रहो कृतोऽस्ति वेदादिग्रन्थेषु ज्ञानरत्नानां तस्य वेदादेर्यथाशास्त्रमर्थावगमावसानाध्ययनेन तदनुकूलब्रह्मचर्येण चैतस्मादृषिऋणाद्विमुक्तिरिति ।

पर्यालोचितेऽस्मिन्देवादिऋणत्रयस्वरूपे वेदादिग्रन्थेषु निबद्धानि ज्ञानानि समभ्यस्य प्रत्नैर्ऋषिभिर्याः शक्तयः समाजे प्रकटिताः कुशलोदयाय तास्तत्त्वतोऽधिगन्तव्या इयमाद्याऽऽयुषोऽवस्था । द्वितीया तु यज्ञाद्यनुष्ठानेन तैः प्रकटितानां तासां शक्तीनां परिवर्धने यत्नमास्थाय तत्कार्यस्योत्तरत्रापि संप्रचारः कर्तव्य इति । एवं शिक्षणादिना निखिलकार्यनिर्वाहक्षमतामुत्पाद्य सत्पुत्रे तद्भारं विनिक्षिप्य स्वेन मोक्षमार्गोन्मुखेन भवितव्यमिति तृतीयाऽवस्था पर्यवस्यति । एतास्तिस्र आयुषोऽवस्था येन सम्यक्परिपालिताः स एव फलाभिसंधिरहितं कर्मानुष्ठातुं प्रभवति । ब्रह्मचर्यगृहस्थाश्रमावस्खलितं सम्यक्परिपालितौ चेदेव तृतीयावस्थामुत्तीर्णो भवति मानुषः । तृतीयाश्रमे पूर्वं देवादिऋणत्रयेऽपाकृतेऽपि शास्त्रविहितं कर्म त्यक्तुमशक्यम् । तुरीयाश्रमेऽपि तदाश्रमविहितं कर्म न त्याज्यमित्युपदिशति शास्त्रम् । स्वानुस्यूताचिदंशविकासो हि कर्मणः साध्यमित्यविवादम् । स च विकासोऽनुष्ठितेन सत्कर्मणा भवति । स्थिरेण मनसा श्रद्धापुरःसरं च यत्सत्कर्मानुष्ठीयते तस्य संस्कारश्चित्ते समुत्पद्यते । ज्ञानमयश्च स भवति । यतस्तुरीयाश्रमे ज्ञानाभ्यासः प्रधानम् । ज्ञानाभ्यासो नाम वेदान्तवेद्यतत्त्वानां स्वकीये आचारे विचारे चैकात्म्यापादनमेव । अत्र कर्ममार्गोपदिष्टश्राद्धसंस्कारो दृष्टान्तत्वेनोपन्यस्यते । यद्यपि---

'जीवो मृतस्य चरति स्वधाभिरमर्त्यो मर्त्येनासयोनिः' इति मन्त्रलिङ्गप्रामाण्यात्परेतान्पितॄनुद्दिश्य यच्छ्रद्धया क्रियते तच्छ्राद्धमिति व्युत्पत्त्या पितॄणां सद्गतिसिद्ध्यर्थं तेन तृप्तेभ्यस्तेभ्यः स्वस्य सत्पुत्राद्यैश्वर्यसमृद्ध्यर्थं चायं पितृयज्ञोऽनुष्ठीयते तथाऽप्येतद्यज्ञानुष्ठानेन दशारण्यस्थितान्सप्त व्याधानारभ्य कुरुक्षेत्रनिवासिवेदपारगब्राह्मणजन्मपर्यन्तं विप्रपुत्राणां कपूययोनिप्राप्त्यावेदकं यत्पुरावृत्तमुपवर्णितं तत् "तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम्" इत्यादिसूत्रसमूहेन शारीरकमीमांसाभिहितदेहपातोर्ध्वभाविजीवगत्यागत्योः संवादि शास्त्रीयसंस्काराभावे च जीवस्यावनतिद्योतकं च भवति । एवं केऽग्निष्वात्तादयः पितरः केन का गतिः प्राप्यत इत्यालोचनं यदि श्राद्धकर्ता यजमानः कुर्यात्तदा पितृनिधनस्मृत्या करुणामयेऽन्तःकरणे सुसंस्काराधानेन जननमरणचक्रात्तं मोचयितुमुपकारको भवेत्स संस्कारो ज्ञानद्वारेति व्यक्तं विज्ञायते । एवमेवेतरेषां संस्काराणां तात्पर्यं शास्त्रतो यथायथमूह्यं विवेकिभिः ।

संप्राप्तधर्मार्थकामस्य पुंसः कर्मानुष्ठानं चित्तशुद्ध्या ज्ञानप्राप्तये भवतीत्यतःकृतसत्कर्मावसाने 'ॐ तत्सद्ब्रह्मार्पणमस्तु' इति मन्त्रोच्चारणेन ब्रह्मसमीपं प्रापयितुं

त्तत्क्षमत इति विज्ञायते । एवमिदं ज्ञानकर्मणोर्द्वंद्वं तृतीयाश्रमिणं प्रति तुरीयाश्रमसीमां संप्रापयतीति ज्ञेयम् । तुरीयाश्रमः प्राय आयुषश्चरमसमये स्वीकार्यो भवति । अस्मिन्नाश्रमे प्रागभ्यस्तज्ञानकर्मभ्यां समुन्नतां चिच्छक्तिं परब्रह्मशक्तौ विनियोक्तुमभ्यस्यति मानुषः । तथैतच्छरीरोपाधिकस्याऽऽत्मनः परब्रह्मणा साकं तादात्म्यं साधयितुं च प्रयतते । अयं तुरीयाश्रममार्गो ज्ञानकर्मसमासादितविचारचिच्छक्त्योर्ब्रह्मतादात्म्यापादनाभ्यासस्य मुख्यं स्थानम् । बुद्धौ सत्यासत्यविवेकनैपुण्यं न स्याच्चेद् भगवतोऽचिन्त्यानन्तशक्तेः संवित्तिश्चित्ते नाऽऽरूढा चेत्केवलमाश्रमोचितकर्मानुष्ठानेन जीवेशयोरैक्यं संपादयितुं नार्हत्ययं तुरीयाश्रममार्गः । अपि त्वभ्याससाध्यां कांचन भूमिकामुपतिष्ठेत । ऋजुमतीनां प्रलोभने वाऽऽयुर्व्ययं विदध्यादित्येव ।

एतावताऽपाकरणीयमृणत्रयं ब्रह्मचर्याद्याश्रमचतुष्टयं च मानुषचैतन्यशक्तेः कथं परिपोषमादधाति तत्समासतः प्रदर्शितम् । एतेन मानववृत्तिपश्वादिवैलक्षण्यस्याऽऽत्यन्तिकविकासो यथा भवेत्तथोपायानामाविष्करणमिति यद्धर्मस्याऽऽद्यं कर्तव्यं तदयं सनातनो वैदिकधर्मो यथाधिकारं मानवकर्तव्यानि मर्यादीकृत्य समुपदिशतीति विज्ञातं स्यात्सदसद्विवेकवतां नराणामिति ।

तदेतत्सर्वं मनसिकृत्य समस्तसुरासुरनरकिंनरादिवृन्दसमर्चितचरणारविन्दः सच्चिदानन्दात्मा भगवांस्तुरीयाश्रमी श्रीशंकरो गीताभाष्योपक्रमे “ ज्ञानैश्वर्यबलवीर्यतेजोभिः सदा संपन्नः परमेश्वरः सृष्ट्वेदं जगत्तस्य स्थितिं चिकीर्षुर्मरीच्यादीनग्रे सृष्ट्वा प्रजापतीन् प्रवृत्तिलक्षणं धर्मं ग्राहयामास वेदोक्तम् । सोऽयं जगतः स्थितिकारणं प्राणिनां साक्षादभ्युदयनिःश्रेसहेतुर्यः स धर्मो ब्राह्मणादिभिः श्रेयोर्थिभिर्यथावर्णं यथाश्रमं चानुष्ठीयमान ऐहिकामुष्मिकार्थसंदोहदोग्धा भवति । ईश्वरार्पणबुद्ध्याऽनुष्ठीयमानः सत्त्वशुद्धये भवति । फलाभिसंधिवर्जितः शुद्धसत्त्वस्य ज्ञाननिष्ठायोग्यताप्राप्तिद्वारा ज्ञानोत्पत्तिहेतुत्वेन च निःश्रेयसहेतुत्वमपि प्रतिपद्यते ” इति सूत्रात्मना भाष्येण प्रतिपादयास धर्मतत्त्वं वेदसंमतम् । भगवती श्रुतिरपि धर्मं चर, धर्मान्न प्रमदितव्यम् , ‘ कुर्वन्नेवेह कर्माणि ’ इत्यादिनाऽनुष्ठेयधर्मोपदेशं यथाधिकारं यथासंभवं च करोति मानवमात्रं प्रति भव्यायेत्यवगम्यते । अनेनैवाभिसंधिना श्रीमन्महाभारते धर्मे संदिहानां धर्मपत्नीं द्रौपदीं पुरस्कृत्य—

“ नाहं कर्मफलान्वेषि राजपुत्रि चराम्युत ।
ददामि देयमित्येव यजे यष्टव्यमेव च ॥

अस्तु वाऽत्र फलं मा वा कर्तव्यं पुरुषेण यत् ।
गृहे वा वसता कृष्णे यथाशक्ति करोमि तत् ॥
धर्मं चरामि सुश्रोणि न धर्मफलकारणात् ।
आगमाननतिक्रम्य सतां वृत्तमवेक्ष्य च ॥
धर्म एव मनः कृष्णे स्वभावाच्चैव मे धृतम् ।
धर्मवाणिज्यको हीनो जघन्यो धर्मवादिनाम् ॥
न धर्मफलमाप्नोति यो धर्मं दोग्धुमिच्छति ।
यश्चैनं शङ्कते कृत्वा नास्तिक्यात्पापचेतनः ॥
अतिवादाद्वदाम्येष मा धर्ममभिशङ्किथाः
धर्माभिशङ्की पुरुषस्तिर्यग्गतिपरायणः ॥
प्रत्यक्षं हि त्वया दृष्टमृषिर्गच्छन्महातपाः ।
मार्कण्डेयोऽप्रमेयात्मा धर्मेण चिरजीविताम् ॥
व्यासो वसिष्ठो मैत्रेयो नारदो लोमशः शुकः
अन्ये च ऋषयः सर्वे धर्मेणैव सुचेतसः ॥
प्रत्यक्षं पश्यसि ह्येतान् दिव्ययोगसमन्वितान् ।
शापानुग्रहणे शक्तान्देवेभ्योऽपि गरीयसः ॥
एते हि धर्ममेवाऽऽदौ वर्णयन्ति सदाऽनघे ।
कर्तव्यममरप्रख्याः प्रत्यक्षागमबुद्धयः ॥
शिष्टैराचरितं धर्मं कृष्णे मा स्माभिशङ्किथाः ।
पुराणमृषिभिः प्रोक्तं सर्वज्ञैः सर्वदर्शिभिः ॥
धर्म एव प्लवो नान्यः स्वर्गं द्रौपदि गच्छताम् ।
सैव नौः सागरस्येव वणिजः पारमिच्छतः ॥
निर्वाणं नाधिगच्छेयुर्जीवेयुः पशुजीविकाम् ।
विद्यया नैव गच्छेयुर्न चार्थं केचिदाप्नुयुः ॥
तपश्च ब्रह्मचर्यं च यज्ञः स्वाध्याय एव च ।
दानमार्जवमेतानि यदि स्युरफलानि वै ॥
नाऽऽचरिष्यन् परं धर्मं परे परतरे च ये ।
विप्रलम्भोऽयमत्यन्तं यदि स्युरफलाः क्रियाः ॥

अफलो यदि धर्मः स्याच्चरितो धर्मचारिभिः ।
अप्रतिष्ठे तमस्येतज्जगन्मज्जेदनिन्दिते ॥
ऋषयश्चैव देवाश्च गन्धर्वासुरराक्षसाः ।
ईश्वराः कस्य हेतोस्ते चरेयुर्धर्ममादृताः ॥
फलदं त्विह विज्ञाय धातारं श्रेयसि ध्रुवम् ।
धर्मं ते व्यचरन् कृष्णे तद्धि शर्म सनातनम् ॥
स नायमफलो धर्मो नाधर्मोऽफलवानपि ।
दृश्यन्तेऽपि हि विद्यानां फलानि तपसां तथा ॥
त्वमात्मनो विजानीहि जन्म कृष्णे यथाश्रुतम् ।
वेत्थ चापि यथा जातो धृष्टद्युम्नः प्रतापवान् ॥
एतावदेव पर्याप्तमुपमानं शुचिस्मिते ।
कर्मणां फलमाप्नोति धीरोऽल्पेनापि तुष्यति ॥
कर्मणां श्रुतपुण्यानां पापानां च फलोदयः ।
प्रभवश्चात्ययश्चैव देवगुह्यानि भामिनि ॥
नैतानि वेद यः कश्चिन्मुह्यन्तेऽत्र प्रजा इमाः ।
अपि कल्पसहस्रेण न स श्रेयोऽधिगच्छति ॥
रक्ष्याण्येतानि देवानां गूढमाया हि देवताः ।
कृशाशाश्च व्रताशाश्च तपसा दग्धकिल्मिषाः ॥
प्रसादैर्मानसैर्युक्ताः पश्यन्त्येतानि वै द्विजाः ।
न फलादर्शनाद्धर्मो शङ्कितव्यो न देवताः ॥
यष्टव्यं च प्रयत्नेन दातव्यं चानसूयया ।
कर्मणां फलमस्तीह तथैतद्धर्मशाश्वतम् ॥
ब्रह्मा प्रोवाच पुत्राणां यदृषिर्वेद कश्यपः ।
तस्मात्ते संशयः कृष्णे नीहार इव नश्यतु ॥
व्यवस्य सर्वमस्तीति नास्तिक्यं भावमुत्सृज ।
ईश्वरं चापि भूतानां धातारं मा च वै क्षिप ॥
शिक्षस्वैनं नमस्वैनं मा तेऽभूद्बुद्धिरीदृशी ।
यस्य प्रसादात्तद्भक्तो मर्त्यो गच्छत्यमर्त्यताम् ।
उत्तमां देवतां कृष्णे माऽवमंस्थाः कथंचन ॥

इत्यादिनोपदेशपरवाक्यनिचयेन धर्मस्यानतिशङ्कयत्वं निष्कामतयाऽनुष्ठेयत्वं भगवत्पदप्राप्त्यैश्वर्याधायकत्वं, ऋषिभिः सादरमुपवर्णितत्वं शिष्टैस्तैर्वाक्कायमनःपूर्वकमाचरितत्वं चिराय सर्वज्ञप्रवृत्तत्वेन सनातनत्वं समस्तभव्यजनकत्वं जगदाधारत्वं पतितोद्धारकत्वं व्यतिरेकेण महदनिष्टहेतुत्वं जगन्नियामकत्वं सर्वैः सर्वथा सर्वदोपास्यत्वं मर्त्यस्यामर्त्यभावदातृत्वं देवगुह्यत्वेन संरक्षणीयत्वं च महापुरुषदृष्टान्तावलम्बनेन सप्रपञ्चं प्रतिपादयामास धर्मराजः । इत्थं समस्तविश्वसमर्चितोऽयं सनातनो वैदिकधर्मः श्रेयोभिकाङ्क्षिणा मर्त्येन चिराय शरणीकरणीयो विजयतेतराम् ।

प्रतिपादितमेवं सनातनवैदिकधर्ममहत्त्वं यथामति । प्रतिपादितं च स एव श्रेयसः प्रेयसश्च प्रदाता यथाधिकारमनुष्ठितो मानवमात्रेणेति । अथापि तत्स्वरूपे विप्रतिपत्तयः परिदृश्यन्ते। तथा हि—सांख्यास्तावद्यागदानाद्यनुष्ठानोद्भूतोऽन्तःकरणवृत्तिविशेषो धर्म इत्याहुः । वैशेषिकास्तु—स एवादृष्टाख्य आत्मनो गुणविशेषो धर्म इति समाचख्युः । बौद्धास्तु—ज्ञानस्य ज्ञानान्तरजन्यां वासनां धर्मं प्रवदन्ति । आर्हता देहारम्भकान् पुद्गलाख्यान् परमाणूनेव धर्मं प्रतिपादयन्ति । केचन जटाजिनादिधारणमेव धर्ममभिलपन्ति । अन्ये दैगम्बर्यं धर्मतया प्रशंसन्ति । अपरे मौण्ड्यं धर्मत्वेनाऽऽश्रयन्ति । परे नैष्ठिकं ब्रह्मचर्यं धर्म इत्यनुतिष्ठन्ति । इतरे गार्हस्थ्यं धर्मत्वेनाङ्गी कुर्वन्ति । केचन यथेष्टमशनं धर्मं विदधाति । अन्येऽनशनं धर्म इत्यनुतिष्ठन्ति । एके यावज्जीवं कर्मानुष्ठानं धर्म इत्युपदिशन्ति । अन्ये तदुपरमं धर्मं वर्णयन्ति । विरक्ता मोक्षं धर्मं प्रशंसन्ति । रागिणो नैकविधान्भोगान् धर्मत्वेन भुञ्जते । केचन यया कयाऽपि विधया वित्तार्जनं धर्म इति साग्रहं ब्रुवन्ति । परेऽकिंचनत्वं धर्म इति स्तुवन्ति । केचन श्रवणादिकं धर्ममनुसरन्ति । अन्ये नैकविधदेवतोपास्ति धर्मतयाऽनुतिष्ठन्ति । एकेऽहिंसाधर्मनिरता दृश्यन्ते । अपरे हिंसाधर्मेणाऽऽत्मानं कृतकृत्यं मन्वते । केचन पुण्यं धर्मं निर्दिशन्ति । अन्ये सर्वथाऽऽत्मसंरक्षणं धर्मं प्रतिपालयन्ति । केचनाऽऽस्तिक्यं धर्म इत्युपदिशन्ति । परे नास्तिक्यं धर्मत्वेनाऽऽश्रयन्ति । यज्ञादिरेव धर्म इति याज्ञिकाः । प्रदानं स इति दानशौण्डाः । तप इति तापसाः । स्वाध्याय इति पाठकाः । ज्ञानमिति तात्त्विकाः । संन्यास इति त्यागिनः । स्वभाव इति स्वाभाविकाः । सत्यं धर्म इति तत्पराः । अनृतमिति तत्परिपन्थिनः । शमदमादिरेव धर्म इत्येक उपदिशन्ति । अन्ये दुःसहपौरुषाविष्करणं धर्म इत्याचरन्ति । पर औदासिन्यं धर्ममाश्रयन्ति । समाजहिताय कथमपि प्रयतनं धर्म इति केषांचिन्मतम् । व्यक्तिहितस्याऽऽलोचनं धर्म

इत्यन्येषामभिमतम् । राष्ट्रसेवाधर्मकारिणो वयमिति केऽपि प्रलपन्ति । अन्ये स्वार्थैकहेतुधनवृद्धपरिचर्यादिकमेव धर्मं बहु मन्यन्ते । वाचा क्रियया च जनतायै सत्पथप्रदर्शनं धर्म इत्येके वदन्ति । अपरे महाशयास्तेनैव तस्याः प्रतारणं धर्मतया प्रतिपदं प्रकुर्वन्त उपलभ्यन्ते । यथोक्तं सर्वमेव यथासंभवं धर्म इति केषांचिन्मतम् । न तथेत्यपि केषांचिदभिमतम् । इत्थं यत्र यत्र विषये यो निसर्गत एव निरतस्तमेव स परमं धर्मं मन्यमानः सदा पूजयति । इत्थं धर्मस्वरूपविषये विप्रतिपत्तीनां दर्शनाल्लक्षणप्रमाणाभ्यां वस्तुनः सिद्धिरिति न्यायविदां समयाच्च यावदस्य सनातनधर्मस्य निर्विचिकित्सं लक्षणं नोपदिश्यते तावदयमेव धर्मो नान्य इति संदेहाद्यनास्कन्दितं ज्ञानं भवितुमशक्यमेव । अनुष्ठानं तु नितरां दूरापेतम् । अत एवोक्तमभियुक्तैः—

"ऋषयोऽपि पदार्थानां नान्तं यान्ति पृथक्त्वशः ।
लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चितः" इति ।

अतः सामान्यतोऽधिगतस्य धर्मस्य विशेषतो विज्ञानाय लक्षणमादौ निरूपणीयम् । तत्तु नैव संभवति । तथा हि—"सजातीयविजातीयव्यावर्तको लक्ष्यगतः कश्चन लोकप्रसिद्ध आकारः" "किंवाऽसाधारणधर्मो हि लक्षणम्" धर्मेऽसाधारणत्वं तु लक्ष्यतावच्छेदकसमनियतत्वम् । समनैयत्यं च व्याप्यत्वे सति व्यापकत्वम् । तच्च लक्ष्यतावच्छेदकाभाववदवृत्तित्वे सति लक्ष्यतावच्छेदकाधिकरणवृत्त्यत्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वरूपम् । तच्च लक्षणं द्विविधम्—व्यावर्तकं व्यावहारिकं चेति । तत्र व्यावर्तकेन लक्षणेन लक्षितस्य वस्तुन इतरेभ्यो व्यावृत्तिः क्रियते । व्यावहारिकेण च व्यवहारः साध्यते । तदुक्तम्—"व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनम्" इति ।

यथा—गोः सास्नावत्त्वम् । घटस्य च मृन्मयत्वं कम्बुग्रीवादिमत्त्वं वा । सास्नावत्त्वं हि गोर्लक्षणं तद्भिन्नेभ्योऽश्वादिभ्यो गां भिनत्ति । मृन्मयत्वादिकं च घटस्य लक्षणं मृन्मयो घट इति व्यवहारप्रयोजकं जायते । धर्मस्य त्वनुष्ठानान्तरमुत्पत्स्यमानतया तत्पूर्वमविद्यमानत्वादुत्पन्नस्यापि तस्य रूपादिराहित्येनानेकाकारत्वेन च न विद्यमानवस्तूपलम्भकेन रूपादिमत्पदार्थग्राहकेण प्रत्यक्षप्रमाणेनानुगतः कश्चिदाकारो विषयी क्रियत इति वक्तुं शक्यम् ।

ननु सांख्यमते वृत्तिविशेषरूपत्वात्तार्किकनये चाऽऽत्मगुणत्वादेकदेशिभिरपूर्वस्य धर्मत्वेनाङ्गीकाराच्च माऽस्तु तेषां मतेन धर्मस्य चाक्षुषत्वम् । अत एव तैरदृष्ट-

मिति शब्देन स व्यवह्रियते । धर्माधर्मावतीन्द्रियावित्यभिधीयते च । परं सिद्धान्ते दध्यादिहविर्द्रव्यस्याऽऽरुण्यादेर्गुणस्य प्रोक्षणादिक्रियायाश्च धर्मत्वाद्द्रव्यादीनां तेषां चक्षुरादीन्द्रियगम्यत्वात्कुतो न धर्मस्य प्रत्यक्षत्वमिति चेत् । तेषां द्रव्यादीनां धर्मत्वेऽपि न स्वरूपतस्तत्त्वम्, किंत्वलौकिकश्रेयःसाधनत्वेनैव । तच्च रूपं न चक्षुरादीन्द्रियैर्गोचरयितुं शक्यम् । अतः सिद्धान्तेऽपि धर्मस्य प्रत्यक्षाविषयत्वमेव । अत एव " प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात् " इतिसूत्रांशेन धर्मस्याप्रत्यक्षत्वं सिद्धान्तितवान्महर्षिर्जैमिनिः ।

नन्वास्तां नाम प्रत्यक्षाविषयो धर्मः । अथाप्यनुमानेन तस्य ज्ञानं सुलभम् । यथा—भुता व्यवहिता विप्रकृष्टा वा वृष्टिः सरित्पूरेणानुमीयते । भविष्यद्वृष्टिश्च मेघोत्पत्त्यादिना । सुसूक्ष्मं च द्रव्यं गन्धेन । धूमादिना च वह्न्यादिः। तथा सुखेन लिङ्गेन धर्मोऽप्यनुमातुं योग्य इति चेन्नानुमानपि धर्मं विषयीकर्तुं प्रभवति । अनुमानस्य हि हेतुसाध्ययोर्व्याप्तिशब्दाभिलप्यसाहचर्यसंबन्धज्ञानपूर्वकत्वाद्धर्मसामान्यस्य विशेषस्य वा न केनचित्सुखादिना साकं संबन्धः साक्षात्कर्तुं शक्यः । संबन्धसाक्षात्कारो हि संबन्धिसाक्षात्कारसापेक्षः । तत्र संबन्धिनो धर्मस्यानैन्द्रियकत्वेनाप्रत्यक्षत्वं प्रागभिहितमेव । अतो नानुमानस्यापि गोचरो धर्मः । इत्थं प्रत्यक्षानुमानयोरविषयत्वात्तदुपजीविनामन्येषामपि लौकिकानां प्रमाणानां धर्मे भृशमप्रसरो बोध्यः । अत एव धर्मस्य दुर्ज्ञेयत्वमाशङ्कितं युधिष्ठिरेण—

अणीयान्क्षुरधाराया गरीयानपि पर्वतात् ।
गन्धर्वनगराकारः प्रथमं संप्रदृश्यते ॥
अन्वीक्ष्यमाणः कविभिः पुनर्गच्छत्यदर्शनम् । इत्यादिना ।

इत्थं वस्तुप्रमापकतया लोके प्रसिद्धानि यानि प्रत्यक्षादीनि प्रमाणानि तेषां धर्मे वस्तुनि कथमप्यप्रवेशान्न तैर्लोकप्रसिद्धः कोऽप्याकारस्तत्र लक्ष्यी क्रियते येन तल्लक्षणं सिध्येत् । लक्षणासिद्ध्यां च न सिध्यति तस्य निर्विचिकित्समस्तित्वमित्याशङ्कायामाह धर्मस्य लक्षणं साक्षात्कृतधर्मतत्त्वो भगवान् करुणापारावार ऋषिप्रवरो जैमिनिमुनिः—

चोदनालक्षणोऽर्थो धर्म इति ।

अत्र धर्म इति लक्ष्यनिर्देशः । अवशिष्टं लक्षणम् । ' चोदनेति क्रियायाः प्रवर्तकं वचनमाहुः । आचार्यचोदितः करोमीति हि दृश्यते ' इति भाष्यात्—

क्रिमाद्यपेक्षितैः पूर्णः समर्थः प्रत्ययो विधौ ।
तेन प्रवर्तकं वाक्यं शास्त्रेऽस्मिञ्चोदनोच्यते ॥

किं साधयेत् । केन साधयेत् । कथं साधयेत् । इत्यपेक्षितैः साध्यसाधनेतिकर्तव्यतांशैः पूर्णः प्रत्ययो विधौ पुरुषप्रवर्तने समर्थो भवति । तत्पूरणं च वाक्येन । अतो वाक्यमेव प्रवर्तकं चोदनेत्युच्यत इति वार्तिकाच्च प्रेरणाप्रवर्तनेत्यपरपर्यायभावनाप्रतिपादकं वाक्यं चोदनापदस्यार्थः । तया लक्ष्यते प्रतिपाद्यतेऽसौ चोदनालक्षणः । य एव श्रेयस्करोऽर्थः स एष धर्मशब्देनोच्यते ।

धर्म इत्युपसंहार्ये यच्छ्रेयस्करभाषणम् ।
तद्धर्मपदवाच्यार्थनिरूपणविवक्षया ॥

इति भाष्यवार्तिकाभ्याम्—इष्टसाधनवस्त्वर्थकमर्थपदं द्रष्टव्यम् । इष्टं च बलवदनिष्टाननुबन्धि ज्ञेयम् । तथा च—साध्यसाधनेतिकर्तव्यतेत्यंशत्रयविशिष्टप्रेरणापरपर्यायभावनाबोधकलिङ्लोट्तव्याद्यन्यतमप्रत्ययान्तपदघटितवाक्यप्रतिपाद्यत्वे सति बलवदनिष्टाननुबन्धीष्टसाधनमनुष्ठेयोऽर्थो धर्म इति वैदिकं तल्लक्षणं पर्यवस्यत्युक्तसूत्रानुसारतः ।

अत्रेदं बोध्यम्—यद्यपि प्रत्यक्षानुमानादिलौकिकप्रमाणाविषयत्वेन न धर्मस्य लक्षणं गवादिलक्षणवत्सुकरम्, तथाऽपि न सर्वथा तल्लक्षणस्यासंभवः । यतः "धर्मं चर । धर्मान्न प्रमदितव्यम् । धर्मो विश्वस्य जगतः प्रतिष्ठा । धर्मेण पापमपनुदति । धर्मे सर्वं प्रतिष्ठितम् । तस्माद्धर्मं परमं वदन्ति" इत्यादिना निरस्तसमस्तपुंदूषणेनापौरुषेयेण वेदेनैव साक्षाद्धर्मस्योपदिश्यमानत्वादस्त्यलौकिकस्य निखिलप्रमाणमूर्धन्यस्य तत्रभवतो वेदस्य धर्मे प्रसरः ।

ननु 'सुखदुःखे धर्माधर्मयोर्लिङ्गम्' इति तार्किकाणां सिद्धान्तादस्त्यनुमानस्यापि सुखदुःखादिलिङ्गकस्य तत्रावकाश इति चेन्न । यतोऽयं लिङ्गलिङ्गिभावोऽपि "तच्छ्रेयोरूपमत्यसृजत धर्मम्" "धर्मेण पापमपनुदति" "न देवानामतिव्रतं शतात्मा न च जीवति । तथायुजाविवावृते" इत्यादिना वेदेनैवावगम्यते । वेदाद्दृष्टे चेदास्तां नाम । न तेन तस्य वेदैकप्रमाणगम्यत्वं हीयते । अत एव "धर्मब्रह्मणी वेदैकवेद्ये" इति पुरुषार्थानुशासनसूत्रं "धर्मब्रह्मप्रतिपादकमपौरुषेयं वाक्यं वेद इति प्राचां महात्मनां वेदलक्षणं च संगच्छते । अत एव च 'वेदतदुपजीविप्रमाणातिरिक्तप्रमाणागम्यत्वे सति प्रमितिविषयो धर्म इति विपश्चिद्वराणां धर्मलक्षणं संगच्छते ।

किंच "नावेदविन्मनुते तं बृहन्तम्" इति वेदज्ञानमन्तरा नानुमानादेस्तत्रावकाश इति वेद एव संकथयति । "रूपादिलिङ्गराहित्यान्नास्य मान्तरयोग्यता" इति पूर्वाचार्याणां सोपपत्तिकोक्तिरपि च धर्मस्य प्रत्यक्षाद्यविषयत्वेन वेदैकवेद्यत्वं सूचयति । अतः सूक्तमिदं—"चोदनालक्षणोऽर्थो धर्मः" इति धर्मलक्षणं सूत्रकारेण भगवता महर्षिणेति ।

तत्र—प्रवर्तेऽहमिति ज्ञानं येन शब्देन जन्यते ।
सा चोदनोच्यते यद्वा प्रवर्तनफला मतिः ॥
प्रवृत्तौ वा निवृत्तौ वा या शब्दश्रवणेन धीः ।
सा चोदनेति सामान्यं लक्षणं हृदये स्थितम् ॥

इति वार्तिकात्—कर्तव्यार्थप्रतिपादकवचोभिः पुरुषस्य या प्रवृत्तिफला धीर्जायते सा चोदनाशब्दस्य मुख्योऽर्थः । तादृशधीजनकानां वचसां वेदादौ विद्यमानत्वात्तानि वेदादीनां वचांसि चोदनाशब्देनाभिधीयन्ते शास्त्रकृद्भिः । पूर्वस्मिन्प्रकरणेऽभिहिताभिः संकल्पाध्यवसायेच्छेति तिसृभिर्मनोवृत्तिभिस्त्रिविधा सा चोदनाख्या धीरेकेन भावनाशब्देनाभिधीयते । अतः सा धीः किं केन कथमित्यंशत्रयविशिष्टेत्युक्तिः संगच्छते । तथा चैवंविधभावनासंबन्धि यद्यत्फलभिन्नं कर्तव्यं तत्सर्वं धर्मशब्दस्यार्थ इति धर्मलक्षणसूत्राभिप्रायः सिध्यति ।

अथ रुचिवैचित्र्यानुसारेणोक्तसूत्रार्थानुसारीणि तत्तन्मीमांसाग्रन्थोक्तानि धर्मलक्षणान्यनूद्यन्ते प्रकृतार्थदार्ढ्याय । तत्र—यो धर्मः स चोदनालक्षणः । चोदनैव तस्य लक्षणम् । अर्थाच्चोदनागम्य एवाग्निहोत्रादिर्धर्मः । नातल्लक्षणश्चैत्यवन्दनादिरितीति शास्त्रदीपिका ( १ ) । वेदैकज्ञाप्येष्टसाधनताकत्वे सति बलवदनिष्टाननुबन्धी धर्म इति भाट्टदीपिका ( २ ) । वेदतदुपजीविप्रमाणातिरिक्तप्रमाणागम्यत्वे सति प्रमितिविषयश्रेयःसाधनतया विहितोऽर्थो धर्म इति भाट्टचिन्तामणिः ( ३ )। वेदबोधितेष्टसाधनताको धर्म इति भाट्टरहस्यमीमांसापरिभाषे ( ४ ) । वेदेन प्रयोजनमुद्दिश्य विधीयमानोऽर्थो धर्म इति न्यायप्रकाशः ( आपोदेवी ) ( ५ ) । वेदप्रतिपाद्यः प्रयोजनवदर्थो धर्म इति लौगाक्षिः ( ६ ) । फलतोऽपि च यत्कर्म नानर्थेनानुबध्यते । केवलप्रीतिहेतुत्वात्स धर्म इति कथ्यते । इति भाट्टभाषा ( ७ ) । अर्थत्वे सति चोदनागम्यो धर्म इति जैमिनीयन्यायमाला ( ८ )।

अथ तर्कशास्त्रोक्तानि धर्मलक्षणानि । तत्र वैशेषिकसूत्रम्—' यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः । अत्राभ्युदयशब्देन तत्तदिष्टविषयसंभोगजमैहिकमामुष्मिकं च सुखमुच्यते । निःश्रेयसशब्देन च मोक्षः । तयोः सिद्धिरुत्पत्तिर्यस्माज्जायते स कायिकवाचिकमानसिकाद्यन्यतमवेदादिविहितक्रियाजन्य आफलोदयमात्मसमवेतः कोऽप्यतिशयो धर्म इति सौत्रं धर्मलक्षणम् ( १ ) । विहितक्रियासाध्यः पुंगुणो धर्म इत्युदयनाचार्याः ( २ ) । विहितकर्मजन्यो धर्म इत्यन्नंभट्टाः ( ३ ) । स्वर्गादिकसुखानां तत्साधनशरीरादीनां च साधनं यो यागादिजन्यव्यापारतया कल्प्य-

मानोऽदृष्टशब्दवाच्यो गुणविशेष आत्मसमवेतः स धर्मः। “ चिरध्वस्तं फलायालं न कर्मातिशयं विना ” इत्याचार्योक्तेरिति विश्वनाथपञ्चाननभट्टाचार्याः ( ४ ) । यजत्यादिधात्वर्थसाध्यः स्वर्गादिसाधनो नियोगाख्य आत्मगुणो धर्म इति प्राभाकराः ( ५ ) । “ न धर्मापलापः प्रकृतिकार्यवैचित्र्यात् । श्रुतिलिङ्गादिभिस्तत्सिद्धिः । अन्तःकरणधर्मत्वं धर्मादीनाम् ” इति सांख्याः ( ६ ) । अत्र विहितयागादिक्रियाणामाशुतरविनाशित्वात्कालान्तरभाविस्वर्गादिजनकत्वानुपपत्तेर्यागादिजन्य आफलोदयस्थायी नियोगादृष्टापरनामको वाऽऽत्मगुणो धर्म इतिप्राभाकरतार्किकयोर्मतम् । आत्मनः कूटस्थनित्यतया धर्मस्य तद्गुणत्व आत्मनः परिणामित्वापत्तेर्नाऽऽत्मगुणो धर्मः किंत्वन्तःकरणवृत्तिविशेषोऽन्तःकरणधर्मो धर्म इति सांख्याभिप्रायः ।

अथ धर्मशास्त्रकृन्निर्दिष्टानि धर्मलक्षणानीत्थमुपलभ्यन्ते । तत्र भगवान्मनुः—

विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः ।
हृदयेनाभ्यनुज्ञातो यो धर्मस्तं निबोधत ॥ इति ।

अत्र मेधातिथिभाष्यम्—विद्वद्भिरिति । विद्वांसः शास्त्रसंस्कृतमतयः प्रमाणप्रमेयस्वरूपविज्ञानकुशलाः । ते च वेदार्थविदो नान्ये । यतो वेदादन्यत्र धर्मं प्रति ये गृहीतप्रामाण्यास्ते विपरीतप्रमाणप्रमेयग्रहणादविद्वांस एव । एतच्च मीमांसातस्तत्त्वतो विज्ञायते । सद्भिरिति । सन्तः साधवः प्रमाणपरिच्छिन्नार्थानुष्ठायिनो हिताहितप्राप्तिपरिहाराय यत्नवन्तः । हितमहितं च दृष्टप्रसिद्धमेव । अदृष्टं तु विधिप्रतिषेधलक्षणम् । तदनुष्ठानबाह्या असन्त उच्यन्ते । अत उभयमत्रोपात्तं ज्ञानमनुष्ठानं च । सेवित इति भूतप्रत्ययेनानादिकालप्रवृत्ततामाह । नायं धर्मोऽद्यत्वे केनचित्प्रवर्तितः । तदेव नित्यशब्देन स्पष्टयति । यावत्संसारमेषो धर्मः । बाह्यधर्मास्तु सर्वे मूर्खदुःशीलपुरुषप्रवर्तिताः कियन्तं कालं लब्धावसरा अपि पुनरन्तर्धीयन्ते । नहि व्यामोहो युगसहस्रानुवर्ती भवति । सम्यग्ज्ञानमविद्यया संछन्नमपि तस्याः क्षये नैर्मल्यमेति । नहि तस्योच्छेदसंभवो नैर्मल्यादेवेति । अद्वेषरागिभिरिति । रागद्वेषौ तत्त्वावधारणे प्रतिबन्धकौ । यतः सत्यामपि कस्यांचिच्छास्त्रवेदनमात्रायां लब्धेऽपि विद्वदुपदेशे रागद्वेषवत्तया विपरीतानुष्ठानं दृश्यते जानानानामपि यथावच्छास्त्रम् । कस्यचिद्द्वेष्यस्योपघाताय प्रियस्य कस्यचिदुपकाराय कौटसाक्ष्याद्यधर्मं सेवन्ते । तेषां वेदमूलं तदनुष्ठानमित्याशङ्क्य तत्र रागद्वेषलक्षणस्य कारणान्तरस्य सत्त्वान्न तथा । अतस्तत्प्रतिषेधस्तच्छून्यैरिति । हृदयं वेदः । स ह्यधीतो भावनारूपेण हृदि स्थितो हृदयम् । तेनाभ्यनुज्ञातः कर्तव्यतया विहित इति यावत् ।

एवमात्मको यः स धर्म इत्यर्थात्सूच्यत इति ( १ )। "श्रुतिस्मृतिविहितो धर्म इति वसिष्ठः ( २ ) । उपदिष्टो धर्मः प्रतिवेदमिति बौधायनः ( ३ ) । श्रुतिप्रमाणको धर्म इति हारीतः ( ४ ) । शास्त्रप्रमेयो निःश्रेयसकरो धर्म इति याज्ञवल्क्यः ( ५ ) । अभ्युदयनिःश्रेयसे साधनत्वेन धारयति स धर्म इति पराशरमाधवः ( ६ ) । श्रुतिस्मृतिविहिताचारजन्यं सुकृतमपूर्वाख्यं धर्म इति मदनपारिजातः ( ७ ) । वेदविद्भिरनुष्ठितः संशयरहितश्च धर्म इति गोविन्दराजः ( ८ ) । वेदप्रमाणकः श्रेयःसाधनं धर्म इति कुल्लूकभट्टः ( ९ ) ।

" यमार्याः क्रियमाणं तु शंसन्त्यागमवेदिनः ।
स धर्मो यं विगर्हन्ते तमधर्मं प्रचक्षते । इति विश्वामित्रः ( १० ) ।
अतः स परमो धर्मो यो वेदादधिगम्यते ।
अवरः स तु विज्ञेयो यः पुराणादिषु संस्मृतः ॥
वेदार्थवित्तमैः कर्म यत्स्मृतं मुनिभिः पुरा ।
तद्यत्नेन समातिष्ठेत्तन्निषिद्धं तु वर्जयेत् ॥
ते हि वेदार्थतत्त्वज्ञा लोकानां हितकाम्यया ।
प्रदिष्टवन्तो यं धर्मं तं धर्मं न विचालयेत् ॥
वेदार्थो यः स्वयं ज्ञातो तत्राज्ञानं भवेद्यदि ।
ऋषिभिर्निश्चिते तस्मिन्का शङ्का स्यान्मनीषिणाम् ॥ इत्यपरार्कः(११)।

अत्र वेदोपदिष्टधर्मस्य परमत्वोक्त्योत्तमानामेव तस्मिन्नधिकारः । पुराणाद्युपदिष्टस्य त्ववरोक्त्या तदन्येषामपि तत्राधिकार इति सूचितम् । तथा स्मार्तो धर्मस्तदधिकारिभिरविशङ्कतयाऽनुष्ठेयः सर्वज्ञकल्पैर्ऋषिभिः प्रवर्तितत्वात्तस्येति च ।

वासिष्ठरामायणे प्रवृत्तिधर्मस्य स्वरूपलक्षणप्रयोजनानीत्थं वर्णितानि—

" यावज्जीवमग्निहोत्रं नित्यं संध्यामुपासयेत् ।
प्रवृत्तिरूपो धर्मोऽयं श्रुत्या स्मृत्या च चोदितः ॥
इहामुत्र च वा काम्यं प्रवृत्तं कर्म कीर्त्यते ।
प्रवृत्तं धर्ममासेव्य देवानामेति साम्यताम् ॥ इति ।

अथ महाभारते तत्र तत्रोपदिष्टानि धर्मतत्त्वानि धर्मनिर्वचनानि चेत्थमुपलभ्यन्ते—

" इमे वै मानवाः सर्वे धर्मं प्रति विशङ्किताः ।
कोऽयं धर्मः कुतो धर्मस्तन्मे ब्रूहि पितामह ॥

धर्मस्त्वयमिहार्थः किममुत्रार्थोऽपि वा भवेत् ।
उभयार्थोऽपि वा धर्मस्तन्मे ब्रूहि पितामह ॥

इति स्वरूपतः प्रमाणतः फलतश्च विप्रतिपत्तावुपन्यस्तायामाह पितामहो भीष्मः पौत्रं युधिष्ठिरं प्रति—

" सदाचारः स्मृतिर्वेदास्त्रिविधं तस्य लक्षणम् ।
चतुर्थमर्थमित्याहुः कवयो धर्मलक्षणम् ॥
लोकयात्रार्थमेवेह धर्मस्य नियमः कृतः ।
उभयत्र सुखोदर्क इह चैव परत्र च ॥
धर्मस्य निष्ठा त्वाचारस्तमेवाऽऽश्रित्य भोत्स्यसे ।
यथाऽधर्मसमाविष्टो धनं गृह्णाति तस्करः ॥
रमते निर्हरंस्तेनः परवित्तमराजके ।
यदाऽस्य तद्धरन्त्यन्ये तदा राजानमृच्छति ।
न हर्तव्यं परधनमिति धर्मः सनातनः ॥
मन्यन्ते बलवन्तस्ते दुर्बलैः संप्रवर्तितम् ।
यदा नियतिदौर्बल्यमथैषामेव रोचते ॥
सत्यस्य वचनं साधु न सत्याद्विद्यते परम् ।
दातव्यमित्ययं धर्म उक्तो भूतहिते रतैः ॥
तं मन्यन्ते धनयुताः कृपणैः संप्रवर्तितम् ।
यदा नियतिकार्पण्यमथैषामेव रोचते ॥
यदन्यैर्विहितं नेच्छेदात्मनः कर्म पूरुषः ।
न तत्परेषु कुर्वीत जानन्नप्रियमात्मनः ॥
लोकसंग्रहसंयुक्तं विधात्रा विहितं पुरा ।
सूक्ष्मधर्मार्थसहितं सतां चरितमुत्तमम् ॥
धर्मलक्षणमाख्यातमेतत्ते कुरुसत्तम ।

इत्थं धर्मस्वरूपे उपपत्तौ फले च समासतो निरूपिते । तत्र संदिहानेन धर्मराजेन पुनरपि तस्य दुर्ज्ञेयत्वे निष्कृष्टस्वरूपाधिगमाय—

" न धर्मः परिपाठेन शक्यो भारत वेदितुम् ।
अन्यो धर्मः समस्थस्य विषमस्थस्य चापरः ॥
दृश्यते· धर्मरूपेण ह्यधर्मं प्राकृतश्चरन् ।
धर्मं चाधर्मरूपेण कश्चिदप्राकृतश्चरन् ॥

वेदवादाश्चानुयुगं ह्रसन्तीति हि नः श्रुतम् ।
आम्नायवचनं सत्यमित्ययं लोकसंग्रहः ॥
आचाराणामनैकाग्र्यं सर्वेषामेव दृश्यते ।
नहि सर्वहितः कश्चिदाचारः संप्रदृश्यते ॥

इत्यादिनाऽऽशङ्किते तत्र निर्णयमाह पितामहः—

चिराभिपन्नः कविभिः पूर्वं धर्म उदाहृतः ।
तेनाऽऽचारेण पूर्वेण संस्था भवति शाश्वती ॥ इति ।

अत्र यः सतामत्रुटितपरम्परया संप्राप्तस्वरूपः स एव धर्मपदस्य मुख्योऽर्थ इत्यभिमतं पितामहस्य । युक्तमेवैतत्—

" येनास्य पितरो याता येन याताः पितामहाः ।
तेन यायात्सतां मार्गं तेन गच्छन्न दुष्यति ॥ इति स्मृतेः ।

अथ जाजलिं विप्रं प्रति तुलाधारेणोक्तं धर्मस्वरूपं यथा—

" ब्रवीमि ते सत्यमिदं श्रद्धत्स्व मम जाजले ।
भूतभव्यार्थमेवेह धर्मप्रवचनं कृतम् ॥
अकारणो हि नैवास्ति धर्मः सूक्ष्मो हि जाजले ।
सूक्ष्मत्वान्न स विज्ञातुं शक्यते प्राकृतैर्जनैः ॥
वेदाहं जाजले धर्मं सरहस्यं सनातनम् ।
सर्वभूतहितं मैत्रं पुराणं यं जना विदुः ॥
अद्रोहेणैव भूतानामल्पद्रोहेण वा पुनः ।
या वृत्तिः स परो धर्मस्तेन जीवामि जाजले ॥
यथावद्वर्तमानानां वृद्धानां पुत्रपौत्रिणाम् ।
अनुवर्तामहे वृत्तमहिंस्राणां महात्मनाम् ॥ इति ।

अत्र धर्मस्य श्रेयःसाधनत्वेऽपि सामान्यजनेन यथावद्विज्ञातुमशक्यत्वात्पितृपितामहादिपरम्परासंप्राप्तं यत्प्राण्यद्रोहेण वर्तनादिकं सर्वात्मना तदनुसरणं परमो धर्म इति तात्पर्यम् ।

अथापरं युधिष्ठिराय भीष्मेणोक्तं धर्मलक्षणं यथा—

देवतातिथिभृत्येभ्यः पितृभ्यश्चाऽऽत्मनस्तथा ।
ऋणवाञ्जायते मर्त्यस्तस्मादनृणतां व्रजेत् ॥

स्वाध्यायेन महर्षिभ्यो देवेभ्यो यज्ञकर्मणा ।
पितृभ्यः श्राद्धदानेन नृणामभ्यर्चनेन च ॥
पाकशेषावहार्येण पालनेनाऽऽत्मनोऽपि च ।
यथावद्भृत्यवर्गस्य चिकीर्षेत्कर्म आदितः ॥
इमं वै शाश्वतं धर्मं न जह्याद्भोगलिप्सया ॥ इति ।

इदं जायमानाधिकारिणा पुंसाऽनुष्ठेयं देवर्षिपितृऋणापाकरणात्मकं धर्मस्वरूपं "जायमानो वै ब्राह्मण०" इत्यादिश्रुतिमूलं द्रष्टव्यम्। तत्र ब्राह्मणपदं सर्वेषामुपलक्षणम् । यथाधिकारं यथासंभवं च सर्वैरेवेदं कर्तव्यम् । नित्योऽयं धर्मः ।

ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ।
अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः" ॥

इति प्रत्यवायस्मरणात्। अन्यच्च तेनैव तस्मायुपदिष्टमानुशासनिके पर्वणि—

यच्चोपदिश्यते शिष्टैः श्रुतिस्मृतिविधानतः ।
तथाऽऽस्थेयमशक्तेन स धर्म इति निश्चयः ॥

अतोऽन्यथा तु कुर्वाणः श्रेयो नाऽऽप्नोति मानवः ।

इदं धर्मतत्त्वपरिच्छेदाक्षमं श्रद्धावन्तमुद्दिश्योक्तं विज्ञेयम् ।

अथ वनपर्वणि पतिव्रतया ब्राह्मण्या कौशिकाय विप्राय कथितं धर्मस्वरूपं यथा—कौशिकनामा कोऽप्यग्रजन्मा वेदानभ्यस्यन् कस्मिंश्चिद्वृक्षमूले स्थित आसीत् । तद्वृक्षाग्रोपविष्टया बलाकया विसृष्टममेध्यं पुरीषादिकं तच्छरीरेऽपतत् । तदवलोक्य क्रुद्धः स रोषादिग्धेन चक्षुषा यावत्तां पश्यति तावद्दैवहता सा बलाका प्राणान्विससर्ज । अथ तामचेतनां पतितामवलोक्य संजातकारुण्यः स वाडवो रोषेणाकार्यमहं कृतवानस्मीति भृशं शुशोच । तत एवं संतप्तोऽयं विप्रो भिक्षार्थं द्विजोत्तमकुलानि पर्यटन् कमप्येकं पूततमं पतिव्रतागृहं प्रविष्टः । तत्र भिक्षां देहीति याचमानमेनं दृष्ट्वा क्षुत्क्षामकण्ठं पतिं चावलोक्य विप्रमेनं क्षणं तिष्ठेत्युक्त्वा सा साध्वी पत्युः परिचरणतत्परा बभूव । अथ तस्मिन्पत्यौ तृप्ते भैक्ष्यकाङ्क्षिणं द्विजमालोच्य भिक्षामादायोपजगाम । कौशिकस्तु रुष्टः सन्मां तिष्ठेत्युक्त्वा किमुपरोधं कृतवत्यसीत्यपृच्छत् । सा तं रुष्टं विज्ञाय सुनम्रया वाण्या प्रशस्य पतिशुश्रूषणवृत्तमकथयत् । तदाकर्ण्य द्विगुणितरोषः स ब्राह्मणं मामवगणय्य पतिस्त्वया सेवितो न जानीषेऽग्निकल्पानां ब्राह्मणानां प्रभावमित्युक्त्वा कोपारुणेन चक्षुषा

तामपश्यत् । सा त्वीषद्विहस्य नाहं बलाका रुष्टोऽपि किं मे करिष्यसि पतिदेवतायाः । त्वं विद्वानपि न जानासि तत्त्वतो धर्मम् । तथाऽप्यपराधं क्षमस्वेत्युक्त्वा—

सत्यार्जवे धर्ममाहुः परं धर्मविदो जनाः ।
दुर्ज्ञेयः शाश्वतो धर्मः स च सत्ये प्रतिष्ठितः ॥
भगवानपि धर्मज्ञः स्वाध्यायनिरतः शुचिः ।
न तु तत्त्वेन भगवन्धर्मं वेत्सीति मे मतिः ॥
यदि विप्र न जानीषे धर्मं परमकं द्विज ।
धर्मव्याधं ततः पृच्छ गत्वा तु मिथिलां पुरीम् ॥

इत्यापातत उक्त्वा धर्मस्वरूपं, तं विससर्ज । ततो धर्मतत्त्वपरिच्छेदाय मिथिलां विगाह्य स्वालयागतं तं ब्राह्मणं सत्कृत्य यथावदुपदिदेश धर्मतत्त्वं धर्मव्याधः—

वेदोक्तः प्रथमो धर्मो धर्मशास्त्रेषु चापरः ।
शिष्टाचीर्णस्तृतीयश्च त्रिविधं धर्मलक्षणम् ॥
यज्ञो दानं तपश्चैव वेदाः सत्यं द्विजोत्तम ।
पञ्चैतानि पवित्राणि शिष्टाचारेषु सर्वदा ॥
न तेषां भिद्यते वृत्तं यज्ञस्वाध्यायशीलिनाम् ।
आचारपालनं चैव एतच्छिष्टस्य लक्षणम् ॥ इति ।

अत्राभ्यर्हितं पूर्वमिति नियमेन वेदोक्तस्य धर्मस्य प्राथम्येतरयोर्द्वयोर्वेदमूलकत्वेन तत्रापि शिष्टाचीर्णस्य श्रुतिस्मृत्युभयमूलकत्वेन प्रामाण्यं बोध्यम् । पुनरप्याह—

आचारश्च सतां धर्मः सन्तो ह्याचारलक्षणाः ।
यो यथाप्रकृतिर्जन्तुः स स्वां प्रकृतिमश्नुते ॥
न्याययुक्तो य आरम्भः स हि धर्म इति स्मृतः ।
अतन्द्रितः कुरु क्षिप्रं मातापित्रोर्हि पूजनम् ॥
अतः परमहं धर्मं नान्यं पश्यामि किंचन ।
स्वधर्मं प्रतिपद्यस्व तेन कीर्तिमवाप्स्यसि ॥
स्वधर्माद्धि मनुष्याणां चलनं न प्रशस्यते ।
तस्माद्विचलितो जन्तुर्लोके हास्यं गमिष्यति ॥
स्वयंभूर्विहितो धर्मो यो यस्येह द्विजोत्तम ।
स तेन क्षपयेत्पापं सम्यगाचरितेन च ॥

सहजं यद्भवेत्कर्म न तत्त्याज्यं हि केनचित् ।
स एव तस्य धर्मो हि तेन सिद्धिं स गच्छति ॥

भगवत्पूज्यपादश्रीमच्छंकराचार्यचरणा अपि शारीरकभाष्ये तृतीयाध्यायस्य चतुर्थे पादे तद्भूताधिकरणे चत्वारिंशत्सूत्रभाष्ये—"यो हि यं प्रति कर्तव्यतयोपदिश्यते शास्त्रेण स तस्य धर्मो भवति न तु येन यत्स्वनुष्ठातुं शक्यते। चोदनालक्षणत्वाद्धर्मस्य" इति विशिष्य धर्मलक्षणं प्रतिपादयामासुः ।

अत्रेदं बोध्यम्—यस्य हि संप्राप्तये मानुषेष्वीहा सर्वदा दरीदृश्यते तस्मै सुखाय नित्यं प्रयतते जन्तुर्यथासामर्थ्यं कदाचिदतिक्रम्यापि तत्—यावदस्ति तस्मादप्यधिकं मङ्गलं कथं भविष्यतीति चिन्तया स्वस्वमतिप्रदर्शितमार्गेणोपक्रान्ताः प्रयत्ना अपि निर्दिष्टसाध्यसिद्ध्यर्थमेवेति ज्ञेयम् । ये च सांप्रतं यज्ञदानतपःपूजनादीनां प्रकारा आचाराश्च तत्र तत्रोपलभ्यन्ते नैकविधास्तेषां सर्वेषामपीयमेवैकाऽऽत्मनः कल्याणेच्छा मूलमित्यसंदिग्धम् । तदात्मनः कल्याणं कर्मणा प्राप्यमिति धर्मस्य सिद्धान्तः । तथा हि—नित्यनैमित्तिककाम्यनिषिद्धेति चतुर्विधानि कर्माणि विद्यन्ते वेदाद्युपदिष्टानि । तत्र नित्यकर्माकरणे प्रत्यवैत्यधिकारी पुमान् । निमित्तस्योपस्थितौ नियतं कर्तव्यानि नैमित्तिकानि । ततो नित्यानि नैमित्तिकानि च कर्माणि तेन तेनाधिकारिणाऽनुष्ठेयान्येव । निषिद्धाचरणे दुरितं जायत इति निषिद्धानि सदा त्याज्यान्येव । काम्यकर्मणामनुष्ठाने तु तज्जन्यफलोपभोगार्थं पुनर्जन्म ग्राह्यं भवतीति काम्यान्यपि कर्माणि नानुष्ठेयान्येव । एवं कर्मणां परिपाकमालोच्य तारतम्येन कानिचिद्विहाय कानिचिदनुष्ठितानि चेदुपभोगेन प्रारब्धकर्मणः समाप्तौ नित्यनैमित्तिकानुष्ठानेन निषिद्धकर्मवर्जनेन च नरकगत्यभावे चार्थात्सिद्धे काम्यकर्माननुष्ठानेन स्वर्गादिसुखोपभोगाय भविष्यां स्वर्गतौ प्रतिबद्धायां स्वर्गनरकेहलोकरूपाणां तिसृणां गतीनां काममभावे सिद्धेऽर्थात्तुरीया मोक्षाख्या शाश्वतसुखात्मिरूपा गतिरेवाऽऽत्मनः सिध्यतीत्यवश्यं प्राप्नोति । इदमात्मनः परमं मङ्गलं कश्चन जानाति न जानाति वा । अथापि प्रत्येकं प्रयत्नाः परं तदर्थमेवेत्यवश्यं वक्तव्यम् । यद्यपीष्टसाधनताज्ञानमन्तरा प्रवृत्तिरनुपपन्नेति प्रसिद्धम् । तथा हि—प्रथममिष्टविशेषविज्ञानम् । ततस्तदुपादानेच्छा । ततः प्रवृत्तिरिति । एवमपि सर्वत्र न तथा । यत इष्टविशेषविज्ञानाभावेऽपि सेनाध्यक्षाद्याज्ञया युद्धादौ सैनिकादेः प्रवृत्तिदर्शनात् । विनेयस्य गुरुवाक्यतः कार्यविशेषे प्रवृत्त्युपलब्धेश्च । "आचार्यचोदितः करोमि" इति भाष्यकारोक्तिरपीममेवार्थं द्रढयति । ततः कुत्रचिदिष्टाधिगमपूर्विका कुत्रचिच्चाधिकार्युपदेशतः प्रवृत्तिरिति संप्राप्नोति । स्थिते चैवम्—

सौवर्णं राजतं वाऽपि यथा भाण्डं निषिच्यते ।
तथा निषिच्यते जन्तुः पूर्वकर्मवशानुगः ॥

इत्यादिस्मृतेर्मानुषादीनामिदं जन्म पूर्वकृतकर्मणः फलभूतम् । तथा भूतो भविष्यंश्चाऽऽयुःक्रमो तत्तत्प्रागनुष्ठितशुभाशुभकर्मणः फलभूत इत्यविवादं सिध्यति । अतः पूर्वकर्माहितसंस्कारानुसारेण योग्यानि कर्माणि कृत्वा स्वेष्टं साधयितुं यद्यपि समर्थः पुंमांस्तथाऽपि—

काम एष क्रोध एष रजोगुणसमुद्भवः ।
महाशनो महापाप्मा विध्येनमिह वैरिणम् ॥

इति भगवदुक्तेः कामादिदोषोपहतचित्तेन किंचिज्ज्ञेन मर्त्येन स्वैरमालोच्यमानमपीदं शुभमिदमशुभं कर्मेति सम्यङ्निश्चेतुमशक्यमेव । अतो योग्यतमः शिक्षकोऽपेक्ष्यत एवाल्पज्ञेन तेन जन्तुना । स चान्ततो निरस्तसमस्तपुंदूषणो भगवन्निःश्वासतुल्योऽनादिर्वेदराशिरेवेति । तेन चोपदिष्टानि यज्ञादिकर्माण्येव धर्म इति महर्षिजैमिनिप्रभृतीनां धर्मलक्षणग्रथनतां प्रत्नानां महात्मनामैकमत्येनाभिप्रायः । अत एवोक्तं गितासु योगेश्वरेण भगवता श्रीकृष्णेन—

तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥ इति ।

ननु नियोगादृष्टान्तःकरणवृत्तीनां धर्मत्वमभिधीयते प्राभाकरतार्किकसांख्यैस्तत्कथमुच्यते वेदोदितकर्माण्येव धर्म इति । उच्यते । लोकावगतसामर्थ्यः शब्दो वेदेऽपि बोधक इति न्यायेन लोके यस्मिन्नर्थे गृहीतशक्तिको यः शब्दो वेदेऽपि स एव तस्यार्थो वाच्यः । अन्यथा वेदस्याबोधकत्वापत्तेः । अत एव—"लोके येष्वर्थेषु प्रसिद्धानि यानि पदानि तानि सति संभवे तदर्थान्येव वेदादिष्वित्यवगन्तव्यम् । नाध्याहारादिभिरेषां परिकल्पनीयोऽर्थः परिभाषितव्यो वा । एवं वेदवाक्यान्येवैभिर्व्याख्यायन्ते । अन्यथा वेदवाक्यानि व्याख्येयानि स्वपदार्थाश्च व्याख्येया इति प्रयत्नगौरवं प्रसज्येत" इत्युक्तं वाक्यतात्पर्यविद्भिर्भाष्यकारैः शबरस्वामिभिः । लोके तु यज्ञदानतपःप्रभृतिषु कर्मसु प्रसिद्धशक्तिकोऽयं धर्मशब्द अतो वेदेऽपि स एव तस्यार्थः । तदुक्तं भाष्ये—यो हि यागमनुतिष्ठति तं धार्मिक इति समाचक्षते । य एव श्रेयस्करः स एव धर्मशब्देनोच्यते । यो हि यस्य कर्ता स तेन शब्देनोच्यते । यथा—लावकः पावक इति । श्रेयस्करत्वं यज्ञादेः कर्मण एवाऽऽवेद्यते वेदेन न नियोगादेः । "तानि धर्माणि

प्रथमान्यासन् ” इति श्रुतौ व्यक्तमेव यज्ञादिकर्मणां धर्मत्वं श्रुतम् । किंच नियोगादेर्धर्मत्वं ब्रुवताऽप्रसिद्धो नियोगादिः कल्पनीयः । तस्य च धर्मत्वं वाच्यमिति गौरवम् । सिद्धान्ते तु यज्ञादिकर्मणां शास्त्रलोकप्रसिद्धानां धर्मत्वं केवलमिति लाघवम् ।

ननु कर्मणः स्वरूपत आशुतरविनाशित्वानुभवात्कालान्तरभाविफलजनकत्वानुपपत्तिः प्रागभिहितेति चेदस्तु नाम । आन्तरालिकं व्यापाराख्यं कर्मणः सुसूक्ष्मं स्वरूपं यदपूर्वमिति शास्त्रैर्व्यवह्रियते तत्र नहि व्यापारेण व्यापारिणोऽन्यथासिद्धिरिति न काऽपि क्षतिः । धर्मशब्दप्रयोगोऽप्यमुख्य इष्यत एव तत्र । अत एव—

“ कर्मनाशाजलस्पर्शात्करतोयाविलङ्घनात् ।
गण्डकीबाहुतरणाद्धर्मः क्षरति कीर्तनात् ॥

इत्यादिशास्त्रमुपपद्यत इति ज्ञेयम् ।

स्थिते चैवं शास्त्रनियमितानां यज्ञदानतपःपूजाप्रभृतीनां कर्मणां वाङ्मनःकायकृतानां धर्मत्वे, यथा वेदेन ते धर्मा उपदिश्यन्ते तथा वेदविदां मनुयाज्ञवल्क्यप्रभृतीनामृषिवर्याणां स्मृतिवचनैरपि समाजनियमनार्थं विशेषतः प्रातिस्विकरूपेण त एव धर्माः सप्रपञ्चं प्रतिपाद्यन्ते ।

तदुक्तं शारीरकभाष्ये—शारीरं वाचिकं मानसं च कर्म धर्माख्यं श्रुतिस्मृतिविहितम् । यद्विषया जिज्ञासा अथातो धर्मजिज्ञासेति सूत्रेण सूत्रिता इति । एवं सदाचारतोऽपि धर्मा अवगम्यन्ते । अत एव प्राङ्गनिर्दिष्टेषु धर्मस्वरूपलक्षणेषु कानिचिच्छ्रुत्युपदिष्टस्याग्निहोत्रादेर्धर्मस्य कानिचित्स्मार्तस्य चातुर्वर्ण्यचातुराश्रम्यनियतधर्मस्य कानिचित्पारम्परिकाशिष्टाचारप्राप्तस्य धर्मस्य, कानिचिच्च सकलानुष्ठेयसत्यादेः सामान्यधर्मस्य संग्राहकाणीति न तेषां मिथो विरोधः । शेषे च—

“ धारणाद्धर्म इत्याहुर्धर्मो धारयते प्रजाः ।
यः स्याद्धारणसंयुक्तः स धर्म इति निश्चयः ॥

इति शान्तनवोक्त्यनुसारं तत्तदधिकारिणमुद्दिश्य देशकालवयोवस्थाद्यनुसारेण वेदेन तदुपजीविस्मृत्यादिभिर्बलवत्प्रमाणाविरोधेनानुष्ठेयतयोपदिश्यमानो बलवदनिष्टाननुबन्धीष्टसाधनं यः स तत्तदधिकारिणो धर्म इति पर्यवस्यति वैदिकसंप्रदायदिशा धर्मलक्षणमिति सर्वं शिवम् । इति धर्मविमर्शे धर्मलक्षणप्रस्तावः ॥

———

## अथ धर्मप्रमाणविमर्शः ।

अथ लक्षणप्रमाणाभ्यां वस्तुनः सिद्धिरिति परीक्षकाणां नियमान्निरूपितेऽपि यथायथं धर्मलक्षणसार्थे यावत्तत्र प्रमाणं न प्रदर्श्यते तावन्न निर्विचिकित्सं सिध्यति धर्माख्यं वस्तु । यतः प्रमाणागोचरस्य नरशृङ्गादेः सत्त्वं न पश्यामः । किंच मानवमतेरयं विशेषो यत्प्रमाणेन वस्त्वधिगमो नाम । नहि तेषां कोऽपि व्यवहारः प्रमाणमन्तरोपलभ्यते । विना प्रमाणं प्रवृत्तिः पशुधर्मोऽयम् । नन्वस्माकं सदसद्विवेकशालिनाऽन्तःकरणेन युक्ततया यत्तर्क्येत स एव धर्मः सिध्येत् । कुतस्तत्र प्रमाणान्वेषणेति चेत् । यो हि यं प्रति कर्तव्यतयोपदिश्यते प्रमाणेन शास्त्रेण स एव तस्य धर्मो भवति, न तु येन यस्तर्कितुमनुष्ठातुं वा शक्यते । चोदनालक्षणत्वाद्धर्मस्येति ज्ञानवृद्धानां वचनं प्राक्प्रदर्शितं विस्मृतवानसि किम् ।

किंच लौकिकमपि कर्तव्यमकर्तव्यं वा किमपि न विना प्रमाणं स्थिरी क्रियते । येन ज्ञानलवदुर्विदग्धेन तेन सर्वथाऽस्वतन्त्रेण स्वैरवृत्तिना जन्तुना निरर्गलतर्कमवलम्ब्य मदमात्सर्यादिदोषकलङ्कितया स्वमत्या धर्मो नाम निर्णेतव्य इत्यहो महच्चित्रमेतत् । किंच यमवलम्ब्य धर्मं स्थिरीकर्तुमुद्यतो भवान् स तर्कः प्रतिपुरुषं भिद्यते । त्वं यथा तर्कयसि न तथाऽन्यस्तर्कयति । स तु त्वत्तर्कितं धर्मं सहैव त्वत्तर्केण प्रबाध्यान्यमेव कमपि तं तर्कयति । एवमपरोऽपि तार्किकस्तथेति न क्वापि तर्कः प्रतितिष्ठतीत्यप्रतिष्ठादोषदूषितस्तर्को नैव श्रद्धेयो भवति । अत एव यथार्थज्ञानं प्रमाणायत्तं न तर्काधीनम् । तर्कस्त्वनुग्राहकः प्रमाणानां न स्वयं प्रमाणमिति प्रमाणतत्त्वविदो वदन्ति । अत एव मानाधीना मेयसिद्धिरुच्यते तैः । अत एव च—

' तार्किकान् बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत् ।

तथा—आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना ॥

यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः ॥ इति चाऽऽहुः ।

तत्र धर्मस्यातीन्द्रियत्वान्न प्रत्यक्षादिलौकिकप्रमाणगोचरः स इति प्रागभिहितमेव । अतोऽलौकिकान्येवै तस्मिन्प्रमाणानि वक्तव्यानि । तदाह भगवान्मनुः—

वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ।

आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ॥ [अ० २ श्लो० ६] इति ।

अत्र वेदस्य धर्ममूलत्वं नाज्ञातज्ञापको विधिः । यतो नहि तस्य तन्मूलत्वं मन्वाद्युपदेशगम्यम् । अपि त्वबाधितार्थप्रतीतिजनकत्वादपौरुषेयत्वेन निरस्त-

समस्तपुंदूषणतया च मिथ्यात्वशङ्काया अनुत्थानाच्छब्दस्य स्वतोऽवुष्टत्वाच्च स्वतः-सिद्धं प्रभाकरवत्प्रामाण्यमनूद्यते स्मृत्यादीनां वेदमूलत्वेन प्रामाण्यनिर्वाहायेति बोध्यम्। अथवा स्वतःसिद्धमपि वेदप्रामाण्यं प्रति ये संदिग्धा मन्दमतयस्तान्प्रति सुहृदु-पदेशवदिदमुपदिश्यते वेदोऽखिलो धर्ममूलमिति। अर्थाद्धर्ममूलत्वेनैव वेदो विचार्यो नान्यमूलत्वेन प्राकृतवस्तुवदित्यर्थः। दृश्यन्ते चान्यथासिद्धस्याप्यर्थस्योपदेष्टारो लोके। यथा न त्वमजीर्णे जेमनं कुरु। अजीर्णप्रभवा हि रोगा इति।

अखिल ऋग्यजुःसामाथर्वलक्षणो मन्त्रब्राह्मणात्मकस्तत्तच्छाखाभिः सहितोऽनादिः शब्दराशिः प्रत्येकं विधिमन्त्रनामधेयनिषेधार्थवादभेदात्पुनः पञ्चविधोऽपि सर्वो धर्म-मूलमेव। तत्र विधिः साक्षाद्धर्मे प्रमाणम्। 'यथा—अहरहः संध्यामुपासीत। सत्यं ब्रूयात्। न जैह्म्यमाचरेत्। यजेत दद्यात्। धर्मं चर। धर्मान्न प्रम-दितव्यम्। देवपितृकार्याभ्यां न प्रमदितव्यम्। यान्यनवद्यानि कर्माणि। तानि सेवि-तव्यानि। नो इतराणि" इत्यादिः। अर्थवादानां विधिविहितार्थप्राशस्त्यबोधनद्वारा, मन्त्राणां विहितार्थानुष्ठानकालीनपदार्थस्मरणद्वारा, नामधेयानां विहितपदार्थसामान्यस्यै-केन युगपदनुष्ठातुमशक्यतया तद्विशेषबोधनेन, निषेधानां निषिद्धवस्तुभ्यो निवृत्ति-ज्ञापनेन च विधिवाक्यैकवाक्यतया धर्मे प्रामाण्यं बोध्यम्। तदुक्तम्—'विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः' इत्यादि।

स्मृतिशीले च तद्विदाम्। अनुभूतार्थविषयकं ज्ञानं स्मृतिः। तदावेदकवा-क्यमपि स्मृतिरित्युच्यते। तच्छब्दार्थो वेदः। तथा च वेदार्थानुभववतां मन्वादीनां यदिदं कर्तव्यं न कर्तव्यमिदमित्यादि स्मरणं तदपि धर्मे प्रमाणं प्रत्यक्षवेदविरुद्धं न चेत्। विरुद्धं तु न प्रमाणम्। तदुक्तम्—'विरुद्धे त्वनपेक्षं स्यादसति ह्यनुमानम्' इति। तथा तद्विदां शीलमपि धर्मे प्रमाणम्। शीलं तु—ब्रह्म-ण्यता देवपितृभक्तता सौम्यताऽपरोपतापिताऽनसूयता मृदुताऽपारुष्यं मैत्रता प्रिय-वादिता कृतज्ञता शरण्यता कारुण्यं प्रशान्तिश्चेति त्रयोदशविधम्। किंवा राग-द्वेषप्रहाणं शीलम्। अथवा समाधिः शीलम्। शील समाधाविति धातुपाठात्। समाधानं च मानसो धर्मः। तेन समाधानवती या स्मृतिः सैव धर्मे प्रमा-णम्। न स्मृतिमात्रमिति यावत्। वस्तुत आत्मगुणसंपच्छीलम्। तदुक्तं भारते—

तत्तु कर्म तथा कुर्याद्येन श्लाघ्येत संसदि।
शीलं समासेनैतत्ते कथितं कुरुनन्दन॥ इति।

आचारश्चैव साधूनाम्। साधवो धार्मिकाः।

यथा चित्तं तथा वाचो यथा वाचस्तथा क्रियाः।
चित्ते वाचि क्रियायां च साधूनामेकरूपता॥

इत्युक्तलक्षणा ज्ञेयाः । चकारो वेदविद्वाचकः । तथा च वेदविदां साधूनां यं आचारो व्यवहारोऽनुष्ठानं वर्तनं, यत्र श्रुतिस्मृती नोपलभ्येते तत्र प्रमाणम् । यथा विवाहादौ कङ्कणबन्धनम् । गुर्वानुवृत्तिः । प्रियवचनम् । अभिवादनम् । अभ्युत्थानम् । कार्यमात्रोपक्रमे मङ्गलानुष्ठानमित्यादिरूपः । तदुक्तम्—"अथ यदि ते कर्मविचिकित्सा वृत्तविचिकित्सा वा स्यात् । ये तत्र ब्राह्मणाः संमर्शिनो युक्ता आयुक्ता अलूक्षा धर्मकामाः स्युः । यथा ते तेषु वर्तेरंस्तथा तेषु वर्तेथाः" इति । अत एव च—

सन्तः सदाऽभिगन्तव्या यद्यप्युपदिशन्ति न ।
या हि स्वैरकथास्तेषामुपदेशा भवन्ति ते ॥

इत्युक्तं सुभाषिते ।

आत्मानस्तुष्टिरेव च । अर्थाद्वेदविदां साधूनां मानसः प्रसादो वैकल्पिके विषये धर्ममूलम् । नेतरेषामित्यर्थः । तदुक्तम्—वैकल्पिके विषय आत्मतुष्टिः प्रमाणमिति गर्गाचार्य इति ।

पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥ इति याज्ञवल्क्यः ।

पुराणानि यथा—ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा ।
तथाऽन्यन्नारदीयं च मार्कण्डेयं च सप्तमम् ॥
आग्नेयमष्टमं प्रोक्तं भविष्यं नवमं तथा ।
दशमं ब्रह्मवैवर्तं लिङ्गमेकादशं तथा ॥
वाराहं द्वादशं प्रोक्तं स्कान्दं चात्र त्रयोदशम् ।
चतुर्दशं वामनं च कौर्मं पञ्चदशं तथा ॥
मात्स्यं च गारुडं चैव ब्रह्माण्डाष्टादशं तथा ।

अन्यत्र तु—मद्वयं भद्वयं चैव ब्रत्रयं वचतुष्टयम् ॥
नालिम्पाग्निपुराणानि कुस्कं गारुडमेव च ॥ इत्युक्तम् ।

न्यायः—कणादगौतमर्षिभ्यां प्रणीतं पदार्थोद्देशलक्षणपरीक्षात्मकं तर्कापरनामकं शास्त्रद्वयम् । मीमांसा—जैमिनिबादरायणाभ्यां महर्षिभ्यां प्रणीतं वेदस्य परमतात्पर्यीभूतधर्मब्रह्मविचारात्मकं पूर्वोत्तरमीमांसाभिधं शास्त्रद्वयम् । धर्मशास्त्रं तु—

मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिराः ।
यमापस्तम्बसंवर्ताः कात्यायनबृहस्पती ॥

पराशरव्यासशङ्खलिखिता दक्षगौतमौ ।
शातातपो वसिष्ठश्च धर्मशास्त्रप्रयोजकाः ॥

इत्येवमादिऋषिप्रणीताः स्मृतयः । अङ्गानि तु पाणिनीयशिक्षोक्तानि यथा—

छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते ।
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ।
शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् ॥ इति षट् ।

वेदा—ऋग्यजुःसमाथर्वाणो मन्त्रब्राह्मणात्मकाश्चत्वारस्तत्तच्छाखायुता अपौरुषेया प्रविशेषाः । तदुक्तं पराशरस्मृतौ—न कश्चिद्वेदकर्ता स्याद्वेदस्मर्ता चतुर्मुखः ।

वेदो नारायणः साक्षात्स्वयंभूरिति शुश्रुमः ॥ इति ।

मनुरपि—अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा ।

आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः ॥ इति ।
श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
सम्यक्संकल्पजः कामो धर्ममूलमिदं स्मृतम् ॥
वेदं गृहीत्वा यः कोऽपि शास्त्रं चैवावमन्यते ।
स सद्यः पशुतां याति संभवानेकविंशतिम् ॥
उक्तं च प्रतिषिद्धं च पुनः संभावितं तथा ।
सापेक्षं निरपेक्षं च ऋषिवाक्यमनेकधा ॥
वेदाः प्रमाणं स्मृतयः प्रमाणं धर्मार्थयुक्तं वचनं प्रमाणम् ।
एतत्त्रयं यत्र भवेत्प्रमाणं तद्वाक्ययुक्तं कुरु तत्प्रमाणम् ॥ इत्यत्रिस्मृतिः ।

महाभारते—धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः ।

द्वितीयं धर्मशास्त्राणि तृतीयं लोकसंग्रहः ॥
श्रुतिस्मृतिसमं पुण्यं पापनाशनमुत्तमम् ।
चिन्तयेद्ब्राह्मणो भक्त्या धर्मसंस्थापनाय च ॥ इति ।

मीमांसाभाष्यवार्तिके—वैदिकैः स्मर्यमाणत्वात्तत्परिग्रहदार्ढ्यतः ॥

संभाव्य वेदमूलत्वात्स्मृतीनां स्यात्प्रमाणता ॥ इति ।

मनुस्मृतौ—श्रुतिं पश्यन्ति मुनयः स्मरन्ति च तथा स्मृतिम् ॥

तस्मात्प्रमाणमुभयं प्रमाणैः प्रापितं भुवि ।
योऽवमन्येत तूभे ते हेतुशास्त्राश्रयाद्द्विजः ।
स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दकः ॥

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरेदिति ॥

अनाम्नातेषु धर्मेषु कथं स्यादिति चेद्भवेत् ।
यं शिष्टा ब्राह्मणा ब्रूयुः स धर्मः स्यादशङ्कितः ॥

आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः ॥

अनुष्ठितं तु यद्देवैर्मुनिभिर्यदनुष्ठितम् ।
नानुष्ठेयं मनुष्यैस्तत्तदुक्तं धर्ममाचरेत् ॥ इति ।

श्रुतिस्मृतिप्रमाणो धर्मस्तदलाभे शिष्टाचारः प्रमाणम् ' इति वसिष्ठस्मृतिः ।

अलोलुपा दम्भलोभमोहकोपविवर्जिताः ।
धर्मेणाधिगतो यैश्च वेदः सपरिबृंहणः ॥
शिष्टास्तदनुमानज्ञाः श्रुतिप्रत्यक्षहेतवः । इति बौधायनस्मृतिः ।

धर्मप्रमाणनिर्णेतारः पराशरस्मृतावभिहितास्ते च यथा—

कल्पे कल्पे क्षयोत्पत्तौ ब्रह्मविष्णुमहेश्वराः ।
श्रुतिस्मृतिसदाचारनिर्णेतारश्च सर्वदा ॥ इति ।

भगवद्गीतायामपि—परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ इति ।

भारतेऽनुशासनपर्वणि—प्रत्यक्षं लोकतः सिद्धिर्लोकश्चाऽऽगमपूर्वकः ।
शिष्टाचारो बहुविधस्तन्मे ब्रूहि पितामह ॥

उ०—धर्मस्य ह्रियमाणस्य बलवद्भिर्दुरात्मभिः ।
संस्था यत्नैरपि कृता कालेन प्रतिभिद्यते ॥

अधर्मो धर्मरूपेण तृणैः कूप इवाऽऽवृतः ।
ततस्तैर्भिद्यते वृत्तं शृणु चैव युधिष्ठिर ॥

अवृत्त्या ये तु निन्दन्ति श्रुतित्यागपरायणाः ।
धर्मविद्वेषिणो मन्दा इत्युक्तस्तेषु संशयः ॥

अतृप्यन्तस्तु साधूनां यावदागमबुद्धयः ।
परमित्येव संतुष्टास्तानुपासस्व पृच्छ च ॥
न तेषां भिद्यते वृत्तं यज्ञाः स्वाध्यायकर्म च ।
आचारः करणं चैव धर्मश्चैकत्रयं पुनः ॥

वेदः प्रत्यक्षमाचारः प्रमाणं तत्त्रयं यदि ।
पृथक्त्वं लभ्यते चैषां धर्मश्चैतत्त्रयं कथम् ॥
यद्येवं मन्यसे राजंस्त्रिधा धर्मविचारणा ।
एक एवेति जानीहि त्रिधा धर्मस्य दर्शनम् ॥
प्रमाणमप्रमाणं वै यः कुर्यादबुधो जनः ।
न स प्रमाणतामर्हो विषादजननो हि सः ॥
जिज्ञासा न तु कर्तव्या धर्मस्य परितर्कणात् ।
सदैव भरतश्रेष्ठ मा ते भूदत्र संशयः ॥
अन्धो जड इवाऽऽशङ्की यद्ब्रवीमि तदाचर ।
यथाशरीरं न ग्लायेन्नेयान्मृत्युवशं यथा ॥
तथा कर्मसु वर्तेत समर्थो धर्ममाचरेत् ।
अनुगन्तुं सतां वर्त्म कृत्स्नं यदि न शक्यते ।
स्वल्पमप्यनुगन्तव्यं मार्गस्थो नावसीदति ॥

भविष्यपुराणे श्रूयते यथा—अष्टादश पुराणानि रामस्य चरितं तथा ।
विष्णुधर्मादिशास्त्राणि शिवधर्माश्च भारत ।
कार्ष्णश्च पञ्चमो वेदो यन्महाभारतं स्मृतम् ।
सौराश्च धर्मा राजेन्द्र वामनोक्तास्तथैव च ॥
धर्मप्रमाणमित्याहुर्जयनाम्ना मनीषिणः ॥ इति ।

एवमन्येष्वपि स्मृतिपुराणेतिहासादिग्रन्थेषु धर्मप्रमाणवचनानि बहूनि विद्यन्ते। तानि विस्तरभिया नेहोद्धृतानि । जिज्ञासा चेत्तेभ्य एव ग्रन्थेभ्योऽवगन्तव्यानीति धर्मप्रमाणविचारः ।

---

## अथ धर्मावश्यकताविचारः ।

अथ कस्यचिन्मर्त्यस्यादृष्टानुसारतश्चैकमत्युत्तमं रत्नं दृष्टिपथातिथिरभवत् । किंतु संपरीक्ष्य तदनर्घत्वावगमसामर्थ्यस्य तस्मिन्नसत्त्वादरुचिरमिदमित्येवाऽऽपाततो ज्ञानं तस्य जातम् । अथ तदेव रत्नं केनापि हेतुना तेन यदा रत्नपरीक्षानिष्णातस्य पुंसः पुरतः संस्थापितं तदा किंजातीयमिदं रत्नं महत्त्वमस्य कति मूल्यं कियदुपयोगोऽस्य कुत्र कथं च कार्य इत्यादिकं सर्वं संप्रधार्य सानन्दं सादरं च शिरसि धृतं

तद्रत्नं तेन सुपरीक्षकेण । तदेव च यदा पामरस्याग्रे कृतं तदाऽवकरनिकरविकरणासक्त-कुक्कवाकुवत्तस्य किमपि महत्त्वं नाधिगतं तेन पामरेण । प्रत्युतैकयावनालकणसाम्य-मपि नाधितगं तस्मिंस्तेन। मा नाम जानातु स वराकः । नहि तदधीनं तस्य रत्नस्य महार्हत्वम् । तनु स्वतःसिद्धं प्रकृष्टप्रकाशतिग्मरश्मिरिवेति । अयं रत्नो-दन्तोपन्यासो दृष्टान्तो बोध्यः । प्रसिद्धरत्नवदेवैकं प्रकाममनर्घं रत्नं करुणापारावा-रेणेश्वरेण नः प्रदत्तमस्ति । तच्च रत्नं धर्म एव । अस्य धर्ममहामणेर्योग्यतां ज्ञातुं समर्था ये पुरुषश्रेष्ठास्त एव तं परमपूज्यमधिगम्याऽऽश्रयन्ति । स्वीयामैहिकीं चाभ्युन्नतिं साधयन्ति । ये तु ताम्रचूडवदसमर्थाः समर्था अपि वाऽन्यथाशिक्षणेन कुसंगत्या च दुर्विदग्धास्त एव तस्य धर्मरत्नस्य तुच्छतां प्रकटयन्ति । तादृ-शानां मानुषाणां पशुष्वेव गणना भाव्या । यतः सदसद्विवेकमतिमत्त्वमेव पश्वा-दिभ्यो मानवेषु वैशिष्ट्यम् । तदभावे त्वशननिद्राभयमैथुनादीनामुभयसाधारण्यात् ‘ काकः कृष्णः पिकः कृष्णः ’ इतिवद्वैशिष्ट्यं ज्ञातुं नान्यो मार्गोऽस्ति ।

प्रसिद्धं रत्नं मूलत एवोत्तमं सदपि काञ्चनेन संसृष्टं चेत्समधिकमेव रमणीयं दृश्यते तद्वदस्य धर्मरत्नस्याप्येकमुत्कृष्टं निसर्गसिद्धमुपलब्धेर्नियतं स्थानं वर्तते । तस्मिन्स्थाने कुशलेन शिल्पिवरेण सावधानतया निहितं तद्धर्मरत्नं विशेषतो विरा-जते । तत्स्थानं नामात्यन्तं प्रत्नतमो वेदराशिः । अस्य वेदराशेर्योग्यतां वर्ण-यितुं जगति को वा समर्थः । मानवशक्तेर्नितान्तं बहिर्भूतं तत्कृत्यम् । यतोऽद्य-यावत्परःसहस्रैस्तत्त्वविन्मन्यैर्महता यत्नेन स्वीयतर्ककुशलमतेस्तर्कपाटवं प्रकटय्य जगदिदं विस्मयरितमितं विधातुं प्रयत्नः कृतः । अथाप्यस्य वेदराशेरुत्पत्तेः समय उत्पादयिता चानिश्चयावस्थायामेव चिराय स्थितः । यस्य प्राचीनत्वं पवित्रतमत्वं च निःशेषेणापि जगता निःसंदेहं सशिरःश्लाघं चाङ्गीकार्यम् । यस्य हि प्राधान्येन प्रतिपाद्योऽर्थः सर्वथाऽबाध्यः सन् प्राणिनां कल्याणप्रदो विद्यते । यस्य शब्दार्थयो-र्गाम्भीर्यमवलोक्य सरितां पतिरपि स्वीयजलगाम्भीर्यं क्षुद्रं मनुते । यश्चराचरस्य विश्वस्य सर्वात्मना वन्द्यो विराजते । येन ह्यधिकारानुसारेण मानवेभ्यो हितकरोपायाः प्रदर्श्यन्ते । यस्याऽऽज्ञा मानवमात्रेण राजनिदेशवद्योग्यतामनतिक्रम्य परिपालिता चेन्नरं नारायणात्मना परिणामयितुं यो बद्धपरिकरोऽस्ति । पूज्यतमा वसिष्ठवामदेवप्रभृतयः प्रत्ना महर्षयो हरिश्चन्द्ररामचन्द्रयुधिष्ठिरादयः सूर्यसोमवंशीया राजानः समाधिप्रमुखा वैश्या विदुरादयश्च भगवच्चरणारविन्दप्रसूता विशुद्धास्तुरीयवर्णा इतरे च सर्वे ये

प्राणेभ्योऽपि गरीयांसं मत्वा तदाज्ञानुसारं वर्तित्वा चैहिकमामुष्मिकं चेष्टं संसाधितवन्तस्तदेकशरणतया च " विनष्टेऽपि देहे सुकीर्त्याऽवस्थेयम् " इत्युपदेशामुत्तरसंतत्यै स्वीयकृतिभिः कृतवन्तः । यः सर्वेषां धर्माणां नीतेश्च निधिर्विद्यते । यः कल्पवृक्षवत्कामधेनुवद्वा सन्मनोरथानां प्रदाता । यः शिक्षाव्याकरणच्छन्दोज्योतिषनिरुक्तकल्पाख्यैः षडङ्गैरलंकृतः सांख्यद्वयन्यायद्वयमीमांसाद्वयैः समुद्भासितो मत्स्यमार्कण्डेयाद्यष्टादशपुराणैरुपबृंहितो मनुयाज्ञवल्क्यपराशरव्यासबौधायनप्रभृतिभिः स्मृतिभिः समालिङ्गितः सन्सार्वभौममहाराजादप्यधिकां सत्तां जगन्मण्डले प्रसारयति । यश्चतुर्दशविद्यानां चतुःषष्टिकलानां च मातृनिकेतनभूत इति प्रेम्णा स्वीयसर्वज्ञतां व्यक्तं प्रकाशयति । तस्यात्यन्तविशुद्धस्य पूज्यतमस्य वेदात्मनोऽद्वितीधर्मनिवासस्थानस्य महत्त्ववर्णनं तु—तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरमितिवदेव । अथाप्याकाशविहंगमन्यायेनात्रावकाशो ज्ञेयः । तस्मादेतादृशाभ्यर्हिततमप्रासादसंरक्षितस्य धर्ममहामणेः प्राशस्त्यं कियन्महत्तन्निर्मत्सरा आर्या एव जानीयुः ।

ननु सत्यामप्येवं धर्मस्यातिमहत्यां योग्यतायां तस्याऽऽवश्यकताऽस्माकं न स्याच्चेत्किं तेन योग्येनापि प्रयोजनम् । बाढम् । आपाततस्तथा भानं स्वाभाविकमेव । किंतु सुसूक्ष्मया दृष्ट्या किंचिद्विमर्शे कृते भ्रमोऽयं विलीनः स्यादेव विवेकिनां पुंसाम् । तथा हि—अस्मिन्नवनिमण्डल आब्रह्मस्तम्बं सर्वेषां प्राणभृतां जनिमारभ्य चरमश्वासनिर्मोकं यावत्स्वस्वसामर्थ्यानुसारमहर्निशं नैकविधाश्चेष्टाः समुपलभ्यन्ते । ताश्चेत्थम्—केऽपि मानवा राजकीयगहनविषयेषु चित्तं निक्षिप्य महता यत्नेन राष्ट्रियप्रश्नानां विमर्शाञ्जनतायाः पुरतो लेखनादिनोपस्थापयन्ति । अपरे केऽपि जनाः सांप्रतमनुपयुक्तास्ते विमर्शा इत्युपेक्ष्य तान्, समाजसुधारणाकर्मण्यत्यन्तासक्ताः परिदृश्यन्ते । केचन सर्वत्र नीतिमत्तायाः संवर्धनं भाव्यमिति नीतितत्त्वानामुपदेशं समाजस्याग्रे महता संरम्भेण प्रकुर्वन्ति । अन्ये त्वनीतिमत्ताया अपि पराङ्मुखा नोपलभ्यन्ते । सर्वेषु दानेषु विद्यादानं श्रेष्ठमपि तद्योग्यतामनुसृत्य देयमिति विचारं जनताहिताय केचन विवेकिनः प्रकटयन्ति चेदन्ये महाशयाः सर्वान्सममेव सर्वविद्यालंकृतान्विधातुं स्पृहायामसत्यामपि प्रसभं कथमपि विद्यामृतं पाययितुं केनापि हेतुना प्रवृत्ताः संदृश्यन्ते । केचन देशीयवाणिज्यवृद्ध्यर्थं मनःपूर्वकं नानाविधान् यत्नान् कुर्वन्ति चेदपरे राजसेवावृत्त्यैवोन्नतिं साधयितुमभिलषन्ति । केचनातिगभीरे धर्मविचारे बद्धादराः सन्तः स्वीयबुद्धिसामर्थ्यानुसारेण धर्माधर्मयोः कूटानि सम्यग्विशदयन्ति चेदन्ये धर्माधर्मबन्धनेषु निता-

न्तशैथिल्यमन्तरेण राष्ट्रस्य समुन्नतिर्न स्यादित्युद्घुष्य यथेष्टाचरणं कृत्याऽपि पुरस्कुर्वन्ति । जातिनिर्बन्धानामसत्त्वे भृशमव्यवस्थितिर्भवेदिति केचन ब्रुवन्ति चेदपरे प्रजापतिनाऽपि विधातुमशक्यामेकजातीयतां प्रशस्य निसर्गतश्चञ्चलस्य मनसस्तुष्टिं संपादयितुं वाञ्छन्ति । केचन सत्याचरणब्रह्मचर्ये सर्वथोत्कर्षस्य मूलभित्ती इति जनतायै मुहुर्मुहुः सादरमुपदिशन्ति चेत्केऽप्यन्ये जैह्म्याद्याचरणं स्वप्नेऽपि त्यक्तुं नेच्छन्ति । केचन कल्याणप्रदमात्मनः स्वरूपमधिगन्तुं यथामति प्रयतन्ते चेदन्ये निरर्गलेन्द्रियादितृप्तिरेव जीवितस्येतिकर्तव्यतेति भावयन्ति । केचन स्वीयवर्णाश्रमानुसारेण वर्तनं मानुषाणामाद्यं कर्तव्यमिति विज्ञाय तथा स्वयं वर्तित्वाऽन्येभ्यस्तथा वर्तितुमुपदिशन्ति चेत्सर्वमिदमेतेषां वितथमेवाऽऽडम्बरमित्यपि केचनोच्चैः प्रतिपादयन्ति । केचनाऽऽध्यात्मिकोन्नतेरान्तिमं तत्त्वं जगतोऽग्रत उपन्यस्य यथाबुद्धिवैभवं तद्विशदयितुं कृतोत्साहाश्चेदपरेऽसुतर्पिणि आधिभौतिकोन्नतेर्बालघोटकमग्रतः कृत्वा तेनैव कृतकृत्यमात्मानं मन्वते । केचनेदं जगदाधिदैविकशक्त्या परिपूर्णमित्यनुभवतः प्रमाणतश्च कथयन्ति चेदपरे पैशाचिक्यो विचित्राश्चमत्कृतयः कपोलकल्पितास्त्यक्तुं सहसा नेच्छन्ति । लब्धसुशिक्षणा अनेके कुमाराः पित्रोराज्ञापरिपालने विद्याभ्यासे च तत्पराश्चेदपरे माणवकाः स्वैरवर्तनेनाऽऽत्मनः कुलमधः कर्तुमपि प्रवृत्ताः श्रूयन्ते । युवानः केचन मर्यादितविषयसेवनस्य स्वादुफलमनुभवन्ति चेदपरे केनापि प्रमत्तास्तरुणाः कुमार्गावलम्बनेन स्वीयमायुः कपर्दिकामूल्यं प्रकुर्वन्ति । स्थविराः केचन भगवत्सेवायां स्तोकमपि कालं यापयन्ति चेदन्येषां वर्षीयसां दुराशा दुर्दान्तघोटकवदग्रत एव प्रधावन्ति ।

इत्थं सर्वेषामपि प्राणिनां सम्यगसम्यग्वा क्रियाः सातत्येन प्रचलिताः सन्ति ताः किमर्थं किं तासां मुख्यमुद्देश्यमिति प्रश्ने सुखं दुःखनिवृत्तिर्वेत्येवोत्तरमैकमत्येन युगपदागमिष्यतीत्यविवादम् । यतस्तदर्थमेव सर्वा अपि चेष्टा वर्तन्ते । कोऽपीत्थं न ब्रूयाद्यदहं यते तद्दुःखाप्तय इति । “सुखार्थाः सर्वभूतानां मताः सर्वाः प्रवृत्तयः” इति शास्त्रवचनमप्यस्ति । सुखार्थं सर्वेषां सर्वाः प्रवृत्तयश्चेत्तत्प्राप्त्युपायैरपि नियमितैरेव भाव्यम् । अनियमितोपायेन हि कस्यापि चिराय सुखं जातमिति न दृष्टचरम् । तथा हि—अभ्यवहारोत्थं सुखमाकाङ्क्षितं चेत्स्वीयदेशकुलशरीराद्यवस्थानुसारेण य उपकारकोपायाः स्युस्तेषामेवावलम्बनमावश्यकम् । तेन कस्याप्यनिष्टस्यानुत्पत्त्या स्वेष्टं सुखं सलीलं सिध्येत् । अन्यथाचरणे तन्न सिध्ये-

द्विरयेव न प्रत्युत शारीरमानसिकलौकिकदुःखभोगप्रसङ्गोऽपरिहार्यः स्यात् । एवं सौपुप्तं सुखं विषयसेवनजं च सुखं विज्ञेयम् । यत आहारनिद्रादयो व्यवहाराः सर्वप्राणिसाधारणाः सन्तश्चित्तेन्द्रियदेहादीनां समाधानकारका विद्यन्ते । किंतु योग्यदिशैव तेषां परिचरणं भाव्यम् । तथा चेदेव ते सुखप्रदा भवेयुः । अन्यथा त एव व्यवहारा भीषणस्वरूपेण जीवान्प्रति दुर्गतिनरके पच्यमानगर्हणीयक्षुद्रजन्तुवच्चिराय दुःखं दातुं कदाऽपि पराङ्मुखा नैव स्युः । संप्रति तेषामन्यथाचरणादुत्पन्नं फलं न्यूनाधिकतया सर्वत्र दरीदृश्यते ।

एतेषामाहारनिद्रादिव्यवहाराणां नियमबद्धता पश्वादिष्वपि संदृश्यते चेत्सर्वश्रेष्ठमनुष्यप्राणिषु साऽत्यन्तमावश्यकीति पृथङ्नैव वक्तव्यम् । अर्थात्तेषां व्यवहाराणां हितकरोपायाविष्करणं तेषां नियमनं तदनुसारेण वर्तनमनभिज्ञेभ्यश्च तथा वर्तितुं मुहुर्मुहुरुपदेशादिप्रदानमित्यादिकं विज्ञानां मानवानामाद्यं कर्तव्यं विद्यते । तदर्थमेव तेष्वसाधारणज्ञानशक्तिरीश्वरेण संनिधापिता । तस्याः शक्तेः सद्विनियोग एव मनुष्याणां मनुष्यत्वम् । तत्सम्यग्विधया स्वेन न प्रकटीकृतं चेदहं मनुष्य इति प्रख्यापनं प्रमाद एव । एतावता यदा यदा यद्यत्सुखं स्वस्याभीप्सितं भवेत्तस्य प्रापका अविरोधिनश्च लघूपायाः क इति सदसद्विवेकशालिन्या मत्या विनिश्चित्य तदनुसारेण वर्तनादिकं स्वस्मिन् विद्यमानविशिष्टज्ञानशक्तेः फलं बोध्यम् । अत एव सम्यङ्नियमितसुखाद्युपायानां निर्बन्धः पञ्चजनानेव प्राधान्येन विषयी कुरुत इति न मतिपथापेतं कार्यं केनापि ।

अयं सुखोपायनियमानिर्बन्धः सर्वेषां सर्वत्र सर्वकालं च समान एवेह इति केनापि वक्तुमशक्यम् । यतोऽस्मिञ्जगति नैतादृशः कोऽपि पदार्थो यं सर्वेऽपि सर्वकालं सम्यगसम्यग्वा वदेयुः । यं हि पदार्थं केचन स्वीयेष्टसाधक इत्युत्तमं ब्रुवन्ति तमेवान्ये केनापि हेतुनाऽनुत्तमोऽयमिति निन्दन्ति । जीवसार्थः स्वीयसुखदुःखे यस्मात्सिध्यतस्तमेव पदार्थं तस्य गुणादीन्वा सम्यगसम्यग्वेति वेत्ति तथा वदति च । अत एवास्मदुत्कृष्टानुत्कृष्टफलप्राप्त्यनुसारतः पदार्था उत्तमा अनुत्तमा वा भवन्ति । न स्वयं त उत्तमा अनुत्तमा वेति बोध्यम् । स्वीयशरीरमनआदीनां सम्यगसम्यगवस्थानुसारतोऽपि पदार्थं प्रति सम्यगसम्यगिति वदन्ति । एवं देशभेदेन कालभेदेन परिस्थितिपार्थक्येन च मतभेदः संभवति । अत एव सम्यगसम्यक्, पापपुण्ये धर्माधर्मौ, सुखदुःखे, शत्रुमित्रे इत्यादीनि मिथोविरोधीनि द्वंद्वानि जगति सुप्रसिद्धानि सन्ति ।

नितान्तगहनं जीवेश्वरयोर्विमर्शं क्षणं दूरीकृत्य शरीरस्यैवास्य केवलं विचारः कृतश्चेद्यद्यपीदं पाञ्चभौतिकमथापीतराभिः शोणितमांसमेदमज्जास्थिनाडीचर्मकेशलोमकफवातपित्तश्लेष्मपूयशुक्रमूत्रशकृत्कृमिस्वेदाख्याभिस्तेषां विकृतिभिः संव्याप्तमिति तासां न्यूनाधिकभावेन परमाणुपुञ्जानां प्रकारभेदेनावयवसंस्थायाः प्रकारपार्थक्येन च तस्याऽऽकृतौ नैकविधाः प्रकाराः संवृत्ता उपलभ्यन्ते । तथा शक्तावपि भेदः प्रत्यक्षसिद्धः । मानुषाणां देहाकृत्योर्भेदः शारीरं मानसिकं च सामर्थ्यं भिन्नम् । अशनभेदः, तत्तद्देशीयजलवाय्वादीनां भेदः, प्रतिवेशिनां रुचिवैचित्र्यानुसारतो दैनंदिनवर्तनपद्धतेर्भेदः, व्याहारभेदः, आसमन्ताद्विद्यमानवस्तूनां भेदः, तत्तदवस्थागतानेकविधा भेदाश्चेत्येवमादयो भेदाः स्वीयपृथक्पृथक्कर्तव्यस्य भिन्नाभिन्नप्रवृत्तीनां च पोषका भवन्ति । इत्थं चिराय यद्यदभ्यस्यते तत्तदात्मनो धर्मः स्वभावः स्वीयाचारो वेत्युच्यते । एवं चिराभ्यस्तकर्मप्रवृत्तिर्न केनापि सहसा हातुं शक्या । तत्प्रतिकूलाचरणे पराङ्मुखतेत्येव केवलं न, अपि तु तद्विरुद्धवर्तनशीलं दृष्ट्वाऽपि तिरस्कार उत्पद्यते । सर्वोऽपि जन्तुरात्मनः प्रकृत्यनुसारं चेष्टते, न तद्विरुद्धम् । अत एव " स्वभावो दुरतिक्रमः । प्रकृतिं यान्ति भूतानि । सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि "इति विज्ञभाषितं श्रूयते ।

अत्र दृष्टान्त इति तत्तद्भोज्यपदार्थविचारमीषदुपन्यस्यामः । अस्मिन्महाराष्ट्रप्रदेशे युगंधरपिष्टनिर्मितभास्कर्याः शाल्योदनस्य च प्रायशो प्रात्यहिकभोजने प्राधान्यमनुभूयते । कोंकणे तु केवलमोदनस्यैव मुख्यत्वम् । उत्तरभारते गोधूमपिष्टनिर्मितापूपानां प्राधान्यम् । वङ्गदेश ओदनः प्रचुराश्च शाकाः प्रधानस्थाने नियतं स्थिताः । दक्षिणभारत आन्ध्रद्राविडादयस्तण्डुलौदनस्य तिन्तिणीरसस्य ( सार ) च जेमने प्राधान्यमनुभवन्ति । अन्यदेशीयास्तु मांसाहारो मुख्य इति ब्रुवन्ति । परिमिताभ्यवहारे सर्वेषामैकमत्येऽपि तत्परिमाणे पार्थक्यमपरिहार्यम् । एको निरामयः शक्तिमाञ्श्रमसहिष्णुः प्रशस्तकायश्चेत्तस्य यद्भोज्यपदार्थेषु परिमाणं हितावहं तद्रुग्णस्य दुर्बलस्य ह्रस्वकायस्य च मानुषस्य न सुखकरम् । हिमर्तौ यदावश्यकं तद्ग्रीष्मर्तावनावश्यकमेव । शीतोष्णप्रधानदेशियानां जनानामशनस्येतरव्यवहारस्य चैवमेव पार्थक्यं वर्तते । उष्णदेशे भूमावथवा काष्ठफलकादावुपविश्य जेमनं कर्तुं पार्यते । शीतप्रदेशे त भक्ष्यभोज्यवस्तूनां करेण संमिश्रणादिकं विधाय जेमनम् । मुहुर्मुहुः शीतजलेन हस्तपादादिप्रक्षालनादिकं च खेदावहमिति संदंशकङ्कटकच्छुरिकाचमसचषकेत्यादीनां यथासौकर्यं भोजनादौ विनियोगः क्रियते ।

स्नानपानवस्त्रपरिधानादावप्येवमेव वैलक्षण्यं दृग्गोचरं भवति । अतः शरीराणां मूलोपादानं समानमपि देशकालमानावस्थेत्यादिना नानाविधा भेदाः संवृत्ताः केऽपि परस्परं सर्वांशेन नैव समानाः ।

दुःखितानां दुःखमोचनं तु सर्वेष्वपि कर्तव्येषु श्रेष्ठतमं कर्तव्यमित्यत्र न कस्यापि विप्रतिपत्तिः । किंतु दुःखमोचनस्योपायाः सर्वेषां न समानतया मान्याः। दुःखमोचकानां दुःखितानां योग्यतानुसारेण साहाय्यप्रदानस्यापि विचित्राः प्रकाराः संभवन्ति । अवान्तरविषये मतभेदे सत्यपि मूलत उद्दिष्टसत्त्वे सर्वेषामैकमत्यम् । मुख्यविषये सत्यप्यैकमत्ये भिन्नरुचिर्हि लोक इति न्यायेनेतरेषु विषयेषु मतवैचित्र्यं साहजिकमेव । तदेव च विवादस्याऽऽस्पदं जायते ।

एवमपि निरर्थकतर्कवितर्ककरणेन कालस्यापव्ययस्त्वज्ञताया असाधारणं लक्षणं ज्ञेयम् । तत्त्वतो यन्मूलत एव शस्तं तत्सर्वैरपि सम्यगित्युच्यत एव । न तत्र विवादः कस्यापि विवेकिनः । तद्व्यतिरिक्ता एवावान्तरप्रकारास्तत्तज्जातेर्व्यक्तेर्वा सम्यगसम्यग्वा प्रतिभासन्ते । अनुभवोऽप्येवमेव । यतः कतिपये विषयाः केषांचिदिष्टाः केषांचिदनिष्टाश्च सन्ति । पदार्थसामान्यस्य येऽनुकूलसंवेदनीया धर्मास्ते गुणाः । ये च प्रतिकूलवेदनीयाः केनापि कारणेन ते दोषा इत्यभिधीयन्त इति प्रसिद्धं लोके । यत्प्रियं तत्पुण्यम् । यदप्रियं तत्पापमित्यविवादम् । एकस्यैव वस्तुन एक एव धर्मः कदाचिद्गुणः कदाचिच्च दोषोऽपि भवितुमर्हति । तद्वन्मनुष्यकृतमेकमेव कर्म पुण्यं पापं वा भवितुं शक्यमिति विभावनीयम् ।

अग्निना सम्यक्पाकनिष्पत्तौ सत्यां तस्य दाहकत्वं गुणस्तेनैवाकस्माद्गृहादिकं दग्धं चेत्तदेव तस्य दाहकत्वं दोष इत्युच्यते । विषाद्रोगनिवृत्तौ सत्यां तस्य मारकत्वधर्मो गुणः प्राणघातकश्चेद्दोष इति व्यवह्रियते । तद्वदेव मनुष्यकृतकर्मणेष्टावाप्तिः स्याच्चेत्स धर्मः । अनिष्टापत्तिश्चेत्सोऽधर्म इति सिध्यति । अत एव प्रत्यक्षतोऽप्रत्यक्षतो वा यानि कर्माणि प्राणिनामिष्टोत्पादकानीति प्रमाणाद्वितोऽवगम्यन्ते तानि धर्म इति पुण्यमिति वा शब्देन प्रशस्यन्ते । यान्यनिष्टावहानि तान्यधर्म इति पापमिति वा पदेन निन्द्यन्त इति शास्त्रलोकयोः प्रसिद्धम् । एतावता—इष्टसाधकानामपि सम्यङ्मर्यादितानामेव कर्मणां भृशमावश्यकता वर्तते मानवान्प्रति । तानि च कर्माणि देशकालावस्थादिभेदेन भिन्नानि सन्तीति प्रदर्शिताहारादिदृष्टान्तनिरूपणेन व्यक्तं विज्ञायेत विवेकिभिः ।

इत्थं बलवत्प्रमाणनियमितानि तान्येव कर्माणि धर्म इत्यसंदिग्धं प्रसिद्ध-मस्ति चेन्मनुष्यमात्रस्य धर्मोऽत्यन्तमावश्यक इति पृथक्कथनस्य न किमपि प्रयोजनम् । अत एव " धर्ममूलमिदं जगत् । धर्मे सर्वं प्रतिष्ठितम् । धर्मो मूलं मनुष्याणाम् " इत्यादि प्रमाणतमंवचनजातं श्रूयते । यथेष्टाचरणं तु पश्वाचारः । तदङ्गीकारे पुच्छविषाणहीनः पशुरहमिति प्रख्यापनमेव तदिति ज्ञेयम् । किंच— ' नहि ज्ञानेन सदृशं पवित्रमिह विद्यते ' इति ज्ञानस्य परमं पावित्र्यं भगवतैव गीयते । यद्यपि मर्त्यैः कृतान्समस्तदोषान्निःशेषं प्रक्षाल्य तेभ्योऽमर्त्यभावप्रदानि ऐहिकेष्टदायीनि च गङ्गागोदावरीकृष्णावेणीसदृक्षाणि महत्तराणि तीर्थानि भूमण्डले प्राचुर्येण विद्यन्ते । यद्यपि च संदर्शनमात्रेण सकलाघौघविध्वंसिन्यः स्वान्तेष्वीश्वरास्तित्वभावनां समुत्पादयन्त्यः श्रद्धालूनां भक्तानां समस्तमनोरथान्पूरयन्त्यः सतां समस्तापदः प्रध्वंसयन्त्यश्च सलीलं विधृताः सच्चिदानन्दात्मनः परमेश्वरस्य शिवविष्णुमहालक्ष्मीभवानीत्यादिनामभिः सुप्रसिद्धा नानाविधाः सगुणमूर्तयो जगति जागरूकाः सन्ति । तथा स्वीयसरसोपदेशामृतवर्षणेन संगत्या च दुर्वृत्तान्मानुषान् सद्वृत्तान् प्रकुर्वन्तः साधवोऽस्मिन्कलिकालेऽपि स्वीयास्तित्वेन समयविशेषे जगद्विभूषयन्ति । प्राणिमात्राय प्रबोधप्रदातॄणि चण्डमरीचिमालितुल्यानि तेजोमयानि दैवतानि सदा सुप्रकाशन्ते । संतप्तानां संतापं शीततरकिरणैरुन्मूलयन्तः सुधांशुकल्पाः पूज्यपदार्थाः पञ्चजनचक्षूंषि भृशं प्रमोदयन्ति । उदारचरिता धनिनो धनदानेनेह कृतपदं दारिद्र्यं समुच्छेदयितुं प्रयतन्ते । विपश्चिदपश्चिमाः केचन धन्या भुवनेऽस्मिन्वैदुष्यं प्रसारयितुं कमपि स्वाभिप्रेतं प्रयत्नं विदधति । इत्येवमादयः सर्वे प्रकारा दृढतमविज्ञानमूलबन्धोपर्येव विरचिता विराजन्ते । अतस्तस्यास्यातिनिर्मलस्य ज्ञानमणेः साम्यमापादयितुं ते सर्वेऽसमर्था एव । ज्ञानरत्नमिदं पवित्राणामपि पावयितृ वर्तते । जीवानानन्दमयावस्थायां चिराय संस्थापयति चित्तं प्रसादयति । मानुषाणामैहिकीं पारत्रिकीं चाभ्युन्नतिं कुरुते । मनसि चिराय कृतास्पदा दुर्वासनाः प्रध्वंसयति । सकलदोषजातं समुच्छिनत्ति तेजस्विनामपि वस्तूनां तेजस्विता ज्ञानैकनिदाना । ज्ञानं सर्वसुखस्य खनिः कल्पद्रुमवत्सर्वेप्सितपूरकम् । आहारनिद्रादिषु प्रकारेषु पशुतुल्यानां मानुषाणां ज्ञानेनैव वैशिष्ट्यं सिध्यति । नरजन्मन इतिकर्तव्यतायाः संपूर्तिर्ज्ञानेनैव भवित्री । परमेश्वरस्य वेदीप्यमानं प्रत्यक्षं स्वरूपमेव ज्ञानम् । अतोऽस्मिन्वैरिञ्चे प्रपञ्चे सर्वोत्तमं पूततमं

तेजोमयमानन्दमयं स्वगतादिभेदशून्यं किमपि वस्तु स्याच्चेत्तर्हि तज्ज्ञानमेवाधिगन्तव्यम् । अत एव—"ज्ञानी त्वात्मैव मे मतम्" इति मुक्तकण्ठा भगवदुक्तिर्बिभर्ते । तथाऽस्मिंस्त्रैलोक्ये दृष्टान्तस्यासत्त्वाज्ज्ञानदाता सद्गुरुर्निरुपम इति भाष्यकृच्छ्रीशंकरगुरोर्वचनमपि वरीवर्ति ।

ननु महता संरम्भेण यस्य महत्त्वमुपवर्णितं तज्ज्ञानं किं कीदृशं चेत्यवश्यं वाच्यम् । यतस्तत्तद्विषयभेदेन ज्ञानान्यनेकानि सन्ति । इति चेत्तत्रोच्यते । यस्य ज्ञानस्योपदेशः पित्रा हिरण्यकशिपुना पुत्राय प्रह्लादाय कृतः । येन ज्ञानबलेन दैत्याधिपतिर्बलिश्चिराय पाताललोकाधिपः संवृत्तः । यज्ज्ञानं विजयलक्ष्म्याः परशुरामेण सहोद्वहने त्रिगुणसप्तवारं साहाय्यमभूत् । येन ज्ञानेन लङ्काधिपतिर्दशाननस्त्रैलोक्यं मानुषं विहाय सर्वेषामप्यजिङ्क्यो जातः । येन ज्ञानतिग्मरश्मिना धर्मराजस्योपरि दुःसहवनवासप्रसङ्गश्चतुर्दश समाः समानीतः । यो ज्ञानवह्निः कुरुक्षेत्रेऽष्टादशदिनपर्यन्तं प्रखरतरतेजसा सर्वतः प्रज्वलितः सन्भीषणं ताण्डवमकरोत् । येनाऽऽत्मंभरिणा ज्ञानेन प्राकृतिकानि चलनवलनानि प्रतिपदमभिनवाद्भुतवेषधारणतो नटीव दृढमधुराणि भासन्ते । येनाऽऽपातरमणीयेन ज्ञानेनेदानींतनं जगत्परिणतिविरसे भौतिकसुखेऽत्यासक्तं सत्समाकृत्रयारुयप्राणिभूतवत्परस्परात्मघातकर्माणि प्रवृत्तमुपलभ्यते । यज्ज्ञानं सत्संप्रदायागतां धार्मिकीं नैतिकीं सामाजिकीं च मर्यादामुल्लङ्घ्य स्वैराचारे प्रवर्तकम् । यज्ज्ञानं परस्परयोर्मध्ये भृशमशान्तिज्वालावापकम् । येन ज्ञानेन चञ्चलस्य मनसः स्थैर्यं न सिध्यति । यच्च ज्ञानं सर्वथा जघन्यम् । नैव तदशेषमपुरुषसंस्तुतं भगवद्भक्त्यां प्रशंसितं मनुष्यमात्रेणाऽऽप्तव्यं च ज्ञानम् । अपि तु—येन ज्ञानसामर्थ्येन वसिष्ठवामदेवप्रभृतयो महर्षयः स्वयं कृतार्थाः सन्तः सदुपदेशादिना जनतायाः कल्याणप्रदं मार्गं जगति प्रसारयितुं प्रतिपदं प्रयत्नं कृतवन्त इति सर्वेषां पूज्याः प्रियाश्चाभवन् । यया ज्ञानशक्त्या श्रीरामचन्द्रहरिश्चन्द्रनलराजयुधिष्ठिरजनकमुख्या राजानः सुकीर्त्यात्मनाऽजरामराः संवृत्ताः । येन ज्ञानमाहात्म्येन श्रीरामदासज्ञानदेवतुकारामादयः सत्पुरुषाः समस्तस्यापि जगतः संमाननीया अभूवन् । यज्ज्ञानं मनस उदात्तावस्थायाः प्रधानतो निदानम् । येन ज्ञाननिधिना सीतारुन्धतीसावित्र्यनसूयाप्रमुखाः पुरन्ध्र्यः प्रातः स्मरणीयाः संजाताः । यस्य ज्ञानस्य पावित्र्ये सर्वेषां विवेकिनां निर्विवादमैकमत्यं वर्तते । यज्ज्ञानं समस्ताभ्युदयहेतुतया प्राणिमात्रेण वन्द्यं संपादनीयं च विराजते । यस्य ज्ञानरत्नस्य विमर्शे मानवानां स्वभावचञ्चलं मनः संयमेन क्षणमात्रं सुस्थिरं क्लेशेन गानवेन

मनसा जाह्नव्यादितीर्थजलेषु सुस्नातम् । सागराम्बराया: प्रदानं कृतम् । ज्योतिष्टोमादियज्ञसमुदायोऽनुष्ठितः । अशेषाणां दैवतानां समर्चनं विहितम् । संसाराब्धेर्मातापित्रोरुद्धारः कृत इति निश्चयेनाधिगन्तव्यम् । इत्थं यस्य ज्ञानस्य माहात्म्यं प्रत्नैर्महात्मभिः स्वानुभवेन सप्रमाणमुपवर्णितम् । यच्च 'तत्त्वमसि' 'अहं ब्रह्मास्मि 'इत्यादिश्रुतिशिरोगीतम् । यद्धि—

अस्तभेदमनपास्तलक्षणं निस्तरङ्गजलराशिनिश्चलम् ।
नित्यमुक्तमविभक्तमूर्ति यद्ब्रह्म तत्त्वमसि भावयाऽऽत्मनि ॥

(वि० चू० २६१) इति भगवत्पूज्यपादाचार्यैः शिष्यायोपदिष्टं च तदेवाऽऽदावुपवर्णितं श्रेष्ठतमं ज्ञानरत्नं बोध्यम् । कल्याणप्रदस्यास्यैव निर्मलज्ञानमणेः संपादनाय वाक्कायमनोभिः प्रयतनं मनुष्यप्राणिन आद्यं कर्तव्यम् । अत्रैव जीवितसाफल्यम् । करुणोदधिनेश्वरेण मानुषेषु विनिहितविशिष्टबुद्ध्याख्यनिक्षेपस्य तज्ज्ञानप्राप्त्यै विनियोग एव तस्य निक्षेपस्य तस्मै प्रत्यर्पणमवगन्तव्यम् ।

यथा—व्रैहेयशालेयाणव्यमौद्गीनादिषु क्षेत्रेषु तानि तानि बीजानि न्युप्य तेभ्योऽप्युत्कृष्टधान्यसंपादनेच्छा चेदादावभिज्ञकृषीवलतो द्वित्रवारं तानि क्षेत्राणि हलेन सम्यक्कर्षयित्वा बीजावापक्षमाणि कार्याणि । अङ्कुरोत्पत्तिप्रतिबन्धकाः क्षुद्रपाषाणकण्टकादयो बहिर्निःसारणीयाः । अङ्कुरानुत्पत्त्युपकारकं दोहदं गोमयादिकं (खत) निक्षिप्य बीजधारणसमर्थानि तानि विधेयानि । ततो योग्यसमये पर्जन्यवृष्ट्यनन्तरं बीजावापः कृतश्चेदेवाङ्कुरोद्भवानन्तरं त एवाङ्कुरा हरितवर्णसुस्निग्धपर्णप्राज्यैः कुसुमैश्चालंकृताः सन्तः क्रमश उत्कृष्टानि धान्यानि स्वावापकर्त्रे प्रदद्युरन्यथा नेति प्रसिद्धम् । तद्वज्ज्ञानाख्यं बीजमप्यन्तःकरणभूमावाविवप्सितं चेत्सा चित्तभूरप्यादौ प्रमाणपूतमकलङ्ककर्मसमूहात्मकेन हलेन यथाधिकारं कर्षयित्वा निर्मला कर्तव्या । ततो योग्यसमये योग्यविधया तस्यां निष्कल्मषायां चित्तभुव्युप्तं ज्ञानबीजं सम्यगङ्कुरितं भूत्वा क्रमेणात्यन्तमधुरमविनाशि च फलं स्वावापकर्त्रे प्रयच्छेत् । प्रमादादिनाऽविशुद्धायां भूमौ कथंचिदुप्तं चेत्—फलं नैव दद्यादित्येव केवलं नापि तु त्वत्यन्ताशक्तिमति प्रयुक्तं हेमगर्भादिसदृक्षं वीर्यवत्तरं रसायनमिव महदनर्थाय तत्स्यादिति ज्ञेयम् । तस्मान्निरुपमसुखैकनिदानज्ञानप्राप्त्यर्थं तदुपकारकप्रमाणनियमितकर्मवृन्दस्य काममावश्यकता मानवमात्रस्यास्तीति निर्विचिकित्सं सिध्यति ।

जीवनमनुसृत्य विमर्शे संमुपक्रान्ते तदपि तदन्तरा नातीव सुलभम् । ननु प्रत्येकमपि जन्तुरस्मिन्ब्रह्माण्डे स्वीयादृष्टानुसारतः कुत्रचिज्जनिमाप्नोति । ततश्चा-

न्त्योच्छ्वासनिर्मोकं यावज्जीवति च। सत्येवं कीदृशं तत्रासौलभ्यमिति चेदुच्यते। जीवनं नाम न शरीरे कथंचित्प्राणादेर्धारणं कृत्वाऽवस्थितिमात्रं नापि येन केन प्रकारेणोदरंभरणं तत्। यतस्तादृशजीवनाय न तदावश्यकता। दृश्यते हि काकादीनां तादृशं जीवनम्। 'काकोऽपि जीवति चिराय बलिं च भुङ्क्ते' इति। अपि तु मानवजातीयजीवनस्य प्रामाणिकीमत्युदात्तां चेतिकर्तव्यतां शास्त्रतो विनिश्चित्य तदनुसारेण यावज्जीवं वर्तनमेव यथार्थं जीवनम्। नेदानींतनस्वैरसमाजपरिस्थितिसापेक्षं तज्जीवनं जात्वपीत्यवगन्तव्यम्।

किंच—शास्त्रोपदिष्टशतवत्सरपर्यन्तं या जिजीविषा मानवस्य सा माननियतकर्माचरणेनैव विधेया। तेन विना नान्य इह परत्र चेष्टसाधको मार्गः। एवमस्मिञ्जगति क्षणमप्यकर्मकृत्कोऽपि जन्तुर्न विद्यते। असत्यामपीच्छायां निसर्गवशतः किमपि कर्म करोत्येव सर्व इति स्थितं चेत्—ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसीति श्रुतिस्मृतिभ्यामपि जीवनरहस्यं संसूचितम्। तेनापि जन्तूनां तत्रापि विशेषतो मानुषाणां जीवितं धर्ममूलमेवास्तीति सुव्यक्तं सिध्यति।

स्थिते चैवं येन कर्मवृन्देन निखिलायाः सृष्टेः सुस्थितिः सिध्यति तस्य नाम ईशधर्मः। येन च कर्मसमूहेन मानवोऽस्मिञ्जगति सुखेन जीवितं यापयितुं शक्नोति तस्य कर्मणो मानवधर्म इत्यभिधानम्। सर्वेऽपीमे धर्मा मङ्गलप्रदा इति मानुषमात्रेण यथायथं वाङ्मनसकायैरभ्यसनीया अनुष्ठेयाश्च सन्ति। एते एव सामाजिकधर्मा इति वक्तुं शक्याः। नैतिकधर्माणामप्यन्तर्भाव एतेष्वेव ज्ञेयः। अतो देशकालपरिस्थितिं शास्त्राविरुद्धामनुसृत्य कुशलोदर्कास्ते धर्मा योग्यतानुसारेण सर्वैरेवानुष्ठेया इति तानेव साधारणधर्मानग्रे प्रदर्शयिष्यामः। इति धर्मावश्यकताविचारः॥

---

## अथ साधारणधर्मविचारः।

तत्राऽऽदौ साधारणधर्माचरणायापि नियतमपेक्ष्यं त्याज्यं च किं तदुक्तं भारते शान्तिपर्वणि—

नियच्छ परया बुद्ध्या चित्तमुत्पथगामि वै।
मनो हि सर्वभूतानां संतनोति शुभाशुभम्॥
अशुभेभ्यस्तदाक्षिप्य शुभेऽर्थे चावधारय॥
कामं क्रोधं भयं लोभं दम्भं मोहं मदं तथा।
निद्रां मत्सरमालस्यं नास्तिक्यं च परित्यज॥ इति।

( १ ) इदमित्थमेवेति निश्चयात्मकवृत्त्युपेतमन्तःकरणं बुद्धिः । ( २ ) अनुसंधानात्मकवृत्तियुतमन्तःकरणं चित्तम् । ( ३ ) संकल्पविकल्पात्मकवृत्तिविशिष्टं तदेव मनः । ( ४ ) अपञ्चीकृताकाशादिपञ्चभूतसमाष्टिसत्त्वांशोत्थं बुद्धिमनसोरुपादानं सूक्ष्मशरीरान्तर्गतातीन्द्रियवस्तुविशेषोऽन्तःकरणम् । ( ५ ) श्रुत्यादिप्रमाणोपदिष्टा ज्ञानेच्छाकृतितत्संस्कारान्यतरसिद्धाः शुभास्तन्निषिद्धास्तत्सिद्धा अशुभाः । ( ६ ) स्त्रीपुंव्यतिकर इष्टविषयाभिलाषो वा कामः । ( ७ ) कामितार्थविघातजन्यबुद्धिक्षोभः क्रोधो द्वेषो वा । ( ८ ) विषयविशेषदर्शनश्रवणनिबन्धनं मनसोऽनवस्थानं परतोऽनिष्टसंभावनं वा भयम् । ( ९ ) स्वीयवस्त्वपरित्यागपुरःसरं परवस्तुजिघृक्षा लोभः । ( १० ) वेषभाषाक्रियाचातुर्यादिभिः स्वीयमहत्त्वाविष्करणं परविस्रम्भार्थं धर्माद्याचरणं वा दम्भः । ( ११ ) हितेष्वहितबुद्धिरहितेषु हितबुद्धिश्च मोहः । ( १२ ) धनादिराजप्राप्ताधिकारादिप्रयुक्ता स्वस्मिन्नाधिक्यविशेषबुद्धिर्मदः । ( १३ ) इन्द्रियमनआदीनां स्वोपादाने विलीनावस्था निद्रा । ( १४ ) परोत्कर्षासहनपूर्वकस्वोत्कर्षेच्छा परोत्कर्षासहनं वा मत्सरः । ( १५ ) प्रयत्नेन कर्तव्ये कार्ये श्रद्धादिराहित्येनोत्साहस्याभाव आलस्यम् ( १६ ) परलोकाद्यभावकथनं वेदादिनिन्दनं वा नास्तिक्यम् । एते—कामादिनास्तिक्यान्ताः सर्वेऽप्यहितप्रदत्वात्त्याज्याः श्रेयइच्छुभिर्नानुसेव्या इत्यर्थः । अथोपादेयाः साधारणधर्माः—

अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ।  
दानं दमो दया क्षान्तिः सर्वेषां धर्मसाधनम् ॥ (या० स्मृ०) ।  
दया क्षमाऽनसूया च शौचानायासमङ्गलम् ।  
अकार्पण्यास्पृहत्वं च सर्वसाधारणो विधिः ॥ (बृ० स्मृ०) ।  
क्षमा सत्यं दमः शौचं दानमिन्द्रियनिग्रहः ।  
अहिंसा गुरुशुश्रूषा तीर्थानुसरणं दया ॥  
आत्मव्रतमलोभित्वं देवतानां च पूजनम् ।  
अनभ्यसूया च तथा धर्मः सामान्य उच्यते ॥ (वि० स्मृ०) ।  
सत्यं च धर्मं च पराक्रमं च भूतानुकम्पां प्रियवादितां च ।  
द्विजातिदेवातिथिपूजनं च पन्थानमाहुस्त्रिदिवस्य सन्तः ॥ (वा०रा०) ।  
धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।  
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ॥  
अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ।  
एतं सामासिकं धर्मं चातुर्वर्ण्येऽब्रवीन्मनुः ॥ ( म० स्मृ० ) ।

( १ ) वाङ्मनःकायैः सर्वप्राणिनामनभिद्रोहोऽहिंसा । ( २ ) अनर्थाननुबन्धियथाभूतार्थवचनादिकं सत्यम् । ( ३ ) अदत्तादानरूपपरस्वहरणराहित्यमस्तेयम् । ( ४ ) शरीरमनआदीनां शुद्धिः शौचम् । ( ५ ) ज्ञानकर्मेन्द्रियाणां शास्त्रनियतविषयवृत्तित्वमिन्द्रियनिग्रहः । ( ६ ) स्वस्वत्वत्यागपूर्वकपरस्वत्वापादनं दानम् । ( ७ ) अन्तःकरणादिसंयमो दमः । ( ८ ) आपन्नसंरक्षणं दुःखितं प्रत्यनुजिघृक्षा वा दया । ( ९ ) अपकारेऽपि चित्तस्याविकृतिः क्षान्तिः । ( १० ) शब्देतरोद्भूतविशेषगुणानाश्रयं सज्ज्ञानकारणमनःसंयोगाश्रयमिन्द्रियम् । ( ११ ) परगुणे दोषारोपराहित्यं दोषाविष्करणाभावो वाऽनसूया । ( १२ ) प्रमाणसिद्धोऽभीष्टार्थसाधकः श्रमविशेषं विनाऽऽचारोऽनायासमङ्गलम् । ( १३ ) उचितव्ययाकरणेन धर्मादिरक्षिणेच्छाशून्यमकार्पण्यम् । ( १४ ) विषयेष्वनियतेच्छाराहित्यमस्पृहत्वम् । ( १५ ) महागुरूणां विद्यागुरूणां चाऽऽज्ञापालनं गुरुशुश्रूषा । (१६) भागीरथ्यादितीर्थसेवनं तीर्थानुसरणम् । (१७) आत्मोन्नतिकारकं नियमिताचरणमात्मव्रतम् । ( १८ ) विनिमयमन्तरेण परवस्तुजिघृक्षाराहित्यमलोभित्वम् । ( १९ ) शिवविष्ण्वादिप्रतिमानां यथाधिकारं यथासंभवं चार्चनमातिथिसत्कारः प्रियवादित्वं भूतदया द्विजोत्तमसंमाननं योग्यसमये पराक्रमाविष्करणमित्यादिकः सदाचार ऐहिकामुष्मिकेष्टप्रद इति सर्वैः परिपालनीयः । तदुक्तं भर्तृहरिणा—

प्राणाघातान्निवृत्तिः परधनहरणे संयमः सत्यवाक्यं
काले शक्त्या प्रदानं युवतिजनकथामूकभावः परेषाम् ।
तृष्णास्रोतोविभङ्गो गुरुषु च विनयः सर्वभूतानुकम्पा
सामान्यः सर्वशास्त्रेष्वनुपहतविधिः श्रेयसामेष पन्थाः ( नी० श० ५४ ) इति । महा भारते शान्तिपर्वणि यथा—

अद्रोहः सत्यवचनं संविभागो दया दमः ।
प्रजनः स्वेषु दारेषु मार्दवं ह्रीरचापलम् ॥
अक्रोधः सत्यवचनमदत्ताग्रहणं धृतिः ।
आर्जवं भृत्यभरणमित्येतत्सार्ववर्णिकम् ॥

धर्मान् साधारणांस्तात विस्तरेण शृणुष्व मे ।
आनृशंस्यमहिंसा चाप्रमादः संविभागिता ॥

श्राद्धकर्माऽऽतिथेयं च सत्यमक्रोध एव च ।
स्वेषु दारेषु संतोषः शौचं नित्यानसूयता ॥
आत्मज्ञानं तितिक्षा च धर्माः साधारणा नृप ॥ इति ।

अथ सत्यादीनां निर्वचनानि–

सत्यं भूतहितं प्रोक्तं मनसो दमनं दमः ।
तपः स्वधर्मवर्तित्वं शौचं संकरवर्जनम् ॥
संतोषो विषयत्यागो ह्रीरकार्यनिवर्तनम् ।
क्षमा द्वंद्वसहिष्णुत्वं मार्दवं समचित्तता ॥
ज्ञानं तत्त्वार्थसंबोधः शमश्चित्तप्रशान्तता ।
दया भूतहितैषित्वमेष धर्मः सनातनः ॥
परेषां बन्धुवर्गे वा मित्रे द्वेष्टरि सर्वदा ।
आपन्ने रक्षितव्यं तु दयैषा परिकीर्तिता ॥
बाह्ये चाऽऽध्यात्मिके चैव दुःखे चोत्पादिते क्वचित् ।
न कुप्यति न वा हन्ति सा क्षमा परिकीर्तिता ॥
न गुणान् गुणिनो हन्ति स्तौति मन्दगुणानपि ।
नान्यदोषेषु रमते साऽनसूया प्रकीर्तिता ।
अभक्ष्यपरिहारश्च संसर्गश्चाप्यनिन्दितैः ।
स्वधर्मे च व्यवस्थानं शौचमेतत्प्रकीर्तितम् ॥
शरीरं पीड्यते येन सुशुभेनापि कर्मणा ।
अत्यन्तं तन्न कर्तव्यमनायासः स उच्यते ॥
प्रशस्ताचरणं नित्यं नाप्रशस्तप्रवर्तनम् ।
एतद्धि मङ्गलं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः ॥
स्तोकादपि प्रदातव्यमदीनेनान्तरात्मना ।
अहन्यहनि यत्किंचिदकार्पण्यं तदुच्यते ॥
यथोत्पन्नेन संतोषः कर्तव्यो ह्यन्नवस्तुना ।
परस्याचिन्तयित्वाऽर्थं साऽस्पृहा परिकीर्तिता ॥ इति ।

अथ यमनियमभेदेन द्विविधाः साधारणधर्मा यथा–

अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः ।
शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः ॥ (पा० सू० ३०।३२)

यमान्सेवेत सततं न नित्यं नियमान्बुधः ।
यमान्पतत्यकुर्वाणो नियमान्केवलान्भजन् ॥ ( मनुः ) ।

अथ सर्वसाधारणं कर्तव्यं यथा भारतेऽनुशासनपर्वणि—

दिवसेनैव तत्कुर्याद्येन रात्रौ सुखं स्वपेत् ।
अष्टमासेन तत्कुर्याद्येन वर्षाः सुखं वसेत ॥
पूर्वे वयसि तत्कुर्याद्येन वृद्धः सुखं वसेत् ।
यावज्जीवेन तत्कुर्याद्येनामुत्र सुखं वसेत् ॥
अकुहः श्रद्दधानः सन्कार्याकार्यविचक्षणः ।
कर्मभूमिमिमां प्राप्य कर्तव्यं कर्म यच्छुभम् ॥ इति ।

अथ साधारणाचारधर्मास्तत्राऽऽचारप्रशंसनम्—

आचारः परमो धर्मः सर्वेषामिति निश्चयः ।
हीनाचारः परीतात्मा प्रेत्य चेह विनश्यति ॥
श्रुतिस्मृत्युदितं सम्यङ्निबद्धं स्वेषु कर्मसु ।
धर्ममूलं निषेवेत सदाचारमतन्द्रितः ।
दुराचारो हि पुरुषो लोके भवति निन्दितः ।
दुःखभागी च सततं व्याधितोऽल्पायुरेव च ॥ ( म॰ स्मृ॰ )

भारतेऽनुशासनपर्वणि—

अत्र तेऽहं प्रवक्ष्यामि यन्मां त्वमनुपृच्छसि ।
आचाराल्लभते ह्यायुराचाराल्लभते श्रियम् ॥
आचाराल्लभते कीर्तिं पुरुषः प्रेत्य चेह च ।
दुराचारो हि पुरुषो नेहाऽऽयुर्विन्दते महत् ॥
तस्मात्कुर्यादिहाऽऽचारं यदीच्छेद्भूतिमात्मनः ।
आचारलक्षणो धर्मः सन्तश्चारित्रलक्षणाः ॥
साधूनां च यथावृत्तमेतदाचारलक्षणम् ।
ब्राह्मे मुहूर्ते बुध्येत धर्मार्थौ चानुचिन्तयेत् ॥
उत्थायाऽऽचम्य तिष्ठेत पूर्वां संध्यां कृताञ्जलिः ।
प्रसाधनं च केशानामञ्जनं दन्तधावनम् ॥
पूर्वाह्ण एव कार्याणि देवतानां च पूजनम् ।
[illegible] नैको न [illegible] ॥

उपानहं च वस्त्रं च धृतमन्यैर्न धारयेत् ।
पन्था देयो ब्राह्मणाय गोभ्यो राजभ्य एव च ॥

वृद्धाय भारतप्ताय गर्भिण्यै दुर्बलाय च ।
ब्रह्मचारी च नित्यं स्यात्पादं पादेन नाऽऽक्रमेत् ॥

आक्रोशं परिवादं च पैशुन्यं च विवर्जयेत् ।
परदारा न गन्तव्याः सर्ववर्णेषु कर्हिचित ॥

न हीदृशमनायुष्यं लोके किंचन विद्यते ।
हीनाङ्गानतिरिक्ताङ्गान् विद्याहीनान् विगर्हितान् ॥

रूपद्रविणहीनांश्च सत्त्वहीनांश्च नाऽऽक्षिपेत् ।
नास्तिक्यं वेदनिन्दां च देवतानां च कुत्सनम् ॥

द्वेषस्तम्भाभिमानं च तैक्ष्ण्यं च परिवर्जयेत् ।
कृत्वा मूत्रपुरीषे तु रथ्यामाक्रम्य वा पुनः ॥

पादप्रक्षालनं कुर्याद्विद्याभ्यासे च भोजने ।
मातापितरमुत्थाय पूर्वमेवाभिवादयेत ।
आचार्यमथवाऽप्यन्यं तेनाऽऽयुर्विन्दते महत ॥

उदक्शिरा न स्वपेत तथा प्रत्यक्शिरा न च ।
प्राक्शिरास्तु शयेद्विद्वानथवा दक्षिणाशिराः ॥
न चैवाऽऽर्द्राणि वासांसि नित्यं सेवेत मानवः ।
उदक्यया च संभाषां न कुर्वीत कदाचन ॥
नोत्सृजेत पुरीषं च क्षेत्रे ग्रामस्य चान्तिके ।
उभे मूत्रपुरीषे तु नाप्सु कुर्यात्कदाचन ॥
नाधितिष्ठेत्तुषं जातु केशभस्मकपालिकाः ।
अन्यस्य चोदकं स्नातं दूरतः परिवर्जयेत् ॥
निषण्णश्चापि खादेत न तु गच्छन् कदाचन ।
मूत्रं नोत्तिष्ठता कार्यं न भस्मनि न गोव्रजे ॥
आर्द्रपादस्तु भुञ्जीत नार्द्रपादस्तु संविशेत् ।
आर्द्रपादस्तु भुञ्जानो वर्षाणां जीवते शतम् ॥
ऊर्ध्वं प्राणास्तु क्रामन्ति यूनः स्थविर आगते ।
प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते ।
न चाऽऽक्रीताऽऽसने भिन्ने भिन्नं कांस्यं च वर्जयेत् ॥

नैकवस्त्रेण भोक्तव्यं न नग्नः स्नातुमर्हति ॥
स्वप्तव्यं नैव नग्नेन न चोच्छिष्टोऽपि संविशेत् ।
उच्छिष्टो न स्पृशेच्छीर्षं सर्वे प्राणास्तदाश्रयाः ॥
केशग्रहं प्रहारांश्च शिरस्येतानि वर्जयेत् ।
न संहताभ्यां पाणिभ्यां कण्डूयेताऽऽत्मनः शिरः ॥
न चाभीक्ष्णं शिरः स्नायात्तथाऽस्याऽऽयुर्न रिष्यते ।
नाध्यापयेत्तथोच्छिष्टो नाधीयीत कदाचन ॥
प्रत्यादित्यं प्रत्यनलं प्रतिगां च प्रतिद्विजान् ।
ये मेहन्ति च पन्थानं ते भवन्ति गतायुषः ॥
प्रदक्षिणं च कुर्वीत परिज्ञातान्वनस्पतीन् ।
चतुष्पथान्मङ्गलांश्च मान्यान्वृद्धान्द्विजानपि ॥
मध्यंदिने निशाकाले अर्धरात्रे च सर्वदा ।
चतुष्पथं न सेवेत उभे संध्ये तथैव च ॥
उदङ्मुखश्च सततं शौचं कुर्यादतन्द्रितः ।
अवलोक्यो न चाऽऽदर्शो मलिनो बुद्धिमत्तरैः ।
न चाज्ञातां स्त्रियं गच्छेद्गर्भिणीं वा कदाचन ॥
दारसंग्रहणात्पूर्वं नाऽऽचरेन्मैथुनं बुधः ।
नोदीक्षेत्परदारांश्च रहस्येकासनो भवेत् ॥
इन्द्रियाणि सदा यच्छेत्स्वप्ने शुद्धमना भवेत् ।
न चापि गच्छेत्कार्येण समयाद्वाऽपि नास्तिकैः ॥
प्राङ्मुखो नित्यमश्नीयाद्वाग्यतोऽन्नमकुत्सयन् ।
त्रीणि तेजांसि नोच्छिष्ट आलभेत कदाचन ॥
अग्निं गां ब्राह्मणं चैव तथा ह्यायुर्न रिष्यति ।
त्रीणि ज्योतींषि नोच्छिष्ट उदीक्षेत कदाचन ॥
सूर्याचन्द्रमसौ चैव नक्षत्राणि च सर्वशः ।
त्रीन्कृशान्नावजानीयाद्दीर्घमायुर्जिजीविषुः ॥
ब्राह्मणं क्षत्रियं सर्पं सर्वे ह्याशीविषास्त्रयः ।
दहत्याशीविषः क्रुद्धो यावत्पश्यति चक्षुषा ॥
क्षत्रियोऽपि दहेत्क्रुद्धो यावत्स्पृशति तेजसा ।
ब्राह्मणस्तु कुलं हन्याद्ध्यानेनावेक्षितेन च ॥

तस्मादेतत्त्रयं विद्वानुपसेवेत पण्डितः ।
रक्तमाल्यं न धार्यं स्याच्छुक्लं धार्यमृतेऽब्जकम् ॥
विपर्ययं न कुर्वीत वाससो मतिमान्नरः ।
तथा नान्यधृतं धार्यं न चातिविकृतं तथा ॥
अन्यदेव भवेद्वासः शयनीये नरोत्तम ।
अन्यद्रथ्यासु देवानामर्चने त्वन्यदेव हि ॥
समानमेकपात्रे तु भुञ्जेन्नान्नं जनेश्वर ।
नावलीढमवज्ञातमाघ्रातं भक्षयेदपि ॥
न पाणौ लवणं विद्वान्प्राश्नीयान्न च रात्रिषु ।
दधिसक्तून्न दोषायां पिबेन्मधु च नित्यशः ॥
सायं प्रातश्च भुञ्जीत नान्तराले समाहितः ।
पर्वकालेषु सर्वेषु ब्रह्मचारी सदा भवेत् ॥
तोयपूर्वं प्रदायान्नमतिथिभ्यो विशांपते ।
पश्चाद्भुञ्जीत मेधावी न चाप्यन्यमना नरः ॥
विषं हालाहलं भुङ्क्ते योऽप्रदाय सुहृज्जने ।
भुञ्जानो मनुजव्याघ्र नैव शङ्कां समाचरेत् ।
परापवादं न ब्रूयादप्रियं च कदाचन ॥
न मन्युः कश्चिदुत्पाद्यः पुरुषेण भवार्थिना ।
पतितैस्तु कथां नेच्छेद्दर्शनं च विवर्जयेत् ॥
संसर्गं नैव कुर्याच्च तथाऽऽयुर्विन्दते महत् ।
न दिवा मैथुनं गच्छेन्नान्यां चैव न बन्धकीम् ॥
न चास्नातां स्त्रियं गच्छेत्तथाऽऽयुर्विन्दते महत् ।
वृद्धो ज्ञातिस्तथा मित्रमनाथा च स्वसा गुरुः ॥
कुलीनः पण्डित इति रक्ष्या निःस्वाः स्वशक्तितः ।
गृहे पारावता धार्याः शुकाश्च सहशारिकाः ॥
देवताप्रतिमाऽऽदर्शश्चन्दनाः पुष्पवल्लिकाः ।
शुद्धं जलं सुवर्णं च रजतं गृहमङ्गलम् ॥
अमङ्गलः सतां शापस्तथाऽऽक्रोशो महात्मनाम् ।
महात्मनोऽतिगुह्यानि न वक्तव्यानि कर्हिचित् ॥

अगम्याश्च न गच्छेत राज्ञः पत्नीं सखीस्तथा ।
वैद्यानां बालवृद्धानां भृत्यानां च युधिष्ठिर ॥
बन्धूनां ब्राह्मणानां च तथा शारणिकस्य च ।
संबन्धिनां च राजेन्द्र तथाऽऽयुर्विन्दते महत् ॥
संध्यायां न स्वपेद्राजन् विद्यां न च समाचरेत् ।
न भुञ्जीत च मेधावी तथाऽऽयुर्विन्दते महत् ॥
महाकुले प्रसूतां च प्रशस्तां लक्षणैस्तथा ।
वयोवरां सुनक्षत्रां कन्यां वोढुं नरोऽर्हति ॥
अपत्यमुत्पाद्य ततः प्रतिष्ठाप्य कुलं तथा
पुत्राः प्रदेया जातेषु कुलधर्मेषु भारत ॥
कन्यां चोत्पाद्य दातव्या कुलपुत्राय धीमते ।
पुत्रा निवेश्याश्च कुले भृत्या लभ्याश्च भारत ॥
शिरःस्नातोऽथ कुर्वीत दैवं पित्र्यमथापि च ।
प्राङ्मुखः श्मश्रुकर्माणि कारयेत्सुसमाहितः ॥
उदङ्मुखो वा राजेन्द्र तथाऽऽयुर्विन्दते महत् ।
सामुद्रेणाम्भसा स्नानं क्षौरं श्राद्धेषु भोजनम् ॥
अन्तर्वत्नीपतिः कुर्वन्न पुत्रफलमश्नुते ॥
सतां गुरूणां वृद्धानां कुलस्त्रीणां विशेषतः ।
परीवादं न च ब्रूयात्परेषामात्मनस्तथा ॥
वर्जयेद्व्यङ्गिनीं नारीं तथा कन्यां नरोत्तम ।
समार्षां व्यङ्गिकां चैव मातुः सकुलजां तथा ॥
वृद्धां प्रव्रजितां चैव तथैव च पतिव्रताम् ।
तथा निकृष्टवर्णां च वर्णोत्कृष्टां च वर्जयेत् ॥
अयोनिं च वियोनिं च न गच्छेत विचक्षणः ।
पिङ्गलां कुष्ठिनीं नारीं न त्वमुद्वोढुमर्हसि ॥
अपस्मारिकुले जातां क्षयिणीं मनुजेश्वर ।
लक्षणैरन्विता या च प्रशस्ता या च लक्षणैः ॥
मनोज्ञां दर्शनीयां च तां भवान्वोढुमर्हति ।
महाकुले निवेष्टव्यं सदृशे वा युधिष्ठिर ॥

अवरा पतिता चैव न ग्राह्या भूतिमिच्छता ।
न चेर्ष्या स्त्रीषु कर्तव्या रक्ष्या दाराश्च सर्वशः ॥
अनायुष्या भवेदीर्ष्या तस्मादीर्ष्यां विवर्जयेत् ।
अनायुष्यं दिवा स्वप्नं तथाऽभ्युदितशायिता ॥
प्रातर्निशायां च तथा ये चोच्छिष्टा भवन्ति च ।
ब्राह्मणान्पूजयेच्चापि तथा स्नात्वा नराधिप ॥
देवांश्च प्रणमेत्स्नातो गुरूंश्चाप्यभिवादयेत् ।
पुराणमितिहासांश्च तथाऽऽख्यानानि यानि च ॥
महात्मनां च चरितं श्रोतव्यं नित्यमेव च ।
मान्यानां माननं कुर्यान्निन्द्यानां निन्दनं तथा ॥
ज्ञातसंबन्धिमित्राणि पूजनीयानि सर्वशः ।
एष ते लक्षणोद्देश आयुष्याणां प्रकीर्तितः ॥
शेषस्त्रैविद्यवृद्धेभ्यः प्रत्याहार्यो युधिष्ठिर ।
आचारो भूतिजनन आचारः कीर्तिवर्धनः ॥
आचाराद्वर्धते चाऽऽयुराचारो हन्त्यलक्षणम् ।
आगमानां हि सर्वेषामाचारः श्रेष्ठ उच्यते ॥
आचारप्रभवो धर्मो धर्मादायुर्विवर्धते ।
एतद्यशस्यमायुष्यं स्वर्ग्यं स्वस्त्ययनं महत् ॥
अनुकम्प्य समस्तान्वै ब्रह्मणा समुदाहृतम् ।
य इदं शृणुयान्नित्यं यश्चापि परिकीर्तयेत् ॥
स शुभान्प्राप्नुयाल्लोकान्सदाचारपरो नृप ।

इति साधारणाचारधर्मविचारः ॥

इति धर्मविमर्शः संपूर्णः ।

---

## ( अथ वैदिकधर्मीयार्थविभागविमर्शः ) ।

यथा वायुं समाश्रित्य वर्तन्ते सर्वजन्तवः ।
तथा गृहस्थमाश्रित्य वर्तन्ते विश्वजन्मिनः ॥

ऋषयः पितरो देवा भूतान्यतिथयस्तथा ।
आशासते कुटुम्बिभ्यस्तेभ्यः कार्यं विजानता ॥

अथास्मिञ्जगति कस्यापि चरमचरं वा रिक्थं दृष्टादृष्टकारणमन्तरा ( विना मूल्यं ) केनापि नैव लभ्यते । प्रत्तानुरूपमादानं, कृतानुगामि भोक्तृत्वमिति निसर्गनियमः । ' उत्पत्त्यैवार्थं लभ्येत ' इति धर्मशास्त्रवचनात् । जनितः प्राप्तं रिक्थं विना यत्नं लब्धमित्यापाततः प्रतिभातमपि सनातनार्यशास्त्रं न तथा ब्रूते । जन्मनाऽन्येन केनचिद्धेतुना वा भवतु, इतरेणेतरस्य रिक्थं लब्धं चेत्तेन साकमत्यन्तमनिष्टोत्पादकान्यकरणं सति कर्तव्यान्यप्यागच्छन्ति । अथवा स्वेनार्जितस्य सुकृतस्य क्षयो विधातव्य आपपति । विना विनिमयं ग्रहीतारो दातुः पापमादाय नैजं स्याच्चेत्पुण्यं ददति । अन्यथा गृहीतेन तेन दुष्कृतेनाधः पतन्ति । एतादृशा कापुरुषास्तेजस्वित्वाद्युदात्तगुणेभ्यश्च्युता भूत्वा पशुवद्दात्रधीना भवन्तीति सुप्रसिद्धम् । पित्रादिपरम्परया प्राप्यमाणया संपदा सह यथा तत्कृतर्णप्रतिशोधनस्य भारः स्वस्मिन्नागच्छति तद्वत्तानुद्दिश्य धार्मिकमपि सर्वेगमागत्य ।शिरसि दृढं संतिष्ठत । जनिसमकालमेव शिरसि प्रदत्तपदनिक्षेपस्य देवर्षिपितृऋणस्य प्रतिशोधनमवश्यमग्रे जातेन मानुषेण विधातव्यम् । भारतीयार्यसंस्कृत्यन्तर्गतेयमृणत्रयभावना भृशमुदात्ता गभीरार्थवती च वर्तते । यथाधिकारं यथासामर्थ्यं च यावज्जीवं विहितानि धार्मिकाणि पैतृकाणि च कर्माण्यननुष्ठाता मर्त्यो महानपराधी जायते । तस्करभावं गच्छति । सूर्याग्नीन्द्रादिभ्यो देवताभ्यस्तदीयहविर्भागो न दत्तश्चेत्, पित्रादीनुद्दिश्य श्राद्धतर्पणादिकं यथाकालमननुष्ठितं चेत्, शास्त्रतः प्राप्तानि नित्यनैमित्तिकानि धर्मकर्माणि प्रमत्ततया त्यक्तानि चेत्, स्वोपजीव्यानां जीवानां योगक्षेमावुपेक्षितौ चेत् , समुपस्थितेभ्योऽतिथ्यादिभ्यः स्वल्पमप्यन्नादिकमदत्तं चेत् , स आत्मंभरिर्मानुषः शवान्नातिरिच्यत इति शास्त्रं प्रतिपादयति । "केवलाघो भवति केवलादी । सत्यं ब्रवीमि वध इत्स तस्य । नार्यमणं पुष्यति नो सखायम् " ' तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ' इति । आत्मनः कृते पाकः कृतोऽपि न स केवलमात्मीय एवेत्यधिगन्तव्यं केनापि । यतो इदं पाञ्चभौतिकं शरीरं शिवविष्णुप्रजापतिसूर्यचन्द्रेन्द्रयमवरुणकुबेरेशानाग्निनिर्ऋतिवायुगणनाथप्रमुखाभिर्देवताभिरधिष्ठितम् । मातापितृभ्यामागतम् । विशिष्टे कुले जातौ चोत्पन्नम् । अतस्तदुत्पत्तिसमकालमेव दृश्यादृश्यजीवेषु स्तोकं प्रचुरं वा स्वस्वेष्टं प्रतीक्षमाणेषु तदनुलक्ष्य नियतमीहाः समुत्पद्यन्ते । तासां परिपूर्तिस्तेन यथासामर्थ्यं क्रमशः करणीयेत्यगतिकम् । विशिष्टकुले स्वीया जनिर्जातेति तस्मात्कुलात्प्राप्यमाणा काऽपि संपत्सर्वथाऽऽत्मीया यथेष्टविनियोगार्हा चेति भ्रान्ता मतिर्जात्वपि न

विधेया केनापि मानुषेण । किं बहुना, स्वेनार्जितस्यापि चराचरविश्वस्य स्वैरं व्ययोऽनर्थावहः । ततः पित्रादिपरम्परया लब्धस्य तस्य तथा विनियोगो लोकशास्त्रनिन्द्यो हान्युत्पादक इति किं पृथग्वक्तव्यम् । यतः—

' ये जाता येऽप्यजाताश्च ये च गर्भे व्यवस्थिताः ।
वृत्तिं च तेऽभिकाङ्क्षन्ति न दानं न च विक्रयः ॥

अतिगभीरार्थभरितेयमार्यधर्मीयाऽर्थविनियोगदृष्टिरन्यत्र कुत्रापि प्रायशो द्रष्टुमशक्या । परिच्छिन्नात्ममतिकत्वात् । यस्यां हि संस्कृतावदृष्टवशतः स्वोत्पत्तिः संजाता तस्या अपि संस्कृतेर्ऋणं स्वेनावश्यं प्रतिशोध्यं भवति । अन्यथा दृष्टादृष्टप्रत्यवायापत्तिर्दुर्वारा । आप्तजनोपदिष्टाः शाश्वतिकाः सदाचारा न परिपालिताश्चेद्भवन्ति तर्हि ऋष्यादीनामृणान्नैव मुक्तिः सिध्यति । यत्किमपि प्रशस्यं वस्तु प्राप्यते तदप्येकं पर्यवसानमेव । तस्य प्रतिशोधः सम्यग्विनियोगेन सिध्यति । तमकुर्वाणो मानुषो दण्ड्यो भवतीति प्रसिद्धम् । अधुनातनानां भारतीयानां पुंसां धर्म्यनैतिकाचारस्य परिचयः प्रायशो नास्तीति प्रतिभाति । अथवा स्यादपि, केनाप्यशुभोदर्केण मदेन ग्रस्ता इत्यपि वक्तुं पार्यते । यतो विपर्यस्ताचाराः सर्वत्रैवोपलभ्यन्ते । तथा हि—संपन्निरीक्षणकर्तॄणामाधुनिकानां दृष्टिरन्यादृश्येव दृश्यते । यथेच्छं स्वैरविहारेषु तस्या उपयोगं विधातुमस्खलितं प्रवृत्तेदानींतनी जनता । असुखोदर्काया नैकविधगर्ह्यविषयोपभोगस्पृहायाः स्वभावतो निरवधिकायाः परिपूर्त्यै परःसहस्रमकार्यं विधायार्थार्जनेच्छा तदनुसारा च कुपथप्रवृत्तिर्बाहुल्येनोपलभ्यते सर्वत्र । वर्णाश्रमधर्मविषयिण्याः श्रद्धाया ह्रासेन साकं निर्दिष्टा शास्त्रीयर्णत्रयभावनाऽपि लुप्तप्राया संवृत्ता । तेन निष्प्रतिबन्धं धर्मेतरस्य स्वैरं ताण्डवं सर्वत्र प्रसृतम् ।

भृशं वर्धिष्णुना तामससुखास्वादेनोच्छास्त्रविषयोपभोगमन्तरा नान्यः कोऽपि संपद उपयोग इति मतिः समाजे प्रतिपदं तरुणायते । यस्याः संपदः सच्छीलानां विदुषां धर्मश्रद्धालूनां सदाचारसंपन्नानां जनानां योगक्षेमार्थं यथाधिकारं विनियोगो भाव्यः । यया पित्रादीनामाशीः संपाद्या । देवतानां परितुष्टिर्विधेया । प्राणिवर्गाश्च यथायथं संतर्प्याः । ततोऽवशिष्टाया एव संपदो यथाविध्युपभोगो ग्रहीतव्य इत्येवं शास्त्रमुपदिशति । तदेवोक्तयज्ञाशिष्टममृतमिति चोपदिश्यते । तथैव स्वीयादृष्टानुसारमीशानुगृहीतयोपवर्णितयज्ञकर्म नास्तिक्येनोपेक्ष्य केवलं स्वोदरगर्तपूर्तिं विदधति ते भृशं पाटच्चरा एव । कालरूपी भगवान्हतदैवानां तेषां स्तेनानां देवपित्रा-

द्भिः शापितां तां संपदमचिराद्विनाशयेदेवेति न संदेहः । क्रुद्धस्य तस्य भगवतः कालस्य संपद्विनाशकाः पन्थानः केनाधिगन्तुं शक्याः । स्वयमेव स्वीयबुद्धौ मूढतया दोषं निर्माय संपदं विघातयेयुस्ते । राजकीयापत्त्याऽपि सा विनष्टा स्यात् । सांघिकोत्पातेन प्रजापालोद्भावितप्रजापीडकनियमैर्वा नामशेषतां गच्छेत्सा संपत् । विपर्यस्ता मतिरेव विकरालस्य कालस्य शक्तिः । उक्तं हि भारते—' कालस्य बलमेतावद्विपरीतार्थदर्शनम् ' इति । स्वस्वधर्मानुसारं वर्तनेन तु सुप्रसन्नभगवत्कृपया-बुद्धेर्नैर्मल्यं जायते । विमलायां तस्यामत्यच्छादर्श इव भव्याः संस्काराः प्रतिफलन्ति । तदनुसारकायिकादियत्नेन च स्वस्य परस्य च कुशलं प्रसिध्यति । एतादृशं बुद्धिवैभवं भगवदनुग्रहेणैव लभ्यम् । नैतादृशमर्थविभागरहस्यं वर्णाश्रमधर्मप्रतिपादकशास्त्रं विहायान्यत्र कुत्रापि दृष्टचरम् । तदिह परत्र च मङ्गलदायि शास्त्रं मृत्योर्नातिरिच्यता प्रमादेन निर्भर्त्स्य कुसंस्कृत्युद्भूतमदेन मत्ताः सन्तो दैवं पैतृकं च विहितं कर्म ये नानुतिष्ठन्ति कुलधर्मं कुलाचारं च न परिपालयन्ति दीनानां प्राणिनां यावच्छक्यं पोषणादिकं न विदधति संपदाढ्या अपि ते तां संपदं निराबाधमुपभोक्तुं न प्रभवन्ति । यतो येषां जीवानां वासनास्तस्यां संपदि योग्यविधया दृढं लग्नास्तेषां तत्तदंशस्याप्राप्त्या ते जीवा अतृप्तास्तिष्ठन्ति । केवलमहोरात्रं भृशं संतप्ताः सन्तस्तेषां संपदाढ्यानां शिवेतरच्चिन्तयन्ति । अतृप्तानां जीवानामयं संतापोऽव्यक्तस्वरूपेण क्रमशः स्वीयं कार्यं करोत्येव । यां हि संपदमनुलक्ष्यैतादृशः संतापः प्रत्यहं प्रसरति सा संपत्कस्याप्यधीना भवतु भृशं तं रोदयेदेव । स नरः स्वलंकृतात्युच्चमतंगजारूढः सन्प्रत्यहं राजवीथ्यां सपरिवारः संचरणशील आस्तामथवा प्रशस्ततममहार्हपर्यङ्कोपर्यास्तृतनवनीतवन्मृदुतरतूलगर्भं शरच्चन्द्रचन्द्रिकावद्धवलतल्पे पार्श्वपरिवर्तनकुद्भवा भवतु तत्रापि तं रोदयेदेव सा संपत् । तथा सत्स्वपि तस्याऽऽसमन्तात्षड्रसान्वितभक्ष्यभोज्यलेह्यचोष्यपेयपदार्थेषु तेभ्यः स्वल्पतरैकग्रासोऽपि तस्योदरगर्ते सुखं न प्रविशेत् । केवलं क्षुत्क्षामकण्ठः सन्निर्दिष्टपदार्थबद्धदृष्टिः पिशाचवदवस्थितिं कुर्यात्स मानुषः । तस्य चित्तमहर्निशमसीमचिन्ताभराक्रान्तमस्वस्थमेव तिष्ठेत् । सोऽयमुपवर्णितः संतापः समष्टिः स्याच्चेत्तेन जनतायाश्चित्ते शिवेतरपरिणामिन्यः कुकल्पनाः स्वैरं प्रादुर्भवेयुः । तदनुसारेणोच्छास्त्रवर्तनानि बाहुल्येन सर्वत्र स्युः । तैश्चान्ते सर्वथाऽधःपातमन्तरेणान्यत्किं स्यात्तद्वक्तव्यं सदसद्विवेकशालिना धीमता नरेण । धर्मस्य नाम्ना सर्वत्राधर्मस्ताण्डवं निरङ्कुशं विदध्याच्चेत्तदुत्पन्ना तामसी संस्कृतिरेव जगद्धितकरीति विपर्यस्ता मतिरुदेति । तस्यां विचार्यमाणे तामससंस्कृतेर्नियमाः सर्वप्रसिद्धाधुना

कालपुरुषेण प्रसभं प्रक्षिप्तश्चण्डो दण्ड एव । स्वीयधर्माचारपरित्यागस्यायं कटुतरः परिणामः । निरङ्कुशाधिकारसत्तोद्भूतमदवशतोऽद्भुतान्नियमान्नूतनान्स्वैरं प्रकटीकृत्य प्रजानां परिपीडनं, स्त्रीसमूहस्य समुन्नतिमिषेण धर्मबाह्यानां रुचिवैचित्र्यैकमूलानां प्रमाणशून्यानामवनत्युदर्काणां वर्तननियमानां समाजे सर्वत्र येन केनापि कुप्रयत्नेन प्रसारणं विधाय तासां परिवञ्चनं, स्त्रीणां परिरक्षणस्य भारः शास्त्रेण बाल्ये पितरि तारुण्ये भर्तरि वार्धक्ये पुत्रे च निक्षिप्तः । तदभावे ज्ञातावुपदिष्टः । परं पितैव स्वीयपुत्र्या न्याय्यं धनाद्यपहृत्य स्वैरवर्तनमनुमतं कुर्याच्चेत्प्रमत्तः पुत्रः स्वां मातरं दास्ये कर्मणि नियुञ्ज्याच्चेत्, दुरदृष्टतः पतिरहितानां सतीनां तत्तत्कुलोत्पन्नैः पुंभिर्यथासामर्थ्यं परिपालनं नानुष्ठितं चेत्तत्तत्कुलादिषु विद्यमानायाः स्थिरचरसंपदो विध्वंसकान्नियमान् ( कायदे ) विधातुं तामसी प्रवृत्तिर्जायतेऽधिकृतेषु राजपुरुषेषु । तादृशैरधार्मिकैर्नियमैस्तासां स्त्रीणां शीलपरिरक्षणं स्वस्वधर्मप्रवणता च सिध्येदिति न भ्रमितव्यम् । अपि तु तयोर्ह्रास एव भवितेति ज्ञेयं निश्चयेन । अस्यानर्थस्य हानावुपायस्तु स्वस्वधर्मानुसारं वर्तनं स्वीयसदाचारानुल्लङ्घनं चायमेव नान्यः कोऽपि । यानि कुलादीनि नित्यनैमित्तिकेषु धर्मकर्मसु कुलधर्मकुलाचारेषु च पारम्परिकेषु यथासंभवं संपाद्विनियोगं श्रद्धया विदधति, दीनानाथप्राणिनां यावच्छक्यं पोषणादिकं कुर्वन्ति, सतां पात्रभूतानां योगक्षेमाभ्यां विमुखानि न भवन्ति तेषां कुलादीनां प्रागुक्ता संपत्सर्वेषां परितृप्तानां जीवानां मङ्गलाशीर्भिः परिपुष्टा भूत्वा चिरं स्थास्यति । एतद्विपरीता त्वकस्मात्केनापि निमित्तेन भूतपूर्वतां नातिक्रामतीत्यत्र किमाश्चर्यम् । यां हि भूरादिलोकवर्तिनीं विभूतिमुपभोक्तुं वयमिच्छामः स स लोको पूज्येन देवेन निर्मितः । ततः स्वस्वविहितधर्माचरणेन लोकनिर्मातुर्भूम्नो देवस्य परितोषोऽवश्यं विधेयः । तर्ह्येवाऽऽत्मनो योगक्षेमौ निराबाधौ सेत्स्यतः । तस्मात्सर्वाग्रे सर्वेश्वरः सर्वैः सर्वात्मना समर्चनीय इत्यावेद्यालं कुर्म इति शम् ॥

---

( अथ विप्राणां धार्मिकावस्थाविमर्शः )।

महापदानि कत्थसे न चाप्यवेक्षसे परम् ।<br>
प्रयास्यतां किमास्यते समुत्थितं महद्भयम् ॥

अथाचिन्त्यानन्तज्ञानशक्तिमता विश्वसृजा चराचरमिदं जगद्विरचय्य तस्मिञ्जगत्यन्योन्यविरोधिगुणधर्माणो ये ये पदार्था विनिर्मितास्तदन्तर्भूत एवायं ब्राह्मण इति नाम्ना व्यवह्रियमाणः पदार्थः । यद्यपि मनुष्येभ्यस्तस्य पार्थक्याभावात्पृथङ्-

निर्देशमकृत्वा मनुष्य इतिशब्देनैव निर्देशः कर्तुमुचितस्तथाऽपि ब्राह्मणपरिव्राजकन्यायेनायं निर्देशो बोध्यः । ब्राह्मणो मनुष्यः सन्नपि न सामान्यं मनुष्यः । यत एकजातीयानामपि पदार्थानां तत्तदसाधारणगुणधर्माभ्यामवान्तरभेदोऽनुभवसिद्धः सर्वत्र । गजाश्वगोमहिष्यादीनां पशुत्वाविशेषेऽपि तत्तद्गुणधर्माणां पृथक्त्वेन तेषां भिन्नभिन्ना जातयः प्रत्यक्षासिद्धाः । रम्भाचविन्योरश्वतथनन्दितवोर्बिडालव्याघ्रयोर्दन्तिवराहयोः केसरिग्रामसिंहयोर्हंसबकयोः पिककाकयोर्बर्हिकुक्कुटयोः साम्यबाहुल्येऽपि गुणा धर्माश्च तेषां पृथगेव सन्त्यसाधारणाः । तद्वन्मनुष्यवाडवयोः शिरःपाण्याद्यवयवाकारसाम्येऽपि तयोरसाधारणानां गुणानां धर्माणां च भेदात्पार्थक्यमपरिहार्यम् । नन्वितरेभ्यो मनुष्येभ्यो ब्राह्मणेष्वेव पृथग्गुणधर्माः कुतः सन्ति । कथं च ते भिन्नाः संजाताः । किं वस्तुतस्ते भिन्नाः सन्ति किंवा तथाऽभिमानः परम् । उच्यते । तत्राऽऽदाविदमेकं शास्त्रीयं तत्त्वं मनसि दृढं धार्यम् । यन्मनुष्यजात्यन्तर्भूता ब्राह्मणक्षत्रियवैश्यशूद्रा वर्णा एवमवान्तरभेदाश्चास्मिन्भारते वर्ष एव कर्मभूमौ विशेषतो मन्यन्ते नेतरत्र । यद्यपीतरदेशेषु सामान्यतस्तथा प्रसिद्धिः स्यात्कदाचिदथापि सा प्रसिद्धिस्तत्र यौनाहारादिव्यवहारं प्रमाणतो न प्रतिबध्नाति । यतस्तत्र नात्रत्यवद्वर्णजातिविवेक औत्पत्तिकः श्रुत्यादिप्रमाणसिद्धः । तत्र हि जात्यपेक्षया बौद्धिकार्थिकोत्कर्षावेव समधिकतया सत्काराहौं श्रूयेते । भारते त्वनादिकालादारभ्य निर्दिष्टः सर्वोऽपि व्यवहारो वर्णजातिनिबन्धनः प्रचलितः । प्रमाणतोऽधिगतत्वाच्च स भारतीयानामेवासाधारणो धर्म इति ।

अथ ब्राह्मणेषु तदितरमानवेषु च गुणानां धर्माणां च वैलक्षण्यं कथं जातमिति विमृश्यते । ईश्वरेण यदेयं सृष्टिर्निर्मिताऽथवा जगन्नियामकशक्तेः स्वभावानुसारेण तन्नियन्त्र्येदं जगदाविर्भूतं तदा मानवेतरजीवशरीरवन्मानवशरीरमप्ययोनिसंभवमेव संजातमित्यत्र न संदेहः । यद्यप्येकैकस्यां योनावनेकजीवोत्पत्त्यनन्तरमिदं जगत् 'अपरस्परसंभूतं किमन्यत्कामहैतुकम्' स्त्रीपुरुषसंसर्गाज्जातं काममूलकमेव नान्यकारणकामिति वक्तुं शक्यम् । तथाऽपि तत्प्राक्तन कामहेतुकमित्यवश्यं वाच्यम् । अत एव यावच्छरीराणां जननी भगवती विश्वंभरा जनकश्च पर्जन्य इति प्रत्यक्षासिद्धं वस्तुतत्त्वं हातुमशक्यं केनापि । पर्जन्यभूतधात्र्योः संयोगे निर्वृत्त इयं सर्वंसहा गर्भिणी भूत्वा तस्या उदरात्सर्वसत्त्वानां शरीराणि समुत्पद्यन्ते । तेषु कानिचिदविलम्बेनैवोत्पद्यन्ते कानिचिच्च विलम्बेन जायन्त इत्यन्यदेतत् । दूर्वातृणादिकं वस्तुजातं गर्भाशये चिरं न तिष्ठति पञ्चषैरेवाहोभिस्तस्योद्गमो भवति । तदपेक्षया

वीरुद्गुल्मादीनां महतां तरूणां च समुत्पत्तावुत्तरोत्तरं प्रभूतः कालोऽपेक्ष्यत इति सुप्रसिद्धम् । स्थावरशरीरालम्बनोऽयं विमर्शः । जंगमशरीरमनुलक्ष्य विचारे क्रियमाणे तदुत्पत्तेरप्ययमेव प्रकारः परिदृश्यते । अचरशरीरवच्चरशरीराण्यपि पृथिव्या एवोत्पद्यन्ते । अचरशरीरै रत्नगर्भायां सर्वतो व्याप्तायां तेषां मूलिकास्वेव चरदेहानामुत्पत्तेरुपक्रमो भवति । मनुष्यादीनां देहेषूद्गतानां केशलोमनखादीनां भूमावुत्पन्नानां चौषधिवनस्पतीनां यथा साम्यं विद्यते तथाऽस्माकं केशादिषु जायमानानां यूकालिक्षादीनां वनस्पत्योषध्यादीनां मूलेषु प्रभवतां कृमिकीटदर्दुरादीनां साम्यं ज्ञेयम् । अनयैव रीत्योत्तरोत्तरं शरीराणामुन्नतिर्भूत्वा पृथिव्याः सकाशादेव जरायुजस्वेदजाण्डजोद्भिज्जेति चतुर्विधं शरीरजातं समुत्पद्यते । तच्च यथोत्तरोत्तरं समधिकज्ञानशक्त्युपेतं सञ्जायते तथा तस्यायोनिजोत्पत्तिरप्युत्तरोत्तरं चिरेण कालेन भवति । एवं योनिजसृष्टेः प्राक्काले समुत्पद्यमानानां शरीराणामप्युत्पत्तिर्दीर्घेणैव कालेन जायते । न योनिजशरीरादिव द्रुतं संभवति । एतावता निखिलजीवशरीराणां जनयित्री भूमिः, जनयिता च पर्जन्य इति स्थितम् । अत एव ' मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम् । संभवः सर्वभूतानां ततो भवति भारत ॥ सर्वयोनिषु कौन्तेय मूर्तयः संभवन्ति याः । तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता । ( १४।३४ ) इति यद्भगवतोक्तं तदवितथम् । अनया मौलिकदृष्ट्याऽवलोकिते न केवलं मनुष्या अपि तु वृक्षादयः स्थावरा अपि सहोदरा एव । यत एकस्या एव मातुः पितुश्च सर्वेऽपि शिशवः सन्ति । अथापि विशिष्टो व्यवहारस्तेषां न समानः । ज्ञानं गुणाः कर्माणि च नैकरूपाणि । किंच तेषु परस्परं विरोधोऽपि दृश्यते । स विरोधश्चैतन्यांशे न किंतु जडांश [illegible] जडांशः प्रभिन्नो भवति न चैतन्यांशः । स तु सर्वत्र सम एव । जातिर्वर्णो वा प्रकृतेः कार्याणां धर्मः । यथैकस्मादेव पितुरुत्पन्नानां सुतानां [illegible]ऽपि विभिन्नप्रकृत्या तेषां भेदः स्वाभाविकस्तथा प्रकृतिजन्यशरीरेषु यो भेदः स प्रकृतिप्रयुक्तो न पुरुषप्रयुक्तः । पुरुषशब्दार्थोऽत्र चैतन्यं बोध्यम् । अतस्सर्वेषां भिन्नभिन्नकार्याणां मूलकारणं प्रकृतिस्तस्मात्तत्स्वरूपेऽपि भेदेनावश्यं भाव्यमेव । कार्ये हि दृश्यमाना गुणधर्माः 'कारणगुणाः कार्यगुणमारभन्ते' इति प्रत्यक्षप्रमाणसिद्धनियमात्कारणेऽप्यवश्यं सन्तीति वाच्यम् । अतः सृष्टावुपलभ्यमानभेदस्य कारणभूतायां प्रकृतावस्तित्वमपरिहार्यम् । तस्मा[illegible] [illegible]कराजकृतामसेति

त्रयः प्रकाराः कथिताः । सृष्टिर्हि त्रिविधा दृश्यते । तथा हि—केषुचिद्वस्तुषु ज्ञानसुखयोराधिक्यमुपलभ्यते । केषुचिद्दुःखप्रवृत्त्योः केषुचिच्चाज्ञानमोहयोः प्राचुर्यं प्रतृष्यति । अत एव गीतासु गुणत्रयविभागयोगाख्ये चतुर्दशाध्याये षष्ठसप्तमाष्टमश्लोकैः सत्त्वरजस्तमसां स्वरूपं कार्यं चोक्त्वा नवमश्लोके ' सत्त्वं सुखे सञ्जयति रजः कर्मणि भारत । ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत ' इत्युक्तं भगवता ।

नन्वयं भेदो यदि प्रकृतिमूलको नान्यहेतुकस्तर्हि पुरुषेण सह तस्य संबन्धाभावादयं सात्त्विकोऽयं राजसोऽयं तामसः पुरुष इति प्रसिद्धो व्यवहारः कथमुपपद्यते । तत्त्वतस्तस्य तेषां च संसर्गो नास्त्येव । अत एव सांख्या औपनिषदाश्च ' पुरुषस्तु ( चैतन्यं ) पुष्करपलाशवन्निर्लेपः ' इत्यसङ्गत्वं तस्य प्रतिपादयन्तीति चेत् । अस्योत्तरं भगवतैव ' सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः । निबध्नन्ति महाबाहो देहे देहिनमव्ययम् । अहंकारविमूढात्मा कर्ताऽहमिति मन्यते ' इति प्रदत्तमस्ति । अर्थात्प्रमादप्रयुक्तगुणसंसर्गतोऽयं पुरुषः सात्त्विको राजसस्तामसो वेति व्यवहारः । एवं प्रकृत्युपादानकानि चराचरप्राणिनां शरीराणि । तैश्च सहाविवेकतस्तादात्म्याभिमानधारिणश्चेतना जीवा इत्युभावपि यथासंभवं सात्त्विकराजसतामसशब्दैरभिलप्येते ।

इत्थमेकस्मादेव पितुरुत्पन्नेष्वपि भिन्नप्रकृतिष्वपत्येष्विवाद्वितीयपरमेश्वराधिष्ठातृकायां सृष्टौ त्रैविध्यस्योपलब्धिर्नानुपपन्ना । एवं त्रिविधायास्तस्याः कालदेशपरिस्थित्यादिभिरनेकेऽवान्तरप्रकाराः सर्वप्रसिद्धा भाविका एव । उक्तगुणत्रयानुसारेण प्राणिभिः कृतानि दैहिकवाचिकमानसिकानि कर्माण्यपि त्रिविधानि भवन्ति । सात्त्विकजीवेभ्यो निष्पन्नानि कर्माण्यपि सात्त्विकान्येवेत्यर्थाज्ज्ञानप्रधानानि सुखदातॄणि च स्युरन्ततः । स्वस्यान्येषां वोपद्रवकारीणि तानि न भवेयुः । राजसजीवकृतानि कर्माणि राजसानि प्रवृत्तिप्रधानानि ज्ञेयानि । तानि कर्तुरन्येषां च प्रायो दुःखदायीनि भवन्ति । सात्त्विककर्मभिर्यथा तत्कर्तुरन्येषां च सदा सुखं जायते न तथा राजसकर्मभिः सुखं सिध्यति । अशुभोदर्काणि तानि भवन्ति । तामसजनेभ्यो निष्पन्नानि कर्माणि तामसान्यज्ञानप्रचुराणि ज्ञेयानि । तामसकर्माणि तत्कर्तारमन्यं च जनं तत्संबन्धिनं मोहमदिरापानप्रमत्तं विध्वंसोन्मुखं च कुर्वन्ति । अत एव ' सात्त्विकैः पुण्यनिष्पत्तिः पापोत्पत्तिश्च राजसैः । तामसैर्नोभयं किंतु वृथाऽऽयुःक्षपणं भवेत् ' इत्युक्तं पञ्चदश्यां श्रीमद्विद्यारण्यस्वामिवर्यैः ।

गीतासु च भगवता—पूजाजपयज्ञतपोज्ञानकर्मकर्तृबुद्धिसुखधृत्याहारादीनां सात्त्विकराजसतामसप्रकारानुकूलत्वात् 'न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः । सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः' इत्यनेन वचनेन जडायाः सृष्टेस्तत्संसर्गेण च तन्मयभूतस्य जीवसंघस्य सात्त्विकराजसतामसभेदैस्त्रैगुण्यस्योपसंहारः कृतः । तेनैकस्मादपि कारणादुत्पन्नं कार्यजातं प्राकृतिकगुणभेदेन त्रिविधं तदनुसारेण च कर्माण्यपि त्रिविधानि भवन्तीति सिद्धम् । इत्थं सृष्ट्यन्तर्भूतानां चेतनानां जीवानां जडानां च शरीरादीनां पदार्थानां कृतेऽपि वर्गीकरणे तद्वृषट्के प्रत्येकस्मिन्नपि वस्तुनीतरौ द्वौ गुणौ स्त एव । देवदत्तः सात्त्विक इत्युक्तौ तस्मिन्रजस्तमसोरंशौ न स्त इति न । अपि तु सत्त्वमाधिक्यमित्येव तस्यार्थः । यतः सात्त्विकेऽपि देवदत्ते कदाचिद्राजसी प्रवृत्तिस्तामसश्च मोह उपलभ्यते । तथा राजसेऽपि जीवे ज्ञानसुखमोहाः प्रसङ्गविशेषे दृश्यन्ते । एवं तामसेऽपि चेतने ज्ञानसुखप्रवृत्तिदुःखानि सत्त्वरजसोः कार्याणि कदाचित्पर्यायेण दृग्गोचराणि भवन्ति । अतः 'प्राधान्येन व्यपदेशा भवन्ति' इति न्यायोऽत्र सर्वत्र बोध्यः । तदुक्तम्—"वैशेष्यात्तद्वादः" इति ।

अत्रेदं बोध्यम् । चेतनाचेतनेषु वस्तुषु विद्यमानानां केषामपि स्वाभाविकानां गुणानामुपचयापचयौ तदनुकूलप्रतिकूलैराहारविहारादिभिर्विधातुं शक्यौ । तथा हि—कंचन प्रकृतितः सात्त्विकं जनं समधिकं सात्त्विकं विधातुमीहा चेत्तदर्थं तस्मै प्रत्यहं सात्त्विक एवाऽऽहारो देयः । सात्त्विकान्येव कर्माणि तेन कारयितव्यानि । सात्त्विकज्ञानादिना यथा तस्य सम्यक्परिचयः स्यात्तथा यत्नो विधेयः । एवं कृते सति तस्मिन् स्वतःसिद्धः सात्त्विको गुणः क्रमश उपचितो भवेत् । विपर्ययेण तमेव सात्त्विकं नरं राजसं तामसं वा विधातुं स्पृहा चेद्राजसतामसाहारादियोजनया स्वाभाविकात्सात्त्विकात्तं प्रच्याव्य राजसं तामसं वा कर्तुं नैवाशक्यम् । संप्रतीदं नैवाप्रसिद्धम् । कश्चन प्रवक्ता सात्त्विकश्चेत्स्वीयसात्त्विकेन मधुरभाषितेन श्रोतॄणां मनःसु क्षणमात्रं वा भवतु शान्तिमुत्पादयति । शरीरादिषु पुलकोद्गमप्रसादस्मितादीनि सात्त्विकानन्दचिह्नान्याविर्भावयति । तदानीं राजसतामसस्वभावानामपि श्रोतॄणां स्वाभाविक्यो राजसतामसवृत्तयः स्वल्पकालं यावदपि शान्ता भवन्ति । स एव वक्ता राजसश्चेद्वैपरीत्येन सात्त्विकानपि तान्स्वीयवीररसप्रधानेनात्युत्कटेन भाषणेन क्षणं क्षुब्धानपि कर्तुं शक्नोति । तेषां शोणितमतितप्ततैलवत्तदानीमन्तश्चञ्चलतां धत्ते । बाहू प्रकर्षेण स्फुरतः । तुण्डान्यारक्तानि विकटानि च दृश्यन्ते ।

चक्षूंषि विस्फारितानि भवन्ति । सर्वेऽपि श्रोतारः क्षणमात्रं तदानीं प्रवृत्त्युन्मुखा जायन्ते । तामसविषयेऽप्येवमेवावगन्तव्यम् । मद्यादिमादकपदार्थपानव्यसनासक्तस्य विवेकिनोऽपि पुंसो बुद्धिभ्रंशः सर्वनाशश्च कथं भवतीत्येतदुच्चकुलीनस्यापि सुरापानासक्तस्य नरपशोर्दुरवस्थावलोकनेनेदानीं ज्ञातुं शक्यम् । तस्माद्यद्यपि त्रिगुणमयी सर्वाऽपि सृष्टिर्यद्यपि च तदन्तर्गतायां प्रत्येकस्यां व्यक्तौ सत्त्वाद्यन्यतमो गुणः प्राधान्येन तिष्ठति तथाऽप्यनुकूलप्रतिकूलाशनविहारादिभिस्तस्योपचयापचयौ कर्तुं शक्याविति स्थितम् ।

स्थिते चैवमिदानीं मानुषजातिसंबद्धो विमर्शः प्रस्तूयते । जागतिकाः सर्वेऽपि चेतनाचेतनपदार्था उक्तरीत्या त्रिगुणाश्चेत्तर्हि मनुष्योऽपि त्रिविध इत्यर्थादायातम् । स च तथाऽस्तीति प्रत्यक्षतः सिद्धमेव । नहि सर्वेऽपि मानुषाः समानस्वभावा उपलभ्यन्ते । केचन सात्त्विका दृश्यन्ते । पुनरन्ये राजसा अपरे तामसाः । तेष्वपि पुनः स्वभाववैचित्र्यं दरीदृश्यते । न सर्वेऽपि सात्त्विका राजसा तामसा वा जनाः सदैकस्वभावा अपि तु रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषस्ते सन्ति । इदं स्वभाववैचित्र्यं सर्वत्रोपलभ्यते । तद्भारत एवास्ति नेतरत्रेति नैव, अपि तु यत्र यत्र मानुषा वसन्ति तत्र तत्र तन्नियतं वर्तत एव । यद्यपीदं तत्स्वभाववैचित्र्यं देशकालपरिस्थित्यनुसारेण तत्तद्देशीयभूतकालिकवर्तमानकालिकजनानामाचारविचारतश्च जातमित्यापाततो ज्ञायते तथाऽप्यन्येनापि केनचिन्मुख्येन हेतुना भाव्यम् । यतो नानाहेतुकं कार्यमिति नियमः प्रसिद्धोऽस्ति । तत्कारणं च स्वभावसिद्धस्य तत्तत्सात्त्विकादिगुणस्याऽऽनुकूल्यं प्रातिकूल्यं वेति ज्ञेयम् । अत एव विवेकवन्तो नरा आनुवंशिकान्संस्कारान्विशेषतः संमानयन्तीति प्रसिद्धं सर्वत्र । तेन हि पारम्परिकाहंकारान्नातिरिक्ता जातिः परिरक्षिता भवति । तस्याः संरक्षणं स्वकर्मैकमात्रप्राप्यायाः संसिद्धेराद्योपायः । सा संसिद्धिरेव भगवदुपदिष्टाऽपि येषामनभिमता तन्मते सा प्रसिद्धिर्दत्तजलाञ्जलिः स्यादिति । अस्मिन्भारते वर्षेऽथवा भूलोके प्रत्नतर नेहसि सृष्टिनियमानुसारतः शतपर्वामारभ्य पशुपर्यन्तमुत्तरोत्तरं क्रमश उच्चशरीरनिर्माणानन्तरं दीर्घेण कालेनेतरजीवमनुष्यदेहोऽपि पितृभ्यामन्तरेणोत्पन्नः । केषांचित्कीटदेहेषु तथा पक्षिणां पशूनां देहेषु च यद्वत्प्रकारद्वयमुपलभ्यते तद्वन्मनुष्यदेहेष्वपि स्त्रीपुंसभेदेन द्वौ प्रकारौ जातौ । तत्र स्त्रीदेहे पुंदेहाद्यथा पार्थक्यमस्ति तथा तयोर्धर्मेष्वपि भेदो वर्तते । पुरुषो हीश्वरवद्बीजप्रदाता पिता । स्त्री तु मूलप्रकृतिवद्गर्भं धारयित्री माता । गर्भं सम्यक्पोषयित्री परिपूर्णावस्था-

र्या प्रसवित्री पराधीनदशायां नैसर्गिकप्रेम्णा स्वीयाङ्गजरसेन संवर्धयित्री सर्वतः सर्वथा संरक्षित्री स्वभावसिद्धमधुरशिक्षितेन तं सुसंस्कृतं कुर्वती च वर्तते । इत्येवं कष्टातिशयं विषह्यापि शिशोः सुखदाञ्या जनन्या अनन्तोपकृतीरस्मृत्वा कृतघ्नतया ये नराधमास्तस्यै दुःखं ददति पश्वपेक्षयाऽप्यधमानां तेषां क्वान्तर्भावः कार्य इति न जानीमः ।

आस्तां नामेदं प्रस्तुतं वदामः । प्रागुक्तरीत्या सृष्टेर्नियत्यनुसारमयोनिसंभव-स्त्रीपुंसशरीरनिर्मितेरनन्तरमीश्वरीयसंकेतानुसारेण तेषां संयोगतो योनिजा संततिर्भवति स्म । सा त्वयोनिजसंतत्यपेक्षया शीघ्रमेवाभवत् । प्रारम्भे निष्फलसंसर्गेच्छेदानी-मिव नाऽऽसीत् । धार्मिकाणि सामाजिकानि स्वभावसिद्धव्रीडाया बन्धनानि चोत्सृज्य प्राचुर्येणेदानींतनकुशिक्षणशिक्षितकामुकस्त्रिय इवाभिसारिकान्यायेनानुक्षणं पुरुषस्पृहाया बलिर्भूत्वा स्वीयं गर्भधारणसामर्थ्यं कुलीनत्वं च विध्वस्तं कर्तुमुद्युक्ता नाऽऽसंस्ता-दात्विक्यः स्त्रिय इति पशुपत्नीरवलोक्यानुमीयते । अर्थादृतुमती योषिदेव गर्भस्य धृत्यै पुंसंसर्गमिच्छन्ती केवलं तदर्थमेव पुंसा सहोचितरीत्या संगता भवति स्मेति भाति । एवं संसर्गस्य वैफल्याभावाद्भाव्यमाना संततिरपि सुदृढा समर्था निरामया दीर्घायुश्चाऽऽसीत् । नेदानीमिव ' जायस्व म्रियस्व ' इति क्रियाद्वयहेतु-कुप्रयत्नवतीति ज्ञेयम् ।

इयं मानुषी योनिर्न केवलं पश्वादीतरयोनिवद्भोगयोनिः । अपि तु कर्मयो-निरपि विशेषतः । यतो मनुष्येष्वीश्वरकृतनियमेनैवेतरेषु केष्वपि भूलोकोत्पन्नप्राणि-ष्वव्यक्ताया विशिष्टबुद्धेः संप्राप्तिः सिद्धाऽस्ति । तेन कोऽहं कथं किमर्थं चा-त्राऽऽगतोऽस्मि किमिदं मया क्रियते किमवश्यं कार्यमित्यादेः सम्यग्विमर्शः कर्तुं शक्यते मानवेन । तस्मिन्कामपि क्रियां बुद्धिपूर्विकां विधातुं सामर्थ्यं वर्तते । अत एव पश्वादिवत्केवलमाहारविहारादिकं देहधर्मजातमनुसृत्येतरा अप्यावश्यका अना-वश्यकाश्च क्रियाः करोति मनुष्यः । तासां कर्तृत्वस्य चाभिमानं धारयति । मत्कृतस्य कर्मणः फलं ममैव स्यादितीच्छति च । एवंप्रकारेण स कर्मभिर्बद्धो भवति । अर्थात्पशुपक्ष्यादितिर्यग्योनिगतजीवानामिवायं मानुषो जीवो न केवलं दैवा-धीनः किंतु स्वीयप्रयत्नेन दैवमनुकूलं प्रतिकूलं वा विधातुं समर्थः । तस्मिन्सा योग्यताऽ-स्तीत्यत्र न कोऽपि संदेहः । अत एव स सृष्टेरारम्भात्पश्वादिवन्नैकस्यामेवावस्थायां तिष्ठति, अपि तु स्वस्योन्नत्यै यथाबुद्ध्यादिसामर्थ्यं प्रयतते ।

अत्रेदमवधार्यम् । सृष्ट्यारम्भे येऽयोनिसंभवा जीवाः संजातास्त एव परमेष्ठिनो मानसपुत्राः । चतुराननेनार्थाद्विश्वसृजा मनुष्यादीनामुत्पत्त्यै तेभ्यः सत्पथप्रदर्शनार्थं च ते मानसपुत्रा विनिर्मिताः ।

तद्यथा—अहं प्रजाः सिसृक्षुस्तु तपस्तप्त्वा सुदुश्चरम् ।
पतीन्प्रजानामसृजं महर्षीनादितो दश ॥
मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् ।
प्रचेतसं वसिष्ठं च भृगुं नारदमेव च ॥
एते मनूंस्तु सप्तान्यानसृजन्भूरितेजसः ।
देवान्देवनिकायांश्च महर्षींश्चामितौजसः ॥

तथा तैरेव मरीच्यादिभिर्मम मानसपुत्रैर्ममाऽऽज्ञामनुसरद्भिर्दीर्घतरकालानुष्ठिततपःसमुद्भूतसर्वसामर्थ्यसंपन्नैः ' यक्षराक्षसपिशाचगन्धर्वाप्सरोसुरनागसर्पसुपर्णपितृविद्युदशनिमेघरोहितेन्द्रधनुरुल्कानिर्घातकेतुज्योतिस्तारानक्षत्रकिंनरवानरमत्स्यपशुपक्षिमृगमनुष्यव्यालकृमिकीटपतङ्गयूकालिक्षामक्षिकामत्कुणदंशमशकस्थावरतृणदूर्वादर्भगुल्मलतावृक्षौषधिवनस्पतिकुल्यासरित्सरःपर्वतप्रभृति स्थावरं जङ्गमं च त्रिविधं जगद्यथापूर्वं संसृष्टम् । तेषां तपसाऽर्जितं सामर्थ्यं बुद्धिश्चास्मदपेक्षयाऽत्यन्तं समाधिका शुद्धा सम्यक्चाऽऽसीत् । यद्यपि वयमिव मानवदेहोपेतास्ते तथाऽप्युक्तहेतोस्तेषां मनांस्यतिगभीराणि प्रसन्नानि समुदात्तानि चाऽऽसन् । नास्माकमिव मलिनाभिर्वासनाभिस्तेषां सदसद्विवेकसामर्थ्यं क्षीणतां गतमासीत् । न चान्तःकरणं कलुषीकृतमभूत् । अपि तु पवित्राभिः शुभाभिर्वासनाभिस्तेषां तत्सामर्थ्यं परिपुष्टमासीत् । मनश्चातीव निर्मलं सुविचारशीलं चाभूत् । अत एव तेषां मनसा विचाराः शारीराः कृतयश्च नास्माकमिव बाह्यानित्याशु[illegible]ध्यवलम्बना बभूवुः । अपि त्वध्यात्मालम्बना विश्वनिर्मातारं चाद्वितीयमात्मानमनु[illegible]क्ष्य प्रवृत्ता भवन्ति स्म । नास्माकमिव तेषां चित्तमनेकैराशापाशैरितस्तत आकृष्टं सद्दुर्बलं सर्वदा क्षुब्धं चाऽऽसीत् । न चास्माकमिव तेषां चित्तममावश्यकक्षुद्रपदार्थेषून्मुखं स्वप्नेऽप्यभवत् । नाप्यस्माकमिव तेषां प्रतिक्षणं बाह्यवस्त्वपेक्षाऽऽसीत् । तेषामाहारविहारौ च नास्माकमिव कष्टसाध्यावास्ताम् । तेनास्माकमिव तेषां शक्तिस्तदर्थमेव क्षीणा नाभूत् । नैवास्माकमिव तेषां निरामयादीनां जीवनविघातकानां केषामपि सर्वथा त्याज्यपदार्थानामहर्निशमपेक्षाऽऽसीत् । नास्माकमिव तेषां प्रतिपदमतिभीषणाकारयाऽविर्जीवनकलहेन दुरवस्था कदाऽपि संवृत्तेति तेषां सत्त्वगुणप्रधानमन्तःकरणं सद्योन्नता-

वस्थं प्रसन्नमेवाऽऽसीत् । इत्थं स्वयं स्वास्थ्यमनुभवन्तस्ते महर्षय इतरेषां जीवानां स्वास्थ्यमुद्दिश्य विमर्शं कृत्वा तदुपायं विधातुं समर्था इति परमेश्वरप्रेरणया सृष्टिकर्तुर्नियत्यैव वा धर्म एव तदुपाय इति तेषां चित्ते प्रस्फुरणं बभूव । ततस्तदुपायस्य तैः साङ्गोपाङ्गं वर्णनं विश्वसृट्कृपया कृतम् । क्रमेण वैखर्या वाण्या तेषां मुखेभ्यः सुनिर्गतो दिव्यानां शब्दानामनाद्यनन्तः पवित्रतमो राशिरिव वेदः । तस्मादेवास्माकं कर्तव्यस्याकर्तव्यस्य चाधिगमो भवति । ते एव कर्तव्याकर्तव्ये धर्माधर्मशब्दाभ्यामभिलप्येते । स च धर्मोऽत्यन्तं प्राचीनतमः । न निसर्गसिद्धन्यूनाधिकदोषवन्मनुष्यप्रवर्तितेतरधर्मादिवदर्वाचीनः । विश्वसृट्सर्वज्ञचेतनोद्भावितत्वात् ३ तदुपदिष्टानि तत्त्वान्यबाधितान्येव । अत एवासौ सनातनो वैदिको धर्म इत्युच्यतेऽस्माभिः । तदुक्तं भगवत्पूज्यपादजगद्गुरुश्रीमदाद्यशंकराचार्यैः—'जगतः स्थितिकारणं प्राणिनां साक्षादभ्युदयनिःश्रेयसहेतुर्यः स धर्मो ब्राह्मणाद्यैर्वर्णिभिराश्रमिभिश्च श्रेयोर्थिभिरनुष्ठीयमानः' 'यं प्रति यः शास्त्रेण विधीयते स तस्य धर्मो भवति न तु येन यः स्वनुष्ठातुं शक्यते । चोदनालक्षणत्वाद्धर्मस्य' इति धर्मलक्षणं प्रयोजनं तदधिकारी चोपदिष्टः । भगवताऽपि गीतासु—'तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ । ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि' इत्युक्तम् ।

तस्यास्य सनातनवैदिकधर्मस्य प्रवृत्तिनिवृत्ती इति द्वौ पन्थानौ वर्तेते । तत्र प्रवृत्तिमार्गप्रवर्तकाः प्राङ्निर्दिष्टा मरीचिप्रमुखा महर्षयः । सनकसनन्दनसनातनसनत्कुमाराद्यो मुनयो निवृत्तिमार्गोपदेशकाः । मरीच्यादिभिर्ऋषिभिर्योनिसंभवाः प्रजा उत्पाद्य ताभ्यो यथाधिकारं प्रवृत्तिमार्गस्योपदेशः कृतः । सनत्कुमारादिभिर्मुनिभिस्तदन्तर्गतेभ्य एव केभ्यश्चिद्विरक्तेभ्य उत्तमाधिकारिभ्यो निवृत्तिमार्ग उपदिष्टः । इत्थं जगन्नियन्तुरिच्छानुसारेण सनातनवैदिकधर्मप्रवर्तकायोनिसंभवमानसमरीच्यादिमहर्षिभ्य एवाऽऽर्यसंस्कृतेर्मानवसमाजनियमस्य च प्रारम्भो जात इति स्थितम् । 'अत एव सृष्ट्यारम्भसमये मनुष्यप्राणिनो भृशं पशुतुल्या आसन् । ततः क्रमश एव ते संस्कृता बभूवुः । आदौ तेषामवस्था पश्वपेक्षया सम्यङ्नाऽऽसीत् । परमग्रे स्वीयबुद्धिसामर्थ्येनैव दोषज्ञाः सन्तः पशुभ्यः पृथग्विधाः संवृत्ताः' इत्यादिकं यत्केषांचिज्जल्पनं तन्निर्मूलत्वादुपेक्ष्यमिति ज्ञेयम् ।

ननु नैमित्तिकप्रलयसमयेऽध्यापकप्रभृतीनां सर्वेषामेव विनष्टत्वात्तदनन्तरं प्रवृत्तायां सृष्टावुत्पद्यमानानां जनानां वेदार्थज्ञानोपदेशसाधनस्याभावात्कथं ते वैदिकं कर्म कुर्युः । तेन विना च कथमिव त उक्तप्रवृत्तिमार्गपथिका भवेयुरिति चेदुच्यते—

तत्राष्टाशीतिसाहस्रा मुनयो गृहमेधिनः।
पुनरावर्तिनो बीजभूता धर्मप्रवर्तकाः॥
सप्तर्षिनागवीथ्यन्तर्देवलोकसमाश्रिताः।
तावन्त एव मुनयः सर्वारम्भविवर्जिताः॥
तपसा ब्रह्मचर्येण सङ्गत्यागेन मेधया।
तत्र गत्वाऽवतिष्ठन्ते यावदाभूतसंभवम्॥
यतो वेदाः पुराणानि विद्योपनिषदस्तथा।
श्लोकाः सूत्राणि भाष्याणि यच्च किंचन वाङ्मयम्।
वेदानुवचनं यज्ञो ब्रह्मचर्यं तपो दमः॥
श्रद्धोपवासः स्वातन्त्र्यमात्मनो ज्ञानहेतवः।

इति च्छान्दोग्योपनिषदः पञ्चमाध्यायान्तर्गतपञ्चाग्निविद्याप्रकरणस्थश्रुतिप्रमाणक-याज्ञवल्क्यस्मृतेस्तृतीयाध्यायगतस्मृतिवचनजातप्रमाणकमिदं प्रागुक्तं वक्ष्यमाणं चार्थ-जातमतो न शङ्कास्पदमित्यवधेयम्। प्राकृतिकाया अस्याः सृष्टेर्वास्तविकं रहस्यं यत एतादृशं श्रुतिस्मृत्यादिप्रमाणसिद्धमुपपत्त्युपपन्नं चातो वेदराशिसदृक्षः परमगभीरार्थयुतो मनसाऽप्यचिन्त्यरचनोऽतिमहान्ग्रन्थः पुराकाले कथमाविर्भूत इत्यत्र नाऽऽश्चर्यावसरः। यदि कैश्चिद्विषयासक्तैः कामलोभादिसमाक्रान्तैर्बहिर्मुखैरप्यात्मानं सर्वज्ञंमन्यैः पुरुषैर्विर-चितोऽभविष्यत्तर्ह्येव महदाश्चर्यप्रदर्शनमुचितमभाविष्यत्। किंतु जगदीश्वरानुग्रहेणानु-वृत्तैः पुण्यैः पूर्वसंस्कारैः सुसंस्कृतेभ्यस्त्रिकालज्ञेभ्य ऋषिभ्योऽविच्छिन्नपरम्परयाऽस्माभिः संप्राप्तः स ग्रन्थराजः। अतस्तेनोपदिष्टालौकिकश्रेयस्करधार्मिकतात्त्विकज्ञानमुद्दिश्य ससंदेहाश्चर्यख्यापनमतीवायुक्तम्। किंतु श्रद्धापूर्वकं देशकालाद्यनुसारतस्तदुपदिष्टकर्त-व्याचरणमेव भारतीयानामस्माकं यथासंभवमावश्यकम्। केषांचिदुच्छास्त्रस्वैरविचारशीलानां पल्लवग्राहिपाण्डित्येन पण्डितंमन्यानां वा सृष्टेः परिवर्तनं पूर्वोत्तरजन्मपरम्परा चासं-मतेति कतिपयसृष्ट्यन्तर्गतवस्तुविषये यथोक्तमाश्चर्यं प्रतिभाति। तथाऽऽश्चर्यं सृष्टे-रनादित्वं जीवस्य पूर्वोत्तरजन्मास्तित्वं च प्रमाणतो मन्वानानां वैदिकानामस्माकं नैव भासते। तद्वत्तैर्यानि गूढतराणि वेदोपवर्णितानि तत्त्वानि यथावन्नाधिगम्यन्ते तान्यस्माभिः सलीलं ज्ञायन्ते। आस्तां नामेदम्। प्रकृतं ब्रूमः। वेदादावयमाद्यो वर्ण इत्यभिलप्यमानो ब्राह्मणस्तेषामाद्यर्षीणां संततिः। तैर्ऋषिभिः सह ऋषिप-त्न्योऽपि तिर्यक्प्राणिनां स्त्रिय इव प्रथममयोनिसंभवा एवोत्पन्नाः। ताभ्यश्चापरस्प-रसंभूता सृष्टिरभवत्। तदारभ्य दांपत्यसंबन्धतः सृष्टिः प्रवृत्ता। सृष्ट्यारम्भे पुंवेद-

स्थितोर्जधातोरेव स्त्रीगर्भाशये वसतिमन्तरेण काश्चित्प्रजाः संजाता इति पुराणादि-प्रमाणग्रन्थेभ्योऽवगम्यत इति तदानींतन्याः प्रजाया एकेनैव प्रकारेणोत्पत्तिर्भाव्येति नियमस्यासंभवात्प्रथमं स्वल्पकालं यावदयोनिजा । ततः केवलं पुरुषवीर्यजा । पश्चादयोनिजानां पुंसामयोनिजस्त्रीभिः सह संसर्गजा । अनन्तरं योनिजस्त्रीपुरुषाणां संभोगजा प्रजा प्रचलितेत्युक्तेर्नासंभवः सर्वथेति भाति ।

एतावता भूलोकोत्पन्नपार्थिवशरीरयुतानां चराचरजीवानां मातेयं पृथिवी पिता च पर्जन्यः । आद्या सृष्टिरत्वयोनिसंभवा । तदनन्तरभाविनी सृष्टिश्च योनिजा । सा च सात्त्विकराजसतामसभेदैस्त्रिविधेति सिद्धम् । सृष्ट्यारम्भे समुत्पन्नैर्ऋषिभिः स्वीयत्रिविधप्रजानां मध्ये याः सात्त्विकाः प्रजास्ता ज्ञानसंपादनतद्वर्धनग्रन्थसंरक्षणे-त्यादिकर्मसु विनियुक्ताः । सत्त्वयुतराजसानां तासां साधूनां संरक्षणमसाधूनां विनाश इत्येतदैश्वरं कर्माऽऽज्ञापितम् । तमोगुणोपेतराजसाः प्रजाः सर्वोपयोगिधनधान्याद्यर्जने तद्वर्धने स्वभावतो निरुपद्रवाणां नितान्तोपयोगिनां गवादिपशूनां पालनपोषणादिकर्मणि च विनियुक्ताः । रजोयुततामसप्रजाभ्यस्तूत्तरोत्तरोत्कृष्टकर्मकर्त्रीणां तिसृणां प्रजानामधीना भूत्वा तदुक्तं कर्म कुरुतेत्युपदेशः कृतः । इयमेव वर्णानां सुव्यवस्थेति ज्ञेयम् । अत एव—

स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥
स्वभावनियतं कर्म सदोषमपि न त्यजेत् ।
प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥
प्रकृतेरन्यथाभावो न कथंचिद्भविष्यति ।
प्रकृतिः सेति विज्ञेया स्वभावं न जहाति या ।
अकुर्वन् विहितं कर्म निषिद्धं च समाचरन् ।
प्रसजंश्चेन्द्रियार्थेषु नरः पतनमृच्छति ॥
येनास्य पितरो याता येन याताः पितामहाः ।
तेन यायात्सतां मार्गं तेन गच्छन्न दुष्यति ॥

इत्यादिभगवद्वचनजातं संगच्छते ।

अस्याः सृष्टेः पूर्वं समुत्पन्नैरयोनिसंभवैरत एव योनिसंभवमानवापेक्षया समधि-कशक्तिज्ञानसंपन्नैरीश्वरकल्पैरधिकारिभिर्मरीचिप्रमुखैर्मुनिभिस्तपःसामर्थ्यात्तेषां हृदीश्वरानु-ग्रहात्प्रस्फुरितेन वैदिकज्ञानेनैवेयं निर्दिष्टा वर्णादिव्यवस्था तत्तद्धर्मादेर्व्यवस्था च

कृता । पूर्वानुभवसंस्काराः प्रलयसमये बीजरूपेण स्थिताः पुनरुत्पत्तिसमये स्फुरन्तीत्यस्यानुभवः प्रत्यहं सुप्तोत्थितस्य मनुष्यमात्रस्य जाग्रद्दशायां वर्तत एव । तेन कथं तैर्ऋषिभिरत्यन्तप्राक्काले कृतेऽपि यत्नाधिक्येऽस्माभिरद्याप्यनधिगतानि सृष्टेर्गूढतमानि तत्त्वानि लीलयैव साक्षात्कृतानि । तदानींतनानां च जनानां वेदादिषूपवर्णिता संस्कृतिश्च कथं संजातेत्येवमादयः प्रश्ना एव नोत्पद्यन्ते ।

इदानींतना अपि ब्राह्मणास्तेषामेवाऽऽर्षीणां संतत्यन्तर्गताः स्वभावतः सात्त्विका जीवाः । तेषां नैसर्गिकं सत्त्वगुणं यथोत्तरोत्तरं परिपुष्टं कुर्युस्तादृशान्येवाध्ययनाध्यापनादिकर्माणि तेभ्य आज्ञापितानि तत्पूर्वजैः । आनुवंशिकसंस्कारोद्भूतमिष्टं फलमुत्तरोत्तरं जायमानया प्रजयाऽऽप्तव्यमिति जन्मना सहैव ब्राह्मणादिवर्णानां प्रामाणिकी व्यवस्था तैरेव स्थिरीकृता । तेन च प्रत्येकं वर्णः स्वस्वकर्तव्यविषये जाग्रदासीत् । वैदिकधर्मीयेयं भारतीया प्रजा च चिरायैहिकसुखस्य सम्यगनुभवमग्रहीत् ।

किंत्वीशानियत्येयं सृष्टिरित्थं निबद्धाऽनुभूयते यत्स्वभावविरुद्धे यत्नेऽननुष्ठित एव सा स्वभावं न जहाति । तत्रैव सुस्थिरा भवति । तदविरोधिनि प्रयत्ने सति सा परिपुष्टस्वभावा जायते । अर्थाद्यावत्सृष्टपदार्थस्वभावस्योपचयोऽपचयो वाऽनुकूलप्रतिकूलयत्नाभ्यामेव कर्तुमर्ह इति निश्चीयते। यत्नशैथिल्ये तु स स्वीयं कार्यं करोत्येव । अत एव 'प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति' इति यद्यपि भगवतोक्तं, यद्यपि च 'मरणं प्रकृतिः शरीरिणां विकृतिर्जीवितमुच्यते बुधैः' इति महाकवेरुक्तिः, तथा श्रुतावपि 'मृत्युनैवेदमावृतमासीत्' इत्युपवर्णितं तथाऽपि सदसद्विवेकवता पुरुषेण यत्नातिशयोऽवश्यं विधेय इत्यत्रैव तस्य वचनसमूहस्य तात्पर्यम् । यतः—

आबाल्यादलमभ्यस्तैः शास्त्रसत्संगमादिभिः ।
गुणैः पुरुषयत्नेन स्वार्थः संपद्यते हितः ॥

पौरुषेण जिता दैत्याः स्थापिता भुवनक्रियाः ।
रचितानि जगन्तीह विष्णुना न च दैवतः ॥

जगति पुरुषकारकारणेऽस्मिन् कुरु रघुनाथ चिरं तथा प्रयत्नम् ।
व्रजसि तरुसरीसृपाभिधानां सुभग यथा न दशामशङ्क एव ॥

इति श्रीरामं प्रति तत्कुलगुरोर्वसिष्ठमहर्षेरुपदेशो दृश्यते । अत एव 'मृत्युर्बुद्धिमताऽपोह्यो यावद्बुद्धिबलोदयम्' 'जीवन्नरो भद्रशतानि पश्येत्'

' उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीर्दैवेन देयमिति कापुरुषा वदन्ति ।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या यत्ने कृते यदि न सिध्यति कोऽत्र दोषः "
इत्यादिवचनजातमाप्तोपदिष्टं संगच्छते । तत्र शास्त्रितं पौरुषमपेक्षितं नोच्छा-
स्रमित्यवधेयम् । अन्यथा ' विनायकं प्रकुर्वाणो रचयामास वानरम् ' इतिवद-
निष्टापत्तिः प्रसज्येत ।

एतावता मृत्योर्विनाशस्य वा सृष्टिप्रकृतित्वेन तदन्तर्गतं वस्तु प्रयत्नेनैव संरक्षितव्यं धीमतेति संसिध्यति । सत्यप्येवं तत्राप्येका चमत्कृतिर्वर्तते । जनिमापन्नं तत्तद्वस्तु यद्यपि विनाशोन्मुखं सदैव धावति तथाऽप्यनुक्षणं कृतप्रयत्नेन सा तस्य गतिः प्रतिरुद्धा सती मृत्युकृताक्रमणात्प्राक्तत्तद्वस्तु स्वेष्टानुकूलं कर्तुं शक्यम् । ये च ' जायते, अस्ति, वर्धते, विपरिणमते, अपक्षीयते, विनश्यति, इति षड् भाववस्तुनो विकाराः प्रत्यक्षसिद्धाः शास्त्रेऽनूदितास्तेऽपि युगपन्न जायन्ते । क्रमेणैव भवन्ति । ' शनैः परिणामिनो हि भावा ऋते चितिशक्तेः ' इति पातञ्जलसूत्रादवधार्यते । तेन वस्तुनो वृद्धिरपि तस्य विनाशोपक्रम इति वाच्यमेव । यतो विनाशः पदार्थमात्रस्य प्रकृतिरिति सिद्धान्तोऽस्ति । तस्योल्लङ्घनं केनापि कदाऽपि कर्तुमशक्यमेव । ब्राह्मणादीनां शरीराण्यपीमं निर्दिष्टन्यायं नातिक्रामन्ति । यथा कश्चन मानुषः पूर्णयौवनावस्थायां स्वेष्टं सर्वमैहिकं सुखमनुभवन्नपि पर्यवसाने क्षयं गच्छति । अर्थात्तस्य सा सुखावस्था भाविनः क्षयस्यैवाऽऽरम्भ इत्यपि वक्तुं पार्येत । तद्वद्वैदिकधर्मीयैर्भारतीयैः स्वस्वधर्मानुसारं वर्तनं विधाय यत्सुखमुपभुक्तं तद्भाविनो ह्रासस्यैव मूलबन्ध इति भणनमन्तरा नान्या गतिः । विप्राः स्वभावतः सात्त्विका इति यद्यपि सत्यं तथाऽपि तेषां तादृशगुणोपरि परिस्थितेः परिणतिर्भूत्वा निसर्गसिद्धः स गुणः शनै रजस्तमोभ्यां कालुष्यमुपगत इत्यपि नानृतम् । क्षत्रियादयोऽपि वर्णा नैतस्मान्न्यायाद्बहिर्भूताः । सनातनार्यधर्मीयजनमनःसु यावत्तद्धर्माच्छादनं दृढं तिष्ठति तावद्ब्राह्मणादीनां तत्तद्गुणस्य परिपोष एवोत्तरोत्तरं भवति । यदा तु केनापि हेतुना तदाच्छादनमपगच्छति शिथिलं वा जायते तदा तेषां सात्त्विकादिगुणानामपि स्वरूपपरिवर्तनं भूत्वा चिराय शोच्यतराऽवस्था तान्प्राप्नोति । ईशनियत्यनुसारेण तथाभवनमपरिहार्यं किल । सनातनार्यधर्मीयजनानां सात्त्विकादिगुणेष्वद्ययावदनेकानि रूपान्तराणि संवृत्तानि । अनेकै राजसतामसजीवैः स्वीयप्रयत्नातिशयेन सुपरिस्थितिर्वारं वारं विपर्यासं नीतेति विप्रादीनां सात्त्विकादिगुणेष्वपि प्रतिक्षणं जायमानदुःसहसंकरेणेदानीं तेषामीदृशी दुरवस्था दरीदृश्यते । यामनुपदमेव वयं प्रदर्शयिष्यामः । प्रतिबन्धेऽसत्यग्रेऽपि सैवमेव विपर्यासं यायादिति तर्कयामः ।

परं चेतनाचेतनवस्तुवद्राजसतामसवृत्तयोऽपीशनियत्याक्रमणान्नैव निर्मुक्ताः । सात्त्विकवृत्तिष्विव राजसादिवृत्तिष्वपि परिस्थित्यनुसारेण परिवर्तनं भवत्येव । तेन च तेषां राजसादीनां नैसर्गिकस्वरूपेऽपि सहसा न्यूनाधिकभावेन परिवृत्तिर्जायते । न्यूनाधिकभावः समुद्रजल एव वर्तत इति नापि तु तत्तत्प्राण्यन्तःकरणेऽपि स भवति । तथैव जगदन्तर्गतं वस्तुमात्रं तेन नियन्त्रितमिति बोध्यम् । तदुक्तं महाकविना कालिदासेन–' नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ' इति । अनेन न्यायेन राजसादीनां प्राणिनां बलस्य ह्रासात्तेषां प्रयत्नशैथिल्ये सात्त्विकानां च बलवर्धनस्येतिहासोऽपि भारतादिप्रमाणग्रन्थेभ्य उपलभ्यते । ' इतिहासस्य पुनरावृत्तिर्जायते ' इत्युक्तावप्ययमेव वास्तविकोऽर्थो वर्तते । भगवद्व्यासप्रमुखा आधिकारिकाः पुरुषश्रेष्ठा अपीमं भगवन्नियतेर्नियममनतिक्रम्यैव पुरा कलियुगीयवर्णनं कर्तुं समर्था अभूवन् । भारतादीतिहासेषु पुराणादिषु च यत्कृतत्रेताद्वापरकलियुगीयं वर्णनं समासतः सप्रपञ्चं चोपलभ्यते तदीशनियतेरेव सदृष्टान्तं निरूपणं ज्ञेयम् । भगवतः कुत्रापि कदाऽप्यकुण्ठितगतीनां नियतीनां सम्यगधिगम एव सर्वज्ञत्वम् । तच्च सर्वज्ञत्वं स्वीयधर्माचरणेन विशुद्धस्वान्तस्य निरुपाधिके स्थाने स्थित्वा दीर्घं विमर्शं कुर्वतः पुंसः स्त्रियो वाऽऽत्मसात्कर्तुं नैवाशक्यम् । बहिर्ज्ञानसाधनैर्जात्वप्यज्ञायमानानि यानि त्रिकालाबाध्यानि तत्त्वानि तान्यस्मत्पूर्वजैरधिगतानि तानि यथाविधिधर्माचरणेन सुदीर्घतपसा च तैर्ज्ञातानीत्यवधार्यम् ।

वर्तमानकाले ब्राह्मणादीनां या परिस्थितिर्दृग्गोचरीभवति सा तूपर्युक्तनैकविधस्थित्यन्तरतः संवृत्ताऽस्ति । यद्यपि सा स्वाभाविकीत्यपरिहार्या तथाऽपि तस्याः स्वाभाविकत्वं प्रयत्नैरपनेतुं प्रतिरोद्धुं वा शक्यमस्त्येव । तस्योपायस्तु यथाशक्ति वैदिकाचारविचारानुष्ठानमयमेव । धर्मस्तु स्वभावं प्रतिबध्नातीत्यत एव स स्वभाववादिनामप्रियः संवृत्तः ।

अथापि सांप्रतिक्यां निकृष्टावस्थायां विद्यमानैरपि ब्राह्मणैः स्वीयप्रयत्नैर्नाशतस्तत्स्वाभाविकत्वं निरोद्धुं पार्यत इति ज्ञापनार्थमेवायं स्वल्पः प्रयत्नो बोद्धव्यः । अथ विप्राणां सद्यःपरिस्थितेर्दिग्दर्शनं कृत्वा प्रतिज्ञातवस्तुपूरणं कुर्मः ।

यदि मरीचिप्रमुखाणां महर्षीणां नियोगानुसारेणाद्ययावत्तत्संतत्यन्तर्गता मेध्यतमाङ्गोद्भवा ब्राह्मणाः केवलं रजउपसर्जनसत्त्वगुणप्राधान्येन स्थातुं समर्था अभविष्यंस्तर्ह्ययं भूलोको देवलोकोऽभविष्यत् । किंतु मनुष्याणां देवतात्मना परिणति-

भवनं परोत्कर्षासहिष्णूनामिन्द्रादिदेवानां नेष्टमिति त एव पुनः पुनर्मानवोत्कर्षमन्तरायैः प्रतिबध्नन्तीति पुराणादिग्रन्थेभ्योऽवगम्यते । 'अप्सरसः प्रेष्य ताभिस्तपस्विनः प्रति विषयेष्वासक्तान् कारयन्ति देवाः' इति यद्वर्णनं पुराणादिषूपलभ्यते तस्याप्यन्योत्कर्षप्रतिबन्धे तात्पर्यं ज्ञेयम् । तत्राप्सरसां निर्देश उपलक्षणार्थः । अर्थात्तदितरस्यापि प्रतिबन्धकस्य संग्रहस्तेन सिध्यति । इतरापेक्षया कामिनी प्रधानं मोहोत्पत्तौ साधनमतः प्राधान्येन निर्देशा भवन्तीति न्यायेनाप्सरसामुल्लेखस्तत्र बोध्यः । अत एव 'कामिनीजिज्ञासायाः कार्यमात्रं प्रति प्रतिबन्धकत्वम्' इति तार्किकाणां घण्टाघोषः ।

अभ्युदयार्थं यत्नं कुर्वतां पुंसां यथा मोहोत्पादकं किमपि वस्तु प्रतिबन्धकं भवति तथा प्रतिकूलः कालोऽपि प्रतिबन्धको बोध्यः । यद्यपि कालः सर्वसाधारण एव न स्वतोऽनुकूलः प्रतिकूलो वा तथाऽपि सापेक्षतया तथा भवति सः । तथा हि—यदा सात्त्विकानामनुकूलो भवति तदा राजसानां तामसानां वा प्राणिनां प्रतिकूलो भाति । यदा तु तेषामनुकूलस्तदा सात्त्विकानां जनानां प्रतिकूलो भाति । सत्यप्येवं वैषम्ये तन्निरसनपुरःसरं कालानुकूल्यापादनं सर्वथा स्वीयप्रयत्नाधीनमित्यवगन्तव्यम् । यतः कालस्वरूपे न किमपि पार्थक्यं, तत्तु मनुष्यकृतावेवास्ति । अतः कालस्याऽऽनुकूल्यं प्रातिकूल्यं वौपाधिकं मानवकृतिसापेक्षं न निरपेक्षमिति ज्ञेयम् ।

इत्येवमस्मिन् प्रपञ्चे तदधीशस्य नियतिरहर्निशं नृत्यतीति योजकानां महर्षीणामाद्या श्रेयस्करी योजना तथैव नातिष्ठत् । अत एवायं भूलोकः सुरलोकोऽभूत्वा मर्त्यलोक एवावास्थितः । नैतावदेव । अपि तु यथा यथा तस्य वयो वर्धते तथा तथा स विनाशोन्मुख एव भवति । यद्वद्वृक्षादयः पदार्था यथा यथा वर्धन्ते तथा तथा तेषामादिमं सुकोमलं रम्यमानन्दकरं च स्वरूपं विलुप्य खरतरं कर्कशमरमणीयं च रूपं संदृश्यते तद्वद्ब्राह्मणादीनां वर्णानां यथा यथा वृद्धिः संवृत्ता तथा तथा तेषां मौलिकं परिशुद्धं स्वरूपं तिरोहितं भूत्वा कृत्रिमं तुच्छं रूपमिदानीमागतं परिदृश्यते । वर्णव्यवस्था च मूलतो रमणीयाऽपि केषांचित्स्थूलदृशाममनोहरा प्रतिभासते । तस्य कारणमिदमप्येकमस्ति ।

ब्राह्मणा मूलतः सात्त्विका इति सत्यमेव । तैरुत्तरोत्तरं समाधिकसत्त्वसंपन्नैर्भाव्यम् । एतदर्थमेव प्रत्नैर्महर्षिभिस्ते शमदमतपःशौचब्रह्मचर्याहिंसाध्ययनाध्यापनादिभिर्धर्मैर्विशेषतो नियमिताः । किंतु तत्प्रतिकूलवृत्तिभी राजसतामसप्राणिभिस्तेषां स

सात्त्विको गुणः स्वीयोच्छृङ्खलप्रयत्नैः कान्दिशीकः कृतः । किंवेश्वरनियत्यैव स प्रागवदविकृतो नातिष्ठत् । अपि तु मुहुर्मुहुः स रजस्तमोभ्यां भृशं कलुषितो भूत्वा किमपि विचित्रं स्वरूपं प्राप्तः । अद्य ' वयं ब्राह्मणाः ' इति ब्रुवन्तो ये मानवा दृश्यन्ते प्रायस्तेषु शमस्य स्थाने विक्षेपः । दमस्य स्थान इन्द्रियाणां स्वैरं वर्तनम् । तपःप्रदेशे दाम्भिकत्वम् । अन्तर्बाह्यशौचस्थानेऽशुचित्वम् । ब्रह्मचर्यस्थान उच्छास्त्राचरणम् । अध्ययनस्थाने पाण्डित्याभिमानः । अध्यापनस्थाने ज्ञानविक्रयः । अमेध्याशनमपेयपानमित्येवमादिकं भृशं शोच्यं परिवर्तनं संवृत्तं यद्दृश्यते तन्नाकस्माद्युगपज्जातम् । किंत्वनेकपरिवर्तनैः क्रमशः संवृत्तम् । कस्यापि राष्ट्रस्येतिहासोऽन्ततस्त्रिचतुरसहस्रसंवत्सरपर्यन्तमेवोपलभ्यते । तत्प्राक्कालिकं पुरावृत्तं तु काल्पनिकमेव । अस्माकमस्य भारतवर्षस्येतिहासस्तु ( सांप्रतिका विद्वन्मन्या यमितिहासशब्देनोल्लिखन्ति ) सोऽतीव स्वल्पकालीनः । तस्मादपि ब्राह्मणादीनां मौलिकपरिस्थितौ नैकदा नानाविधं परिवर्तनं संवृत्तमित्युपलभ्यते । तत्तद्धर्मक्रान्तेस्तत्तद्राज्यक्रान्तेश्च समयेऽत्रत्यानां चातुर्वर्ण्यान्तर्गतजनानां स्वीयपरिस्थितौ पृथक्पृथग्विधं परिवर्तनकरणमगत्या भृशमावश्यकमभत् । ज्ञातेतिहासात्प्राक्काले ब्राह्मणादयः कया प्रतिकूलपरिस्थितिस्वरूपया सरण्या कृच्छ्रेण गमनमकुर्वंस्तदीश एव वेत्ति । परं त्वस्य देशस्येदानीं प्रामाणिकत्वेनाभिमतो य इतिहास उपलभ्यते तस्मादपि ब्राह्मणादिषु हठात्परिपतितानां दुःसहापदां बोधो जायते । इच्छायामसत्यामप्यगतिकतया प्रतिकूलपरिस्थित्या सह कीदृग्विधस्तेषां मुहुर्मुहुः संग्रामोऽभवत्तदपि ज्ञायते । तादृशेभ्योऽतिभीषणप्रसङ्गेभ्योऽपि ' वयं ब्राह्मणाः स्मः ' इत्येवं केवलं कथयितुमपि कथमपि जीवद्भिरतैरवस्थितमिदमेव महदाश्चर्यम् । तादृश्यां दुरवस्थायामपि महता धैर्येण बहिर्निष्क्रम्य सत्त्वमत्यजन्त इदानींतनीं निकृष्टावस्थामनुभवितुं ते ब्राह्मणादयो विद्यमानाः सन्तीत्यस्यासाधारणं निदानं तु पुरातनमहर्षिकृतसुव्यवस्था तदन्तर्गतः सत्योऽशश्चेति बोध्यम् । तैराद्यमहर्षिभिर्यथाधिकारमस्मान्प्रत्यनुष्ठातुमुपदिष्टे धर्मेऽनुभवसिद्धः स्थिरः सत्यांशो यदि नाभविष्यत्तर्हीदानीं केवलं गात्रधावनं कथंचित्संध्योपास्तेः प्रदर्शनं तथा वेषो वेदशास्त्राद्यभ्यासोऽध्ययनाध्यापनशीलत्वं दुर्लभतरा शमदमतपआदीनां संपत् । एवमादिस्वरूपः स्वल्पतरो यो धर्मः संप्रति दृश्यते, येन च ' वयं सनातनवैदिकधर्मिणः ' इत्यभिमानं धर्तुं तथा कथयितुं चावसरोऽस्ति किंचित्सोऽपि नाभविष्यत् । अर्थात् ' यदल्पमपि तद्बहु ' इति न्यायानुसारेणैतदप्यधिकमिति संतोष्टव्यम् ।

उत्पत्तिरेव विप्रस्य मूर्तिर्धर्मस्य शाश्वती ।
स हि धर्मार्थमुत्पन्नः...
ब्राह्मणस्य तु देहोऽयं क्षुद्रकामाय नेष्यते ।

इत्याद्याप्तवाक्योपवर्णितप्रकारविसदृशी सद्यःकालीनब्राह्मणानां प्रायशो धार्मिकावस्थेति सत्यमेव । तेषामौत्पत्तिकं सात्त्विकत्वं प्रायशो विलुप्य तत्स्थानं रजस्तमोभ्यां समाक्रान्तमित्यत्र नास्ति विप्रतिपत्तिः । एवमपि तैरात्मनः सुभोदर्कायां प्रागवस्थायां गतुं स्थातुं च प्रयत्नाधिक्यं न कार्यमिति नैव । किंतु येयमिदानीं तुच्छावस्था तेषामागता तत्र त एव कारणमिति न, अपि त्वीशस्य नियतिः । तामनुसृत्य च तेषां विरोधं कुर्वाणा राजसास्तामसाश्च जना इदमप्येकं प्रधानं कारणम् । अतस्तेषां सांप्रतिकीं दुरवस्थां निमित्तीकृत्य तेभ्यो दोषदानापेक्षया तादृगवस्थाप्राप्तौ यानि कारणानि संवृत्तानि तेषां विमर्श एव धर्मदृष्ट्या श्रेयस्करो ज्ञेयः । अद्यतना ब्राह्मणाः केवलं जात्यैव ब्राह्मणाः सन्तीति न वितथम् । अथापि जात्या वा भवतु ते ब्राह्मणा एव स्थिताः । न बौद्धा जैना यवनाः खिस्ता वा संवृत्ताः । इदं किं स्वल्पमस्ति । तेषां मनसि स्वधर्मसत्यतायाः कोऽपि परिणामो नाभविष्यद्यदि तर्ह्ययं त ईदृश्यामप्यवस्थायां नाद्रक्ष्यन्त । तेषां कृपयैवाद्य वेदाः शास्त्राणि च दृश्यन्तेऽस्माभिः । इदं शिवं रहस्यं ब्राह्मणानां तद्यःस्थितिं विलोक्य तद्गोचरप्रतिकूलग्रहवाद्भिर्जनैः कदाऽपि स्मृतिपथापेतं न विधेयं न स्याच्चेद्बुद्धिभ्रंशः । परस्परविरुद्धानां नैकविधपरिस्थितीनामनुभवतस्तेषां मूलस्वभावे प्रचुरं परिवर्तनं जातमस्ति । तेन तेषां सात्त्विको गुणः किंचिदेवावशिष्ट इति सत्यमेव । किंतु यत्र समूलं च विनश्यतीति कुप्रसङ्गः प्राप्त आसीत्तत्र 'सर्वनाशे समुत्पन्ने ह्यर्धं त्यजति पण्डितः । अर्धेन कुरुते कार्यं सर्वनाशो हि दुःसहः' इति न्यायेन ब्राह्मण्यस्य वेदादीनां चांशतः संरक्षणं तेभ्य एव संवृत्तमित्यत्र विवेकिभिरवश्यं चित्तं दातव्यम् । अत एव च येन केनापि निमित्तेनाऽऽपतितायां स्वीययत्नातिशयनिवर्त्यायां शोच्यावस्थायां स्थितांस्तानवलोक्य तेषां विषये तिरस्कारप्रदर्शनं समाजस्य राष्ट्रस्य वाऽभ्युदयेच्छोः कस्यापि सदसद्विवेकशालिनः पुंसः कदाऽप्युचितं न भविष्यति । यतः सांप्रतिक्यां विपन्नावस्थायामपीतरवर्णाद्यपेक्षया ब्राह्मणानां बौद्धिकं नैतिकं च वर्चस्वं केनाप्यङ्गीकर्तव्यमित्यविवादम् । कस्यायं परिणाम इत्यस्य विमर्शस्तेषां धार्मिकमुत्कर्षमसहमानैर्जनैः शान्तेन मनसाऽवश्यं कर्तव्यः । अस्माकं त्वेवं भाति—अयं परिणामस्तेषां स्वधर्मविषयकस्तुत्यतराभिमानस्य, यथाशक्ति वेदशास्त्राद्यध्ययनस्य, यथामति यथावकाशं च धर्माचरणस्य चेति ।

मरीच्यत्रिवसिष्ठवामदेवकश्यपभरद्वाजविश्वामित्रयाज्ञवल्क्यपराशरव्यासहारीतगौतमप्रमुखा दिव्यज्ञानसंपन्ना महर्षयो जगत्कल्याणकारिसनातनवैदिकं धर्मं जीर्णमुद्दिधीर्षवः श्रीमज्जगद्गुर्वाद्यशंकराचार्यसदृक्षा विश्वोत्तरबुद्धिवैभवसमुल्लसिताः परमहंसोत्तमाः, श्रीरामचन्द्रश्रीकृष्णधर्मराजप्रभृतयो धर्मसंस्थापकाः क्षत्रियश्रेष्ठाः, हनुमद्भीष्मभीमार्जुनतुल्या वीरपुरुषाः, रामदासज्ञानेश्वरतुलसीदासतुकारामकल्पा विरागिणो भक्तवर्यास्तथाऽन्येऽपि छत्रपतिशिवरायसदृशा विभूतिमन्तो विशिष्टपुरुषा अस्मिन्भारते वर्षे प्राचुर्येण तत्र तत्राऽऽविर्भूताः सन्तो निःशेषसत्कामदुघं यथाधिकारमनुष्ठानेन साक्षात्परम्परया वा सच्चिदानन्दस्वरूपपरमेश्वरेण सह भेदासहिष्णुतादात्म्यसंपत्तिप्रदातारं भगवन्तमनाद्यनन्तं वैदिकं धर्मं वाङ्मनसकायजैः प्रयत्नैर्यावज्जीवमनुष्ठितैः सर्वथा संवर्धयामासुः । तत्कस्मादित्ययं प्रश्नः कामं विचारार्हः । अस्यानन्तरं यथामतिकृतविमर्शे लभ्येतेति ज्ञेयमिति भाति ।

तात्पर्यं शुद्धसात्त्विका ब्राह्मणा इदानीं विरला एव । ब्राह्मणनामधारिणो जातिब्राह्मणा एव प्रचुराः । स्नानसंध्यापामनादिब्राह्मणजात्युचितधार्मिकविधिप्रदर्शनकर्तारोऽपि न्यूना एव । दक्षिणभागे विशेषतोऽस्मिन्महाराष्ट्रप्रदेशे गृहस्था भिक्षुकाश्चेति द्वैविध्यं ब्राह्मणेषु मरहट्टीयराज्यादारभ्य समधिकं दृश्यते । तत्र गृहस्था एङ्ग्रजराज्यात्पूर्वं सांग्रामिकं कर्म लेखकत्वं चेत्यादीनि कर्माणि कुर्वन्ति स्म । पाश्चात्यराजशासनमारभ्य चतुर्णामपि वर्णानां विशेषतस्त्रैवर्णिकानां कर्माणि तैः स्वीकृतानि । इदानीं तु किमप्यकार्यं कर्म तेषां नावशिष्टमिति सुप्रसिद्धम् । इत्येवं विपन्नावस्थाग्रस्तत्वात्तेषु गृहस्थब्राह्मणेषु स्वधर्माभिमानो गगनकुसुमायमान एवेति भिक्षुकब्राह्मणा अपि निर्भीकाः सन्तः स्वीयपृथुदरपूरणायाऽऽवश्यकं धनादिवस्तुजातं याजनप्रतिग्रहादीनां दृष्टादृष्टविचारं पृष्ठतः कृत्वा संपादयितुं बद्धपरिकराः संवृत्ताः । इत्येवं वैदिकस्यास्य धर्मस्य मुख्याधारभूता ये ब्राह्मणास्तेषां सांप्रतिकी धार्मिकव्यवस्था भृशं निकृष्टा धर्मविघातिका चेत्यविवादम् । सा तथैव स्थिता चेदुत्तरोत्तरं हीनतरा सत्यस्य धर्मस्य जीवनसंदेहमुत्पादयेदिति प्रतिभाति ।

एवमप्ययं सनातनो वैदिकधर्मो द्रुतमेव नामशेषः स्यादिति नैव मन्तव्यम् । यतस्त्रिकालज्ञैरीश्वरकल्पैर्भगवद्व्यासप्रमुखैर्महर्षिभिः सनातनस्यास्य धर्मस्य लयसमयः सुदूरमस्तीति भविष्यं कृतम् । तेन वर्तमानदुरवस्थाया अपि परिवर्तनं भूत्वा पुनरपि वैदिकधर्मस्य सुस्थितिः स्यादित्याशां धर्तुमवसरो वर्तते । किंतु केवलयाऽऽशया किमपीष्टं कार्यं न सिध्यति । तदर्थं प्रयत्नोऽपेक्षितः । प्राचीनमितिवृत्तं सम्यगालोच्य धर्मविषये स्वस्य कर्तव्यं कीदृगस्त्यस्येत्यस्य सुविचारः कार्यः ।

स्वस्मिन्वस्तुतो ये दोषाः स्युस्तान्सारल्येनाङ्गीकृत्य तदुच्छित्त्यै सर्वथा यत्नः कर्तव्यः । इतरे द्वेषं कुर्वन्तीति स्वेनापि तैः सह द्वेषः कार्य इतीदं ब्राह्मणस्याननुरूपमिति विमृश्य स्वीयधार्मिकस्थितेरुत्कर्षार्थं नैकदिग्भिः प्रयातितव्यम् । पूज्याः, परिपतितोऽयं विचित्रः समयः । यत्स्वीया एव मनुष्याः स्वीयधर्मस्यावहेलनां कुर्वन्तीति । तां च यथा न कुर्युस्तथा सुव्यवस्था परिशुद्धाचरणेन पवित्रविचारेण सर्वाधिकधार्मिकज्ञानार्जनेन च संपादनीया । प्रयत्नेन कस्या अप्यवस्थाया विपरिवृत्तिर्भवतीतीयं जगदीश्वरस्य नियतिरस्ति । अतस्तस्यः भरं निक्षिप्य ' अहं ब्राह्मणोऽस्मि ' इति पारम्परिकाभिनिवेशधर्त्रा मानवेन स्वीयधर्मस्योद्धरणार्थमर्थात्स्वस्य स्वराष्ट्रस्य चोन्नत्यै धार्मिकाचरणेनैव प्रयत्नातिशये विधातव्यः । तथा सति स्वधर्मविरुद्धं कियदपि जञ्जालं समुत्थितमपि निष्फल सद्विलीयेत । न तेनास्य सनातनस्य वेदोपदिष्टधर्मराजस्य काऽपि क्षतिः स्यात् । स भूधरवदकम्प्य एवावतिष्ठेत । सनातनो वैदिकधर्म एव भारतीयानामस्माकं सारभूतमैश्वर्यम् । जीवातुरप्ययमेवेति तत्परिरक्षणं पवित्रतममाद्यं कर्तव्यमस्माकमिति ।

ब्राह्मण्यं बहुभिरवाप्यते तपोभि-
स्तल्लब्ध्वा न रतिपरेण हेलितव्यम् ।
स्वाध्याये तपसि दमे च नित्ययुक्तो
मोक्षार्थी कुशलपरः सदा यतस्व ॥

इति श्रीशुकं पुत्रं प्रति भगवद्व्यासकृतोपदेशवाक्यं भारतीयमनूद्यालं कुर्म इति शम् ॥

इति विप्राणां धार्मिकावस्थाविमर्शः ॥

इति श्रीमज्जगद्गुरुकरवीरपीठाधिष्ठितश्रीविद्याशंकरभारतीस्वामि( पं० मा० शास्त्रि )प्रणीतो धार्मिकविमर्शसमुच्चयः समाप्तिमगात् ॥